सिन्दूरद्युतिमुग्धमूर्द्धनि धृतस्कन्धावधिश्यामिके
व्योमान्तःस्पृशि सिन्धुरेऽस्य समरारम्भोद्धुरे धावति ।
जानीमो नु यदि प्रदोषतिमिरव्यामिश्रसन्ध्याधिये-
वाऽस्तं यान्ति समस्तबाहुजभुजातेजःसहस्रांशवः ॥३६॥

सिन्दूरेति । नु भैमि समरस्यारम्भे उद्धुरे उद्युक्तेऽस्य सिन्धुरे गजे धावति सति समस्ता बाहुजाः क्षत्रियास्तेषां भुजातेजांस्येव सहस्रांशवः सूर्याः यदस्तं विनाशमस्ताचलञ्च यान्ति गच्छन्ति तत्प्रदोषतिमिरेण रजनीमुखसम्बन्धिना तमसा व्यामिश्रा मिश्रिता या सन्ध्या तस्या धिया बुद्ध्या भ्रान्त्येवेति वयं जानीमः । वाक्यार्थः कर्म । दिवारजन्योः सन्धौ भवः सान्ध्यो रागस्तद्भ्रान्त्येत्यर्थः । किम्भूते सिन्धुरे । सिन्दूरद्युत्या मुग्धो मनोज्ञः मूर्द्धा यस्य तस्मिन् । तथा धृता स्कन्धावधीत्यन्य श्यामिका स्वाभाविकी कज्जललेपनपङ्कजा वा कालता येन तस्मिन् । तथा उच्चतया व्योमान्तःस्पृशि गगनमध्यस्पर्शिनि । तथा समरारम्भाद्रणदुर्द्धर्षवशात्कोपदुःसहे वा । यदस्तं यान्ति तर्हि सायङ्कालतिमिरसंयुक्तसन्ध्याधियेवेति वा । सन्ध्यापि किञ्चित्कज्जलतुल्यतिमिरयुता सिन्दूरवच्च रक्ता वरुणदिगन्तस्पर्शिनी चेति पूर्व्वोक्तविशिष्टहस्तिदर्शने सति सायं सन्ध्येतिबुद्ध्येव तेजःसूर्य्याणामस्तगमनं युक्तं । एवंविधं गजं दृष्ट्वा सर्व्वेऽपि पलायन्त एवेत्यर्थः । जानीमोऽथ तदेपि पाठे अयमर्थो यदित्यर्थे तदा तदित्यर्थे ज्ञेयः । श्यामैव श्यामिकेति स्वार्थे कप्रत्यये । प्रत्ययस्थादितीत्वं (पा॰ ७ । ३ । ४४) ॥ ३६ ॥

हित्वा दैत्यरिपोरुरः स्वभवनं शून्यत्वदोषस्फुटा-
सीदन्मर्कटकीटकृत्रिमसितच्छत्रीभवत्कौस्तुभं।
उज्झित्वा निजसद्म पद्ममपि तद्व्यक्तावनद्धीकृतं
लूतातन्तुभिरन्तरस्य भुजयोः श्रीरस्य विश्राम्यति॥ ३७॥
सिन्धोर्जैत्रमयं पवित्रमसृजत्तत्कीर्त्तिपूर्त्ताद्भुतं
यत्र स्नान्ति जगन्ति सन्ति कवयः के वा न वाचंयमाः।

हित्वेति। श्रीर्लक्ष्मीरस्य अस्य भुजयोरन्तर्मध्ये विश्राम्यति शोभा च। किं कृत्वा। दैत्यरिपोर्विष्णोः स्वभवनं स्वस्य गृहं उरः हित्वा। तथा तन्निजसद्म पद्ममपि उज्झित्वा। किम्भूतमुरः। लक्ष्म्या त्यक्तत्वात् शून्यत्वलक्षणेन दोषेण स्फुटं आसीदन्तः स्थिरीभवन्तः मर्कटकीटा ऊर्णनाभकीटास्तेषां करणेन निर्वृत्तं तैर्रचितं कृत्रिमं सितच्छत्र इव सितच्छत्रं मण्डलाकारं श्वेतं गर्भाण्डस्थापनस्थानं तद्भवन् तद्रूपीभवन् कौस्तुभाख्यो मणिर्यत्र। किम्भूतं पद्मं। तैर्लूतातन्तुभिः मर्कटीसूत्रैः मर्कटीसूत्रसदृशैः कमलसूत्रैरित्यर्थः। व्यक्तं प्रकटमवनद्धीकृतं बद्धं विसतन्तूनामेव लूतातन्तुत्वेनोक्तिः। परस्परमतिदूरे द्वेऽपि भवने प्रति गतागताभ्यां श्रान्ता सती गृहद्वयं परित्यज्यातिसमीपवर्त्तिनोरस्य भुजयोरेव भवनयोः सुखेन निषीदत्यत्रैव स्थिरीभवतीत्यर्थः। कौस्तुभस्य धवलत्वाद्भूताच्छत्रत्वेन कमलसूत्राणाञ्च सादृश्यात् लूतातन्तुत्वेनोत्प्रेक्षा। लूता स्त्री तन्तुवाये स्यादित्यमरः॥ ३७॥

सिन्धोरिति। अयं सिन्धोर्जैत्रं समुद्रस्य जेतृ पवित्रमुज्ज्वलं पावनञ्च तत्कीर्त्तिपूर्त्ताद्भुतं यशोरूपतडागाख्यं असृजत् सि-

यद्विन्दुश्रियमिन्दुरञ्चति जलञ्चाविश्य दृश्येतरो
यस्यासौ जलदेवतास्फटिकभूर्जागर्त्ति यागेश्वरः ॥ ३८ ॥

र्ग्गमे। यत्र कीर्त्तितडागे जगन्ति स्नान्ति उज्ज्वलीभवन्ति स्नानं च कुर्व्वन्ति। यद्दर्शनविषये के वा कवयः स्फुरन्नूतनार्था अपि वाचंयमा मौनिनो न सन्ति अपि तु सर्व्वेऽपि मौनिन एव भवन्ति इत्यर्थः। अथ च के वयो जलपक्षिणः कवयः। यत्र के जलपक्षिण. के वा तापसा न सन्ति अपि तु महति तडागे बहवः पक्षिणस्तापसाश्च विद्यन्ते। इन्दुर्यस्य कीर्त्तितडागस्य बिन्दुश्रियं अञ्चति प्राप्नोति यदपेक्षया चन्द्रोऽल्पीयानित्यर्थः। अथ च महतस्तडागस्य जलबिन्दुशोभामिन्दुरञ्चति यदीयो बिन्दुरिवेन्दुरित्यर्थः। यस्य च जलं आविश्य प्रविश्येव दृश्येतरो ऽस्मदादिनेत्रयोरविषयभूतोऽसौ जगति विद्यमानः स्फुटिका एव भूर्यस्य स कैलास एव यागेश्वरः स्फाटिकश्रीशिवलिङ्ग-रूपो जलदेवता जागर्त्ति स्फुरति। समच्छायत्वाज्जले क्षिप्तः स्फटिको न दृश्यते इयमेव स्फटिकपरीक्षा। उज्ज्वलतरैतत्-कीर्त्तिकल्लोलप्लावित इव कैलासो न दृश्यते। इन्दुर्जले चा-विश्य जले प्रतिबिम्बितः सन् यद्विन्दुश्रियमञ्चतीति वा अथा-विन्दुरेव यस्य जलमाविश्यादृश्यः स्फटिकनिर्म्मितो यागेश्वरः सन् जलदेवता जागर्त्ति। कीर्त्तिमध्यपाती चन्द्रोऽपि समच्छा-यत्वान्न दृश्यत इत्यर्थ इति वा। स्पृशेदिति वचनात्पर्व्वातिरिक्ते काले समुद्रस्यास्पृश्यत्वात् अस्य तु सर्व्वदा पवित्रत्वात्। समुद्रस्य च भूलोकस्यैव कतिपयस्यैव जनस्य स्नानार्हत्वादस्य तु लोक-

अन्तःसन्तोषवाष्पैः स्थगयति न दृशस्ताभिराकर्णयिष्य-
न्नङ्गेनास्तिलोमाऽऽरचयति पुलकश्रेणिमानन्दकन्दां।
न क्षोणीभङ्गभीरुः कलयति च शिरःकम्पनं तन्न विद्मः
श्रुत्वाप्येतस्य कीर्त्तीः कथमुरगपतिः प्रीतिमाविष्करोति ॥३९॥

वर्णस्तानार्दलात्तस्य वर्णयितुं शक्यत्वादस्य चाशक्यत्वात्तस्य च चन्द्रेकमर्व्वखत्वादस्य च विन्दुरूपचन्द्रत्वात् समुद्रे च श्रीविष्णुरूपाया जलदेवताया: सुप्तत्वादस्य च वागेश्वरस्य जाग्रत्त्वात्। एवंविधो यशस्वी कोऽपि नास्तीति भाव:। वागेश्वर इति असौ जलदेवता जागर्त्ति। असौ का या स्फटिकभूः वागेश्वरः कैलासो जागर्त्तीति। वाचि यमो व्रत इति (पा° ३।२।४०) खचि वाचंयमपुरन्दरौ चेति (पा° ६।३।६९) साधुः ॥ ३८ ॥

अन्तरिति। यस्मात् उरगपतिः शेषः अन्तःसन्तोषवाष्पैरानन्दाश्रुभिः कृत्वा दृशो नेत्राणि न स्थगयति नाच्छादयति। यतस्ताभिर्दृग्भिः एतद्गुणानाकर्णयिष्यन् सन् चक्षुःश्रवस्त्वादश्रुभिर्नेत्राच्छादने गुणानाकर्णनशङ्कया आनन्दाश्रुभिर्दृशो नाच्छादयति। तथा आनन्द एव कन्दो मूलं यस्यास्तां पुलकश्रेणिं रोमाञ्चपङ्क्तिमपि आरचयति करोति। यतः अनस्तिरोमाऽविद्यमानरोमा। तथा सन्तोषात् शिरःकम्पनं न करोति। यतः क्षोणीभङ्गभीरुः। यद्यहं मूर्द्धानं कम्पयिष्यामि तर्हि भूमिः पतिष्यतीति भिया। तस्मात् कारणादेतस्य कीर्त्तीः श्रुत्वा शेषोऽन्तःकरणे समुत्पन्नां प्रीतिं कथं केनान्येन प्रकारेणाविष्करोति प्रकटयति वयं तन्न विद्मः।

आचूडाग्रममज्जयज्जयपटुर्यच्छल्यदण्डानयं
संरम्भे रिपुराजकुञ्जरघटाकुम्भस्थलेषु स्थिरान् ।
सा सेवास्य पृथुः प्रसीदसि तया नास्मै कुतस्त्वत्कुच-
स्पर्द्धागर्द्धिषु तेषु तान् धुतवते दण्डान् प्रचण्डानपि ॥४०॥

आश्चर्यरूपकीर्त्तिरयमिति भावः । सहस्रमुखत्वाद्दृश इति चक्रत्वं ॥ ३८ ॥

आचूडेति । संरम्भे युद्धसम्भ्रमे सति जये पटुरयं राजा रिपवश्च ते राजानश्च तेषां कुञ्जरघटाकुम्भस्थलेषु दूरनिखाततया स्थिरान् शल्यायस्लोहस्य सम्बन्धिनो दण्डान् शरान् प्रासान् वा आचूडाग्रं पुङ्खाग्रं मर्यादीकृत्य यदमज्जयन्निचखान । सा एतत्कर्त्तृका त्वदीया पृथुर्महती सेवा तया सेवया त्वं अस्मै कुतो न प्रसीदसि । किम्भूताय । तव कुचस्पर्द्धागर्द्धिषु कुचसाम्याभिलाषिषु तेषु कुम्भस्थलेषु तान् पूर्व्वोक्तान् प्रचण्डान्दण्डान् धुतवते एतवतेऽपि । येन हि महती सेवा क्रियते तस्मै प्रसन्नीभूयते । अतिशूरोऽयं तस्माद् वृणीष्वेत्यर्थः ॥ ४० ॥

स्मितेति । सा भैमी स्मितश्रिया तं राजानं उपाहसत् हसितवती यतः कीर्त्त्यं वर्णयितुं शक्यं महत्त्वं यस्य एवम्भूतमेव । हि यस्मात् निषधेन्द्रवैभवं नलमाहात्म्यं गिरां पारे वागगोचरं वर्णयितुमपि न शक्यत इत्यर्थः । नलादेतस्य न्यूनत्वादुपहास इत्यर्थः । किम्भूतया स्मितश्रिया । तद्गुणश्रवणात् तदीयगुणाकर्णनसमुत्पन्नेन सुखेन वितीर्णयेव दत्तयेव कृतयेव । तया एकपि

स्मितश्रिया स्वकणिलीयमानया
वितीर्णया तद्गुणशर्म्मणेव सा ।
उपाहसत् कीर्त्यमसत्त्वमेव तं
गिरां हि पारे निषधेन्द्रवैभवं ॥ ४१ ॥

निजाक्षिलक्ष्मीहसितैणशावका-
मसाऽवभाणीदपरं परन्तपं ।
पुरेव तद्दिक्चलनश्रियो भुवा
भुवा विनिर्द्दिश्य सभासभाजितं ॥ ४२ ॥

कृपा नृपाणामुपरि क्वचिन्न ते
नतेन दासा शिरसा रसादृशां ।

श्रोष्ठप्रान्ते लीयमानया संसर्गिण्या । कीर्त्यमिति असद्गुणारोपणार्थसूचकं पदं ॥ ४१ ॥

निजेति । असौ वाणी अपरमन्यं परन्तपं राजानं भुवा पुरेव पूर्व्वमेव विनिर्द्दिश्य दर्शयित्वा तां भैमी अभाणीत् उवाच । किंभूतां तां । निजाक्ष्णोर्लक्ष्म्या शोभयाऽनया हसित एणशावको मृगशिशुर्यया । किंभूतया भुवा । तस्य वर्णनीयस्य राज्ञो दिशा तन्मुखं चलनेन दृक्पातेन शाला याः श्रियस्तासां भुवा स्थानभूतया । किंभूतमेनं । सभया सभार्थ्यैर्मनोज्ञतया सभाजितं दृष्टं पूजितं वा । रिपुतापकारत्वादन्वर्थकनामानं वा ॥ ४२ ॥

कृपेति । हे भैमि ते तव नृपाणां मध्ये कचिदप्युपरि कस्याप्युपरि कृपा नास्ति दासा कष्टं किमप्यवलोकस्यऽपि नेति न

भवन्तु तावत्तव लोचनाञ्चला
निपेयनेपालनृपालपालयः ॥ ४३ ॥
स्वजुत्वमौनश्रुतिपारगामिता
यदीयमेतत्परमेव हिंसितुं ।

युक्तेत्यर्थः । किंभूतानां । लज्जातवशावश्याम्नया नतेन शिरसा रमायां भूमौ दृग्येषां रमां पश्यन्तीति च । अन्यच्च कृपा मा भूत्नाम तावत् किन्तु तव लोचनाञ्चलाः अपाङ्गदृगंशः निपेयः सादरावलोकनार्हः यो नेपालानां देशानां नृपालो राजा तं पिबन्ति सादरं पश्यन्ति एवंभूता अलयो भ्रमरभूता भवन्तु । एनं तावत् कटाक्षैर्विलोकयेत्यर्थः ॥ ४३ ॥

स्वजुत्वेति । स्वजुत्वमवक्रता नम्रत्वं प्रियवादित्वादिरूपा विनीतता च तथा मौनं निःशब्दत्वं वाङ्नियमश्च श्रुतिपारगामिता आकर्णपूर्णता वेदपारगामिता च एवंरूपमतीवातितरां विश्रामविधायि विश्रामकारि विगतश्रामकारि मनसि हितप्रत्ययकारकश्च अलीकपवनाभ्यासवशादा श्रामाभावकारि यदीयमेतच्चेष्टितं परं शत्रुं स्वव्यतिरिक्तश्च सर्वं जनं हिंसितुमेव हन्तुमेव प्राणप्रियधनग्रहणार्थमेव च न तु लक्ष्यधनमात्रप्रयोजनं न सार्जवादिगुणार्जनप्रयोजनं । सोऽस्य वक्रस्सङ्घः महान् अवयोऽतिदीर्घश्च शरः दाम्भिको दम्भेन चरति इति रूपकं । अतिमूढरोऽयमिति भावः । दाम्भिके यावद्वृत्तं तत् सर्वं एतस्य शरे विद्यत इत्यर्थः । दाम्भिकेन यत्क्रियते तदेतच्छरेण क्रियत इत्यर्थ इति वा । दम्भो हिंसा माया च प्रयोजन-

अतीव विश्वासविधायि चेष्टितं
बकर्मदानस्य स दाम्भिकः स्मरः ॥ ४४ ॥
रिपूनवाप्यापि गतोऽवकीर्णितामयं न यावज्जनरञ्जनव्रती ।
भृशं विरक्तानपि रक्तवत्तरान्
निकृत्य यत्तानसृजावसृजद्युधि ॥ ४५ ॥
पतत्येतत्तेजोऽकृतभुजि कदाचिद्यदि तदा
पतङ्गः स्यादङ्गीकृततनमपतङ्गापदुदयः ।

मस्य प्रयोजनमिति (पां ५।१।१०९) ठञ्। तेन चरति वा चरतीति (पां ४।४।८) ठक्॥ ४४ ॥

रिपूनिति। यावन्तो जनास्तावतां रञ्जनं तदेव व्रतं तदस्यास्तीति एवंभूतोऽयं राजा रिपूनपि अवाप्य प्राप्यापि वा अवकीर्णितां चलव्रतत्वं न गतः प्राप्तः। यद्यस्मात् स्वशरीरादिविषये भृशं विरक्तानननुरागिणोऽपि अथ चैनं दृष्ट्वा विगतरुधिरानपि तान् रिपून् युधि निकृत्य बाणैश्छित्वाऽसृजा रुधिरेण कृत्वा रक्तवत्तरान् रक्तवन्तोऽनुरागिणोऽथच रक्तं विद्यते येषु ते रक्तवन्तः अतिशयेन रक्तवन्तो रक्तवत्तरा एवंभूतानसृजत् चकार। वैरिणामपि रञ्जनात् चलव्रतत्वं न जातमित्यर्थः। रक्तवत्तरान् क्तवतुमंतुप् च ॥ ४५ ॥

पततीति। पतङ्गः सूर्यः एतस्य तेज एव कृतभुगग्निः तस्मिन् यदि कदाचित् कस्मिन्नपि समये पतति तदा तर्हि अङ्गी-

यशोऽमुष्यैवोपार्जयितुमसमर्थेन विधिना
कथञ्चित् क्षीराम्भोनिधिरपि कृतस्तत्प्रतिनिधिः ॥ ४६ ॥
यावत्पौलस्त्यवास्तूभवदुभयहरिल्लोमलेखोत्तरीये
सेतुप्रालेयशैलौ चरति नरपतेस्तावदेतस्य कीर्त्तिः ।

कृततमः भृशमङ्गीकृतः पतङ्गानां शलभानां देहदाहलक्षणा या आपदस्तासां उदयो येनैवम्भूत एव स्यात् तत्तेजसाऽतितरां सन्तापवशात् पीडितः स्यात्। एतत्तेजोऽपेक्षया सूर्य्यो हीनो वह्न्यपेक्षया शलभतुल्य इत्यर्थः। तथाऽमुष्य यशः कथञ्चित् केनापि प्रकारेण उपार्जयितुमसमर्थेनेव विधिना ब्रह्मणाऽतिमहान् क्षीराम्भोनिधिरपि तस्यैतदीययशसः प्रतिनिधिरनुकल्पः कृतः कथञ्चित् कृत इति वा। यश इव यशःसदृशमिति वा। मुख्याभावे हि प्रतिनिधिरपि क्रियते। क्षीरादप्युज्ज्वलं अस्य यश इत्यर्थः। एवंविधः प्रतापवान् यशस्वी च कोऽपि नास्तीति भावः। मुख्यापेक्षया प्रतिनिधेर्न्यूनत्वादेकद्वीपव्यापिनः क्षीरोदादशेषद्वीपव्यापिन्याः कीर्त्तेराधिक्याच्च ॥ ४६ ॥

यावदिति। हे भैमि सेतुप्रालेयशैलौ श्रीरघुनाथकृतः सेतुः प्रालेयशैलश्च हिमाचलस्तौ यावत् यावन्तं देशमभिव्याप्य तिष्ठतः यावत्कालं तौ वर्त्तेते वा एतस्य नरपतेः कीर्त्तिस्तावत्पर्य्यन्तं चरति भ्रमति। किंभूतौ सेतुशैलौ। पुलस्त्यगोत्रापत्ययोर्रावणकुबेरयोरवास्तु अगृहभूमिभूतेऽपि वास्तूभवन्तौ गृहभूमित्वं प्राप्ते उभे द्वे अपि ये हरितौ दक्षिणोत्तरे दिशौ तयोः क्रमेण श्यामत्वाच्छुभ्रत्वाच्च रोमरेखा रोमाली उत्तरीयं

यावत्प्राक्प्रत्यगाशापरिवृढनगरारम्भणस्तम्भमुद्रा-
वद्री सन्ध्यापताकारुचिरचितशिखाशोणशोभावुभौ च ॥ ४७ ॥
युद्ध्वा चाभिमुखं रणस्य चरणस्यैवात्मीयस्य वा
बुद्धान्तः स्वपरान्तरं निपततामुन्मुच्य बाणावलीः ।

पूर्वकायावरणवस्त्रं तद्रूपौ । समुद्रबन्धनशिलापरम्परा दक्षिणदिशो रोमस्थानीया । हिमाचलश्च उत्तरदिग्वस्त्रस्थानीयः । तथा प्राक् च प्रत्यक् च आशे प्राचीप्रतीच्यौ दिशौ तयोः परिवृढौ स्वामिनाविन्द्रवरुणौ तयोर्ये नगरे तयोर्यदारम्भणं आरम्भः तस्मिन् स्तम्भयोरिव सुन्दरी मुद्रा आकारो ययोस्तावुभावद्री उदयास्ताचलौ च यावन्तं देशमभिव्याप्य तिष्ठतः पूर्ववत् । किंभूतावद्री । प्रातःसायंसन्ध्ये एव रक्तत्वात्पताकारुची ताभ्यां रचिता निर्मिता शिखायां शिखरे शोणा रक्ता शोभा ययोस्तौ । पैलस्येति । गोत्रापत्ये गर्गादित्वाद्यञ् (पा० ४।१।१०५।) वास्त्रभवदिति । चौ चेति (पा० ७।४।२६।) दीर्घः । उभाववयवौ ययोस्ते उभय्यौ ते हरितौ चेति समासे पुंवद्भावः इति वा ॥ ४७ ॥

युद्ध्वेति । अनेन राज्ञा अरीणां शिरः भूमौ हठात् बलात्कारेण विलोठितं झटिति छेदात् स्फुरद्भ्रमणमभूत् । किम्भूतानामरीणां । आत्मीयस्य अमुष्यायं आत्मीयस्तस्य रणस्याभिमुखं सम्मुखं प्रारम्भमभिप्रेत्य वा बाणावलीः शरपङ्क्तीरुन्मुच्य मुक्त्वा युद्ध्वा वा निपततां बाणपङ्क्तिवर्षणेन युद्धं कृत्वा रणभूमौ पतितानामिति यावत् । अथ च अन्तःकरणे स्वपरान्तरं स्वप्रा-

छिन्नं वावनतीभवन्निजभियः खिन्नं भरेणाथवा
राज्ञाऽनेन हठाद्विलोठितमभूद्भूमावरीणां शिरः ॥ ४८ ॥
न तूणादुद्धारे न गुणघटने नाश्रुतिशिखं
समाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि ।
नृणां पश्यत्यस्य क्वच न विशिखान् किन्तु पतित-
द्विपद्वक्त्रश्वभ्रैरनुमितिरमून् गोचरयति ॥ ४९ ॥

त्मनः परस्य चान्तरं न्यूनाधिकत्वतारतम्यं बुद्धा वा त्वादृशीयस्य चरणस्यैव अभिमुखं बाणावलीरुन्मुच्य निरायुधीभूय निपततां एतच्चरणयोर्दण्डवन्नमस्कारं कुर्व्वतां । किम्भूतं शिरः । रणसम्मुखपक्षे छिन्नं वा बाणैः खण्डितं सद्वाऽवनतीभवत् नतग्रीवं भूमौ पतितं सत् । तथा चरणपक्षे । अथवा निजभियो भरेण स्वीयभयप्राकर्ष्येन वा खिन्नं सत् अवनतीभवत् । द्वितीयपक्षे बलाद् विलोठितं वामदक्षिणभागस्पर्शकारीकृतं । वैरिणो यदि युध्यन्ते तर्हि म्रियन्त एव । ये च विचारका भीरवश्च ते शस्त्राणि परित्यज्य राजानमेव शरणं गच्छन्ति जीवन्तीति । एवकारेणान्यः शरण्यो न विद्यत इति सूचितं । अन्यदपि भाराक्रान्तं नतम्भवति । वा शब्दः प्रत्येकविकल्पे ॥ ४८ ॥

नेति । युद्धकौतुकदर्शिनां नृणां दृष्टिः अस्य विशिखान् क्वच न कस्मिन्नपि तूणादुद्धारे निष्काशने उपादानकाले न पश्यतीति सर्व्वत्र सम्बन्धः । तथा कस्मिन्नपि गुणघटने मौर्व्याः सन्धानकाले न । आश्रुतिशिखं कर्णाग्रं मर्य्यादीकृत्य समाकृष्टौ

दमस्वसुश्चित्तमवेत्य चासिका
जगाद देवीं कियदस्य वच्यसि ।
भण प्रभूते जगति स्थिते गुणै-
रिहाप्यते सङ्कटवासयातना ॥ ५० ॥

क न कस्मिन्नपि मम्मगाकर्षणकाले न। तथा मोचनानन्तरं वियति कस्मिन्नपि गगनदेशे न। तथा कस्मिन्नपि लक्ष्ये वेध-वेधे न। तथा शत्रूनिर्भिद्य ततो निर्गत्य भुवि कस्मिन्नपि भू-प्रदेशे पतितांश्च पश्यन्ति। तर्हि किन्तु पतितानां बाणाघातक्षतमर्म्मवेधवशाद्गतप्राणानां ऽभिद्यानां द्विषतां वचःश्वभ्रैः दृढं प्रहृत्य वहिर्निर्गतशरक्षतछिद्रैः कृत्वा याऽनुमितिरनुमानज्ञानं अमून् बाणान् गोचरयति ज्ञापयति। चेदनेन बाणा न मुक्ता-स्तर्हि तेषां वचसि छिद्राणि कथं भवेयुरित्याद्यनुमितिः। चक्षुः-श्वभ्रैरिति पाठे चक्षुःष्वेव विध्यतीति भावः ॥ ४९ ॥

दमेति। हासयतीति हासिकाऽतिनीचा चेटी दमस्व-सुश्चित्तं तद्दर्शनवाञ्छयानिरपेक्षं तस्मिन्नरक्तं वाऽवेत्य ज्ञात्वा देवीं सरस्वतीं जगाद। हे देवि त्वं अस्य कियत् एतदीयं कि-यच्चरितं वक्ष्यसि वर्णयिष्यसि अपि तु बहुत्वात् प्रत्येकं वर्णयितुं न शक्यत इत्यर्थः। गुणैः सौन्दर्य्यादिभिः प्रभूते महति जगति स्थितेऽपि इह नृपे सङ्कटवासरूपा सम्मर्द्दवसतिरूपा यातना सङ्कटावासेन वा यातना तीव्रवेदना आप्यते प्राप्यते इति भण कथय। सर्व्वे गुणाः सर्व्वं जगत्परित्यज्यास्मिन्नेव सम्मर्द्देन निवसन्तीति एकेनैवकारेण वर्णय। पृथग्वर्णनाऽसामर्थ्यादि-

ब्रवीति दासीह किमप्यसङ्गतं
ततोऽपि नोचैर्यमतिप्रगल्भते ।
अहो सभा साधुरितीरिणः क्रुधा
न्यषेधदेतत्क्षितिपानुगान् जनः ॥ ५१ ॥

त्यर्थः । वाक्यार्थः कर्म । अथ च भूयसि । वर्त्तमाने जगति मध्ये गुणैरिहैव कष्टरूपवयतिपीडा प्राप्यते न तन्यत्र । एतस्मिन्निवासे गुणा उद्विजन्त एवानर्हत्वादेकोऽपि गुणोऽत्र नास्तीति भणित्युपहासः । अस्य कियद्वच्मि कथय । अतःपरं मा स्म वादीः । तस्मान्निर्गुणमेनं गुणित्वेन कियन्तं कालं वर्धयिष्यसीति कथयेति वा । स्थितैरिति पाठे गुणविशेषणं । प्रभूतैरिति च ॥ ५० ॥

ब्रवीतीति । जनः प्रेचकः क्रुधा स्वस्वामिवर्णनविघातसमुत्पन्नेन क्रोधेन इतीरिणो भाषमाणानेतस्य चितिपस्यानुगाननुचरान्न्यषेधत् निवारयामास । इति किं । इह सभायां भैम्या दासी किमपि असङ्गतमयुक्तं ब्रवीति वदति का कस्येत्यादि भाषते । ततोऽपि दास्या अपि सकाशान्नीचा इयं चेटी अति प्रगल्भते नितरां धृष्टतया भाषते । नियामकः कोऽपि नास्ति । अहो अयुक्तत्वादाश्चर्यं साधुः सभा । विरुद्धलक्षणया काका वा प्रकारश्लेषेण वा असाधुरेतादृशी सभा न कुत्रापीति । ब्रवीति वर्त्तमानसामीप्ये भूते लट् (पां ३ । ३ । १३५ ।) प्रसभेति पाठः समीचीनः । गल्भ धृष्टत्वे ॥ ५१ ॥

अथान्यमुद्दिश्य नृपं कृपामयी
मुखेन तद्दिङ्मुखसम्मुखेन सा।
दमस्वसारं वदति स्म देवता
गिरामिलाभूवदतिस्मरश्रियं॥ ५२॥
विलोचनेन्दीवरवासवासितैः
सितैरपाङ्गाध्वगचन्द्रिकाञ्चलैः।

अथेति। अथ कृपामयी बहुलकृपा सा गिरां देवता मुखेन अन्यं नृपं उद्दिश्य दमस्वसारं वदति स्म। किम्भूतेन। तस्योद्देश्यस्य नृपस्य दिङ्मुखं दिग्विभागः तस्य सम्मुखेन। किम्भूतं नृपं। इलाभूवत्पुरूरवसमिव। किम्भूतां। अतिस्मरा अतिक्रान्तस्मरा श्रीर्यस्यास्तां॥ ५२॥

विलोचनेति। हे भैमि त्वं अपाङ्गाध्वगाया नेत्रप्रान्तरूपभागगामिन्याश्चन्द्रिकायाः नेत्रमध्यगनीलगोलकस्याञ्चलैरिवाञ्चलैरतिदीर्घैर्विलोकनव्यापारैः कटाक्षैरिति यावत् तैः छलान्निभात् वस्त्वन्तरविलोकनव्याजात् अपामपाङ्गत्य मालयं मलयाद्रिस्वामिनं भायाः सम्पद्रूपाया लक्ष्म्या आलयं वा चितिचित्तं निभालय विलोकय। किंभूतं। रुचः कायकान्तेः आलयं आस्पदीभूतं। किंभूतैरञ्चलैः। विलोचने एव इन्दीवरे नीलोत्पले नीलोत्पलतुल्ये नेत्रे तयोर्मध्ये वासः स्थितिस्तया वासितैर्भावितैः नयननीलिम्ना नीलीकृतैरित्यर्थः। तथा सितैः शुभ्रैः। नीलश्वेतकान्तिभिः कटाक्षैर्विलोकयेत्यर्थः। अत्र च विशेषण-

अपामपाकृत्य निभान्निभालय
श्रितिश्रितं मालयमालयं रुचः ॥ ५३ ॥
इमं परित्यज्य परं रणादरिः
स्वमेव भग्नः शरणं मुधाविशत् ।
न वेत्ति यत्त्रातुमितः कृतस्मयो
न दुर्गया शैलभुवाऽपि शक्यते ॥ ५४ ॥

तुल्यानां नीलोत्पलानां वासेन परिमलेन सुगन्धीकृतैः सितैः तिर्य्यगायतशीलत्वादपाङ्गतुल्यमार्गगामिन्या ज्योत्स्नाया अच्छैः करैरुपलक्षितं। तथा रुचः कान्तेः आलयं स्थानं। तथा मः शिवः आलयो यस्य शिवमौलिनिवासिनं चन्द्रमेवैनं राजानं अपामपाकृत्य पश्येत्यर्थः। मः शिवे मा च पद्मायामिति विश्वः। निभालय। चुरादावात्मनेपदिनः पाठात् परस्मैपदं चिन्त्यं। निभालनं निभालस्तद्वान्निभालवांस्तादृशं कुर्व्विति। तत् करोतीति णिचि (पा० ३।१।२६।सू० १वा०) मतुब्लोपे साधनीयं ॥५३॥

इममिति। हे भैमि रणाद्भग्नः पलायितः कृतस्मयः कृतगर्व्वः अरिः एतस्य शत्रुः परं शत्रुभूतमथचातिमदान्तं इमं परित्यज्य स्वमेव स्वीयमेव शरणं गृहं मुधा वृथाऽऽविशत्। त्वदीयोऽहं मां रक्षेत्युक्त्वा एनमेव शरणं रक्षितारं कृतगर्व्वत्वादप्राप्य स्वगृहं वृथैव गत इत्यर्थः। यद्यस्मात् दुर्गया विषमया शैलस्य भूः तया गिरिदुर्गेणेत्यर्थः। तथापि इतोऽस्मान्नृपात् त्रातुं न शक्यते इति न वेत्ति। गिरिदुर्गं प्रविष्टोऽपि यस्मात् ततोऽप्याकृष्य

अनेन राज्ञाऽर्थिषु दुर्भगीकृतो
भवन् घनध्वानजरत्नमेदुरः।
तथा विदूराद्रिरदूरतां गमी
यथा स गामी तव केलिशैलताम्॥ ५५॥

हन्यते स्वगृहं प्रविष्टो हन्यत इति किं वाच्यं। अतः स्वगृहप्रवेशो व्यर्थ इत्यर्थः। अथ च पर्व्वतपुत्त्या दुर्गयापि चातुं न शक्यते। तद्रूपं त्वमेव शरणागतञ्च रक्षस्येवायमिति भावः। शरणं गृहरक्षित्रोरित्यमरः॥ ५४॥

अनेनेति। एतदरण्ये सोऽतिप्रसिद्धो विशेषेण दूरोऽद्रिरथ च रोहणाचलस्तथा तेन प्रकारेण अदूरतां सामीप्यं गमी गतो यथा येन प्रकारेण तव केलिशैलतां क्रीडापर्व्वतत्वं गामी गमिष्यति। किंभूतः। अतिवदान्येनानेन राज्ञाऽर्थिषु याचकेषु विषये दुर्भगीकृतः उपेक्षाविषयतां अयाचनीयतां प्रापितः। अत एव व्ययाभावात् नवा घना मेघास्तेषां ध्वानः शब्दस्तस्माज्जातैरत्नैर्मेदुरः परिपुष्टो भवन्। विदूराद्रौ हि नवमेघशब्दाद्रत्नशलाका उत्पद्यन्ते ताश्च याचकैर्नीयन्ते। अस्मिंस्तु वदान्ये सति तत्र कस्यापि याचकस्यागमनाद्यभावाद्रत्नैः कृत्वा त्वदुपवनान्तं यावन्मेदुरो भवति स एव रत्नमयत्वात्तव क्रीडापर्व्वतस्थाने भविष्यति। अति वदान्योऽयमिति भावः। भवद्घनध्वानेति पाठे भवद्भ्य उत्पन्नेभ्यो घनध्वानेभ्य इति व्याख्येयं। गमी गामीति पूर्व्ववत्॥ ५५॥

नम्रप्रत्यर्थिपृथ्वीपतिमुखकमलम्लानताभृङ्गजात-
छायान्तःपातचन्द्रायितचरणनखश्रेणिरैणेयनेत्रे ।
दृप्तारिप्राणवातामृतरसलहरीभूरिपानेन पीनं
भूलोकस्यैष भर्त्ता भुजभुजगयुगं सांयुगीनं बिभर्त्ति ॥ ५६ ॥

नम्रेति। हे ऐणेयनेत्रे ऐणेयो हरिणपोतस्तन्नेत्रवन्नेत्रे यस्यास्तत्संबुद्धिः । एण्यवयवभूते वा नेत्रे यस्याः। भूलोकस्य भर्त्ता एष राजा संयुगे साधु सांयुगीनं रणरसिकं भुजद्वयरूपं भुजगयुगं सर्पद्वयं बिभर्त्ति । किंभूतः । नम्राः प्रत्यर्थिपृथ्वीपतयः शत्रुनृपास्तेषां मुखान्येव कमलानि तेषां लज्जया म्लानता तद्रूपा भृङ्गेभ्यो जाता छाया भ्रमरसम्बन्धिनी या शोभा कृष्णता तस्या अन्तःपातेन नखमध्ये प्रतिबिम्बितेन चन्द्रायिता चन्द्रवदाचरिता चरणनखश्रेणिर्यस्य । किंभूतं । दृप्तानां सदर्पाणामरीणां प्राणाख्यवात एवातिप्रियत्वादमृतरसस्तस्य लहरीणां तरङ्गाणां भूरि अतितरां पानेन पीनं पीवरं । सगर्वनृपप्राणवियोगकरणेनोर्जस्वि । समानाकारत्वादतिक्रूरकर्मत्वाच्च भुजयोः सर्पत्वं । सर्पाणाञ्च पवनाशनत्वात् प्राणाख्यैः पवनैः पीनत्वं युक्तं । दर्परहितांश्चरणपातिनो वैरिणो रक्षति सदर्पानन्यान्मारयत्ययमिति भावः । ऐणेयं । एण्या अपत्यं स्त्रीभ्यो ढक् (पा० ४।१।१२०)। एण्या अवयवा इत्यर्थे एण्या ढञ् (पा० ४।३।१५८)। सांयुगीनं। साध्वर्थे प्रतिजनादित्वात् खञ् (पा० ४।४।९९) ॥ ५६ ॥

अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेष-
स्याहेर्भूयः फणसमुचितः काययष्टीनिकायः ।
दुग्धाम्भोधेर्मुनिचुलुकनत्रासनाशाभ्युपायः
कायव्यूहः क्व जगति न जागर्त्यदःकीर्त्तिपूरः ॥ ५७ ॥

अध्याहार इति । अमुष्य कीर्त्तिपूरः क्व कस्मिन् जगति न जागर्त्ति न प्रकाशते अपि तु स्वर्गपातालमर्त्यलोकेषु स्फुरति । लोकत्रयव्यापित्वं क्रमेणाह । किम्भूतः । स्मरहरशिरसि यश्चन्द्रः तस्य यः शेष एककला तस्या अध्याहारो लक्षणया पञ्चदश-कलाभिः पूरकः । स्वर्गङ्गता शिवशिरःस्थितश्चन्द्रो येन षोड-शकलः क्रियत इत्यर्थः । अन्यत्राप्यपूर्णवाक्ये किमपि योग्यं पदा-न्तरमध्याहृत्य वाक्यपूरणं क्रियते । तथा शेषस्याहेः सर्पराजस्य भूयांसः सहस्रसङ्ख्याकाः फणास्तेषां समुचितो योग्योऽतिदीर्घः काययष्टीनिकायः शरीरखण्डिकासमूहः । फणसहस्रस्य शरीरं सहस्रेण भवितव्यं । पातालं गत्वा तदीयशिष्टशरीरपूरणं क्रियत इत्यर्थः । तथा मुनेरगस्त्यस्य चुलुकनं सङ्कुचितहस्तपानं तस्माद्यस्त्रासो भयं तस्य नाशे निरासे अभि सामञ्जस्येनोपायः साधनं दुग्धाम्भोधेः । कायव्यूहः शरीरसङ्घः । पूर्व्वमेकाकित्वेन पानाद्भयमभूदिदानीमेतमेतद्यशोरूपामेकशरीरधारणात् एक-स्यानेकपाने सामर्थ्याभावाच्चलनमात्रस्य च धीरतापादनाद्दुग्ध-यशसोः स्वरूपत्वाद्दुग्धे यशोभ्रमो यशसि दुग्धभ्रम इति दुग्ध-यशसोर्निर्णेतुमशक्यत्वात् पानाभावात् । भयाभावसाधनभूतः क्षीरोदधेः कायव्यूहरूप इत्यर्थः ॥ ५७ ॥

राज्ञामस्य शतेन किं कलयतो चेतिं शतघ्नीं हतं
लक्षैर्लक्षभिदो दृशैव जयतः पद्मानि पद्मैरलं।
कर्त्तुं सर्व्वपरच्छिदः किमपि नो शक्यं परार्द्धेन वा
तत्सङ्ख्यापगमं विनाऽस्ति न गतिः काचिद्वतैतद्द्विषां ॥ ५८ ॥

राज्ञामिति। नाम्ना शतघ्नीं चतुःशतीमीहकण्टकमच्छितां चेतिं शस्त्रं कलयतो धारयतः अस्य राज्ञां शतेन किं हतं। तेन शस्त्रेण मारणात् तैरनेकैरप्यस्य किमपि कर्त्तुं न शक्यत इत्यर्थः। अथ च यः शतमारणसमर्थः शस्त्रं गृह्णाति तस्य शतसङ्ख्यामितैर्राजभिः किमपि कर्त्तुं न शक्यते। तथा राज्ञां लक्षैः किं। हतं पूर्य्यतां। यतः लक्षं वेध्यं भिनत्तीति लक्षभित्तस्य लक्षभिदः। यो हि कुत्रचिदप्यप्रतिहतसायकस्तस्य लक्षसङ्ख्यैरपि किमपि कर्त्तुं न शक्यत इत्यर्थः। तथा राज्ञां पद्मैः पद्मसङ्ख्यैः राजभिरपि किं। तैरप्यस्य किमपि कर्त्तुं न शक्यते। यतो दृशैव पद्मानि कमलानि पद्मसङ्ख्याकान्वैरिणश्च जयतः। यो हि कमलतुल्यनेत्रस्तस्य शत्रुतः पराभवो न। अथ च यो भ्रूक्षेपमात्रेण पद्मसङ्ख्यापरिमितान् राज्ञो जयति तस्य पद्मसङ्ख्यैः राजभिः किञ्चित् कर्त्तुं न शक्यते। तथा वा समुच्चये राज्ञां परार्द्धेनापि परार्द्धसङ्ख्यैर्राजभिः अस्य किमपि कर्त्तुं नो शक्यं। यतः सर्व्वे च ते परे शत्रवश्च तांश्छिनत्ति तस्य। यो हि वैरिमात्रहनने समर्थस्तस्य परार्द्धसङ्ख्याः शत्रवः किं कुर्व्वन्ति। तत्तस्मादेतस्य द्विषां सङ्ख्यात्गणाद्पगमं पलायनं अथ च परार्द्धरूपायाः सङ्ख्याया अप्यपगमं परित्यागमसङ्ख्यत्वं विना काचिद्गतिर्नास्ति

वयस्यया ऽऽकूतविदा दमस्वसुः
स्मितं वितत्याभिदधेऽथ भारती ।
इतः परेषामपि पश्य याचतां
भवन्मुखेन स्वनिवेदनत्वरां ॥ ५९ ॥
इतीरिते ऽत्र देवी वचनाधिकारिणी
त्वमुत्तरं दासि ददासि का सती ।
इतीरिणस्तन्नृपपारिपार्श्विकान्
स्वभर्त्तुरेव भ्रूकुटिर्न्यवर्त्तयत् ॥ ६० ॥

बत खेदे असह्येयाखेदभविष्यंस्तर्ह्यजीविष्यन् असह्येयत्वं नास्ति तस्मात्पलायनमेव जीवनोपायः । पलायितास्त्र इन्तीत्यर्थः । लक्षं शरव्ये सह्यायां । शतघ्नीं । अमनुष्यकर्त्तृके चेति ठक् ( पां ३ । २ । ५३ ) ॥ ५८ ॥

वयस्ययेति । अथ दमस्वसुराकूतविदाऽभिप्रायज्ञया वयस्यया सख्या स्मितं वितत्य हसितं कृत्वा भारतीति अभिदधे उक्ता । इति किं । हे भारति त्वं भवन्मुखेन त्वन्मुखेन स्ववर्णनं याचतां प्रार्थयमानानामितोऽस्मान्नृपात्परेषामन्येषां राज्ञां स्वनिवेदने स्ववर्णने एव त्वरां कालविलम्बासहनत्वं पश्य एतद्वर्णनाद्विरमेति भावः । अन्यानपि वर्णयेत्यर्थः ॥ ५९ ॥

इतीति । स्वभर्त्तुः स्वस्वामिन एव भ्रुकुटिः कोपवशाद्भ्रूभङ्गः इति पूर्वोक्तं ईरिणो भाषमाणांस्तान्नृपपारिपार्श्विकान् राजसेवकान् न्यवर्त्तयत् न्यषेधत् । भ्रूक्षेपमात्रेण तेनैव ते निवारिता ।

धराधिराजं निजगाद भारती
तदुन्मुखेषद्दलिताङ्गसूचितं * ।
दमस्वसारं प्रति सारवत्तरं
कुलेन शीलेन च राजसूचितं ॥ ६१ ॥
कुतः कृतैवं वरलोकमागतं
प्रति प्रतिज्ञाऽनवलोकनाय वा ।

इत्यर्थः । इति किं । हे दासि अत्र राजवर्त्मनि वचनाधिकारिणी भाषणाधिकारिणी देवीकृता त्वं का सती का भवन्ती केन प्रयुक्ता सती अथ चासती कुलटा का त्वमुत्तरं ददासि । अत्र त्वं वक्तुमयोग्येति । पारिपार्श्विकान् । परिपार्श्वे वर्त्तन्ते परिमुखञ्चेति (पा॰ ४ । १ । २८ ) चकाराट्ठक् ॥ ६० ॥

धरेति । भारती दमस्वसारं प्रति धराधिराजं नृपं निजगाद कथयति स्मेत्यर्थः । किंभूतं । तस्य वर्णनीयस्य नृपस्य उन्मुखं सम्मुखं ईषद्दलितेन किञ्चित्परिवर्त्तितेनाङ्गेन करादिना सूचितं ज्ञापितं । तथा सारवत्तरमतिबलिष्ठं । तथा कुलेन शीलेन स्वभावेनाचरणेन वा राजसु मध्ये सूचितं योग्यं श्रेष्ठं । कुलशीलाभ्यां सारवत्तरं श्रेष्ठतरं वा ॥ ६१ ॥

कुत इति । हे भैमि ते त्वया आगतं स्वयम्वरार्थं वरलोकं परिणेतृवृन्दं प्रति सखीकृत्य अनवलोकनाय अदर्शनार्थैवममुना दृश्यमानेन प्रकारेण प्रतिज्ञा कुतः कस्मात् कारणात् कृता

* वलिताङ्गसूचितमिति पाठान्तरं । सं॰ पु॰ ।

अपीयमेनं मिथिलापुरन्दरं
निपीय दृष्टिः शिथिलास्तु ते वरं ॥ ६२ ॥
न पाहि पाहीति यदब्रवीरमुं
ममौष्ठ तेनैवमभूदिति क्रुधा।
रणच्छितावस्य विरोधिमूर्द्धभि-
र्विदश्य दन्तैर्निजमोष्ठमास्यते ॥ ६३ ॥

अपि त्वयुक्तमेतत्। वेति पाठे कुतो वेत्यन्वयः। अनवलोकनायैवेति अवधारणार्थो वा। न केवलं वरणायैव किन्तु अनवलोकनायापीति अप्यर्थो वा। किन्तर्हि कर्त्तव्यमित्यत आह। हे भैमि ते इयं दृष्टिः एनं मिथिलाया नगर्याः पुरन्दरं स्वामिनं निपीयैव शिथिलाऽस्तु एतद्वरं। सर्व्वथाऽनवलोकनाद्विलोकनं वरमिति राजान्तरवदनानुरागेण्येनं विलोकयेत्यर्थः। अन्ये यद्यपि नावलोकितास्तथाप्येनं विलोकय। विलोकनेनापि एनं सभावयेत्यर्थः। पूर्व्वश्लोके सामान्यत उक्तत्वात्। अन्वादेशे (पा॰ २।४।३४) एनमिति समर्थनीयं॥ ६२ ॥

न पाहीति। अस्य विरोधिमूर्द्धभिर्व्वैरिशिरोभिः इति क्रुधा रणच्छितौ निजमोष्ठं दन्तैर्व्विदश्य विशेषेण दष्ट्वा आस्यते स्थीयते। इति किं। हे ओष्ठ त्वं अमुं नृपं प्रति पाहि पाहि इति यत् अब्रवीः तेन कारणेन ममौष्ठविलुञ्चनपूर्व्वकं मरणमभूदिति। पाहि पाहीति यो वदति तमधं रुणद्धि। पाहीति परोच्चारणे प्रथमं तत्रैव सामर्थ्यं पकारस्यौष्ठ्यत्वात् तथा च

भुजेऽपसर्पत्यपि दक्षिणे गुणं
सहेषुणाऽऽदाय पुरः प्रसर्पिणे।
धनुः परीरम्भमिवास्य सम्मदान्
महाहवे दित्सति वामबाहवे ॥ ६४ ॥
अस्योर्व्वीरमणस्य पार्व्वणविधुद्वैराज्यसज्जं यशः
सर्व्वाङ्गोज्ज्वलशर्व्वपर्व्वतसितश्रीगर्व्वनिर्व्वासि यत्।

मदर्पितात्तदनुचारणान्मामयं मारितवानिति त्वमेवापराधी-
त्यर्थः। शवमुष्टिन्यायेन दृष्टैव न तु मुक्तेति आस्यत इत्यनेन
सूचितं ॥ ६३ ॥

भुज इति। महाहवे महति रणसम्मर्द्दे दक्षिणेऽपसव्ये अथ
च सरले अनुकूलेऽपि भुजे इषुणा सह गुणं मौर्व्वीमपि आदाय
गृहीत्वाऽपसर्पति कर्णपश्चाद्देशं गच्छति सति पुरः प्रसर्पिणे स्थि-
रमुन्नयायिने दृढतरमुष्टयेऽस्य वामबाहवे सव्यभुजाय धनुः सम्म-
दादिव दृढतरत्वजाताद्धर्षादिव परीरम्भमालिङ्गनं दित्सति
दातुमिच्छति। दित्सतीनेति वा। अन्यस्मिन्नपि गुणिनि विश्वास-
पात्रे सङ्ग्रामात् स्वजनमादाय पलायिते सति सङ्ग्रामं कर्त्तुं सम्मु-
खाय वामाय दुष्टायापि अयमेव साधुरिति मत्वा सुवंशजेन
केनचित्साधर्म्येणालिङ्गनं दीयते। दृढमुष्टिरिति ग्रहणेऽपसिति।
सङ्ग्रामे कर्णासापर्यन्तमाकर्षणाद्धनुषः कोटत्य शरान्मुसल्लेवाम
इति भावः। वामबाहव इति। इटाति योगात् चतुर्थी ॥ ६४ ॥

अस्येति। पृथ्व्या पृथ्वीरमणस्य राज्ञः यत् यशः एतादृशं।

तत्कम्बुप्रतिबिम्बितं किमु शरत्पर्जन्यराजिश्रियः
पर्य्यायः किमु दुग्धसिन्धुपयसां सर्व्वानुवादः किमु ॥ ६५ ॥
निस्त्रिंशत्रुटितारिवारणघटाकुम्भास्थिकूटाऽवट-
स्थानस्थायुकमौक्तिकोत्करकिरः कैरस्य नायङ्करः।

कीदृश यशः। पर्व्वणि भवः पार्व्वणः पूर्णो विधुश्चन्द्रः तस्य द्वैराज्यं द्वयोराज्ञोः कर्म्म तत्र सज्जं तत्परं पार्व्वणचन्द्रसदृशमित्यर्थः। तथा सर्व्वेष्वङ्गेषु उज्ज्वलस्य धवलस्य शर्व्वपर्व्वतस्य हरनिवास-भूतकैलासस्य सितश्रीः श्वेतकान्तिस्तद्विषये यो गर्व्वस्तस्य नि-र्व्वासि निराकारकं। कैलासादपि धवलतरं एवम्भूतं यत् यशः तत्कम्बुप्रतिबिम्बितं सामुद्रशङ्खप्रतिबिम्बं किमु। तथा शरदि पर्जन्यराजिर्मेघपङ्क्तिस्तस्याः श्रीर्धवलिमशोभा तस्याः पर्य्यायः किमु। शब्दस्य शब्दान्तरेणोच्चारः पर्य्यायः। तथा दुग्धसिन्धोः क्षीरोदस्य पयसां दुग्धानां सर्व्वेण प्रकारेणानुवादः पुनरभि-धानं किमु। चन्द्रादितुल्यमेतद्यश इति भावः। अन्योऽपि अधिष्ठितद्वैराज्यः प्रतिपक्षं निरस्यति ॥ ६५ ॥

निस्त्रिंशेति। अस्य नृपस्यायं दृश्यमानः करः कैरेवम्भूत इव न उन्नीतः तर्कितः अपि तु सर्व्वैरप्येवमेव तर्कितः। कीदृशः करः। निस्त्रिंशेन खड्गेन छला त्रुटितायाः खण्डनं प्रापितायाः अरिवारणघटायाः वैरिगजपरम्परायाः कुम्भानां गण्डस्थलानां अस्थिकूटा अस्थिसमूहास्तेषामवटस्थाने गर्त्तसदृशस्थाने स्थायुकः स्थितिशीलो मौक्तिकोत्करो मुक्तासङ्घस्तस्य किरः विक्षेपकः।

उन्नीतश्चतुरङ्गसैन्यसमरत्वङ्गत्तुरङ्गक्षुर-
क्षुण्णासु चितिषु चिपन्निव यशःचोणीजवीजव्रजं ॥ ६६ ॥
अर्थिभ्रंशवदुद्भवत्फलभरव्याजेन कुञ्जायितः
सत्यस्मिन्ननिदानभाजि कथमप्यास्तां स कल्पद्रुमः।

तथा चत्वारि करिनररथतुरगलचणानि अङ्गानि येषामेवम्भूतानि सैन्यानि येषु ते समराः सङ्ग्रामास्तेषु त्वङ्गन्तश्चिरं गच्छन्तस्तुरङ्गास्तेषां चुरैश्चरणाग्रनखतीच्णाघातैः चुण्णासु विदारितासु क्षष्टासु चितिषु रणक्षेत्रभूमिषु यशोलचणस्य चोणीजस्य तदुत्पादकं बीजव्रजं बीजसङ्घं चिपन्निव वपन्निव। यशोद्रुमस्य शुभ्रत्वात्तत्कारणेन बीजेन शुभ्रेणैव भवितव्यं। अरिकरिकुम्भस्थमुक्ताफलानि बीजस्थाने जातानीत्यर्थः। अन्योऽपि पात्रस्थं बीजसङ्घं स्वकरेणादाय हलकृष्टासु भूमिषु वपति। वैरिकरिणां हननादेतस्य यशो जातमिति। तैरण्यात्तुराः खुरा इति तुल्यः शब्दः। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खङ्ग इति। डप्रकरणे सङ्ख्यायामात्पुरुषस्योपसङ्ख्यानं निस्त्रिंशाद्यर्थमिति डः। स्थायुक्तं। समपतपदस्येत्युक्तम् (पा० ३।२।१५४)। किरतीति किरः। इगुपधेति कः (पा० ३।१।१३५)॥ ६६॥

अर्थीति। स कल्पद्रुमः प्रसिद्धः केवलं कल्पितप्रदः। अस्मिन् राजनि अतिदानं अतिशयितं दानं भजति अकल्पितमपि ददति सति अर्थिभ्रंशाद्याचकैर्वर्जनात् पूर्वमल्पान्यपि व्ययाभावादुद्भवन्ति बहूनि जायमानानि फलानि तेषां भरव्याजेन

आस्ते निर्व्ययरत्नसम्पदुदयोदयः कथं याचक-
श्रेणीवर्जनदुर्यशोनिविडितव्रीडस्तु रत्नाचलः ॥ ६७ ॥
त्यजामि किं विघ्नमिदं नृपस्तुता-
वितीङ्गितैः पृच्छति तां सखीजने।

भारगौरवमिषेण कुब्जायितः खर्व्वबदाचरितोऽतिनम्रः सन् कथमप्यास्तां महता क्लेशेन। अथ च लज्जागोपनप्रकारेणापि तिष्ठतु कालं वातिवाहयतु। नम्रत्वेन लज्जागोपनं युक्तमिति भावः। तु पुनः रत्नाचलः याचकश्रेण्या वर्जनात् परित्यागात् जातेन दुर्यशसाऽपकीर्त्या निविडिता घनीकृता व्रीडा लज्जा यस्यैवम्भूतोऽपि याचकाभावान्निर्व्यययाऽव्ययया रत्नसम्पदा कृता य उदयोऽनुस्यूता वृद्धिस्तेनोदयः उच्चशिखरोऽथ वा नम्र एव कथमास्तेऽपि तु लज्जितस्यानम्रत्वमयुक्तमेवेत्यर्थः। कल्पवृक्षस्य स्वर्गैस्थितत्वाद्दुष्प्रापतया फलभरव्याजेन नम्रतया च लज्जा-परिहारः सम्भवः। रोहणाद्रेस्तु एकलोकनिवासाद्दुष्प्राप-त्वाभावेऽपि याचकैर्वर्जनात्सम्भ्रातिशयमतिनम्रत्वं युक्तं तत्तु तस्य नास्तीत्याश्चर्य्यं। कल्पवृक्षमेरुभ्यामप्ययमधिको दानशूर इति भावः। कुब्जायितः। लोहितादेराकृतिगणत्वादाचारे क्यष् (पा० ३।१।१३)॥ ६७॥

त्यजामीति। वधूर्भैमी सखीजने इङ्गितैर्भ्रूभङ्गादिचेष्टितैः कृत्वा तां भैमीमिति पृच्छति सति स्वाभिप्रायज्ञापनार्थं गिरा-माय यार्थं यम् अयकयत् वर्क चके तदद्गवकजमेव नृपे तमिम्।

स्मिताय वक्त्रं यदवक्रयद्वधू
स्तदेव वैमुख्यमलक्षि तन्नृपे ॥ ६८ ॥
दृशाय निर्दिश्य नरेश्वरान्तरं
मधुस्वरा वक्तुमधीश्वरा गिरां।
अनूपयामास विदर्भजाश्रुती
निजास्यचन्द्रस्य सुधाभिरुक्तिभिः ॥ ६९ ॥

राज्ञि वैमुख्यं पराङ्मुखत्वं अलक्षि अलक्षितं। अन्यतो विलोकनादेवाचानादरोऽस्या इतीति सखीभिर्लोकितेन राज्ञा वा तर्कितमित्यर्थः। इति किं। हे भैमि अहं अयमसौ नृपस्य इदं-नृपस्यास्य स्तुतौ विघ्नं सृजामि किं। वैलक्ष्यमिति पाठे अनवधानतया यस्मान्मुखमवक्रयत् तस्मादेव भूपगतमेव वैलक्ष्यं मालिन्यं लोकैर्लक्षितमित्यर्थः। स्मिताय। स्मितं कर्त्तुं क्रियार्थोपपदेति चतुर्थी (पा॰ २।३।२४) ॥ ६८ ॥

दृशेति। अथ मधुरस्वरा गिरामधीश्वरा वक्तुं वर्णयितुं दृशा नेत्रव्यापारेण नरेश्वरान्तरं नृपान्तरं निर्दिश्य दर्शयित्वा विदर्भजाश्रुती भैम्याः कर्णौ निजास्यं स्वीयवदनमेव चन्द्रस्य सुधाभिरमृतरूपाभिरुक्तिभिः कृत्वा अनूपयामास परिपूर्णे चकार उवाचेत्यर्थः। अनुगता आपो यत्रानूपो देशः। ऋगादिना समासान्तो ऊदनोर्देश इत्यूकारः(पा॰ ६।३।९८)। अनूपे जलप्लुते चकार। तत् करोतीति णिच्। लक्षणया मधुरस्वराकर्णनतृप्तिमिते चकारेत्यर्थः। अपूपुरद्वीमभुवः श्रुती पुनरिति पाठे णौ चङ्युपधाया इति किं वाच्यमित्युपधाह्रस्वः (पा॰ ७।४।१) ॥ ६९ ॥

स कामरूपाधिप एष दृश्यते त्वया
न कामरूपाधिक ईक्ष्यतेऽपि यः।
त्वमस्य सा योग्यतमाऽसि वल्लभा
सुदुर्लभा यत्प्रतिमल्लभा परा॥ ७०॥
अकर्णधाराप्लुगसम्प्लुतां गतां
गतैररित्रेण विनास्य वैरिभिः।

स इति। एष कामरूपस्य देशविशेषस्याधिपः। अथ च मदनरूपस्यापि स्वामी तद्रूपधारणादित्यर्थः। स कः। यस्त्वया न ईक्ष्यतेऽपि न नाभिलक्ष्यत इति तु किं वाच्यमित्यर्थः। इा कष्टमनुचितमेतत्। यतः कामाद्रूपेणाधिक अतिसुन्दरः। अथवा कामाद्रूपेणाधिको नेति काकुर्वा। यतोऽयं कामादधिकस्तस्मादस्य योग्यतमा सा त्वं वल्लभाऽसि नितरामुचिता प्रेयसी भवसि। सा का। परा उत्कृष्टा यस्यास्तव प्रतिमल्ला तुल्या भा कान्तिः सुतरां दुर्लभा यस्याः। मदृशी कान्तिः कस्याश्चिदपि न दृष्टचरी। अस्यापि सुन्दरत्वादित्यर्थः। अथ च पराऽन्या स्त्री यस्यास्तुल्यकान्तिर्दुर्लभा सातिसुन्दरी त्वमित्यर्थः। त्वमतिसुन्दरी अस्य सुतरामयोग्येत्यर्थ इति वा व्याख्यानान्तरं श्लिष्टत्वादुपेक्ष्यं। सुदुर्लभा। नसुदुर्भ्यां केवलाभ्यामिति नुम्निषेधः (पा० ७।१।६८)॥ ७०॥

अकर्णेति। अस्य वैरिभिः समरे निमज्य निपत्य यावान् सकलमार्गणिः सूर्यमण्डलस्येत्यर्थः। भिदां भेदं विधाय हला- भवः संसार एव दुस्तरत्वादर्णवस्तीर्णः मोक्षप्राप्तेरपुनरावृत्तेः

विधाय यावत्तरणेर्भिदामहो
निमज्ज्य तीर्णः समरे भवार्णवः ॥ ७१ ॥

रित्यर्थः। अहो आश्चर्य्यं शूरतरोऽयमित्यर्थः। किम्भूतैः। अरित्रमस्त्रायत इत्यरित्रं कवचं तेन विनाऽथवारेरस्मात् सकाशाद्र्चकेणान्येन शूरतरेण विना न विद्यन्ते कर्णाः कर्णाकारा लोहकण्टका यासां एवविधा धारा येषामेवंभूताः। कर्णान् घरन्ति कर्णधाराः न कर्णधारा अकर्णधारा एवम्भूता वा आशुगा बाणाः अदृष्टाः शरास्तैः संस्यूतानि प्रोतानि अङ्गानि अवयवा येषां तेषां भावस्तत्ता तां गतैः प्राप्तैः प्रत्यवयवविद्धैरित्यर्थः। यावत् साकल्ये। अथ च कर्णधारो नाविकः आशुगो वायुस्ताभ्यां कृला संस्यूतानि परिपुष्टानि अङ्गानि रज्जुस्तम्भादीनि तरणोपायभूतानि च येषां कर्णधारानुकूलवायुना वा संस्यूतान्यङ्गानि येषां एवम्भूता ये न भवन्ति तद्भावं गतैः। अरित्रेण जलक्षेपणकाष्ठेन विना तस्याप्यभावे यावत्तरणे सकलाया नौकाया भेदं विधाय सकलां नौकां स्फोटयित्वा निमज्ज्य बुडित्वा अर्णवस्तीर्णः। हे भव शिव अहो अत्याश्चर्य्यं कर्णधाराद्यभावे नौकायाश्च भेदे बुडित्वा तरण तथापि समुद्रस्येति अत्याश्चर्य्यं अघटमानघटने च आश्चर्य्यसूचकं शिवनामोच्चारणं क्रियते। कर्णधारस्तु नाविकः। नौकादण्डः क्षेपणी स्यादरित्रं। स्त्रियां नौस्तरणिस्तरिः। द्युमणिस्तरणिर्मित्र इत्यमरः ॥ ७१ ॥

अमुष्य भूलोकभुजो भुजोष्मभि-
स्तपर्तुरेव क्रियतेऽरिवेश्मनि।
प्रपा न तत्रारिवधूस्तपस्विनी
ददातु नेत्रोत्पलवासिभिर्जलैः ॥ ७२ ॥
एतद्धृत्तासिघातस्रवदसृगसृहृद्वंशसार्द्रेन्धनैतद्-
दोरुद्दामप्रतापज्वलदनलमिलद्भूमधूमभ्रमाय।

अमुष्येति। भूलोकभुजो भूपालस्यामुष्य भुजोष्मभिर्बाहुप्रतापैः अरिवेश्मनि अतिसन्तापकारित्वात्तपर्त्तुरेव ग्रीष्मर्त्तुरेव यद्यस्मात् क्रियते तस्मात् तत्र ग्रीष्मर्त्तौ तपस्विनी दीनारिवधूः नेत्राण्येवोत्पलानि तेषु वासिभिर्जलैः अश्रुभिः। अथ च नेत्रतुल्यकमलानां यो वासः परिमलः स विद्यते येषु तैर्जलैः कृत्वा प्रपां पानीयशालां न ददातु अपि तु ददात्येव। तपस्विनी ग्रीष्मर्त्तौ सुगन्धिभिरुदकैः प्रपां करोति। अनेन पतिमारणात् शोकव्याप्ता सर्व्वाप्यरिनारी रुरोदैवेति भावः। प्रपा पानीयशालिकेत्यमरः ॥ ७२ ॥

एतदिति। आजिस्थलीषु सङ्ग्रामभूमिषु एतन्नासीरस्य एतत्सेनामुखस्य पुरो गच्छन्तो वाजिव्रजास्तेषां खुरेभ्यश्चरणाग्रेभ्यो जातैरुद्धूलिता रजोराजिः रेणुपङ्क्तिः एतस्य दिग्जैत्रयात्रा दिग्जयकारिण्यो या यात्राः तैरभिमुखं गतास्तासु, अमगमतुल्यो समरस्य भर सम्मर्द पश्यतः कस्य जनस्य एतेन राज्ञा दत्तोऽघोऽसिघातेभ्यः स्रवदसृग्यकं येषां एतेन दत्तोऽसिघातो येभ्य.

एतद्दिग्जैत्रयात्रासमसमरभरं पश्यतः कस्य नासीत्
एतन्नासीरवाजिव्रजखुरजरजोराजिराजिस्थलीषु ॥ ७३ ॥
क्षीरोदन्वदपः प्रमथ्य मथितादेशोऽमरैर्निर्म्मिते
स्वाक्रम्यं स्वजतस्तदस्य यशसः क्षीरोदसिंहासनं ।

अत एव स्रवदङ्गो वाऽसुहृद्वंशा अरिसङ्घा अथ च तद्रूपा वेणवस्त एव सार्द्राणीन्धनानि दाह्यकाष्ठानि यस्यैवंभूत एतस्य दोष्णोर्वाडौरुद्दामप्रतापस्तीव्रप्रतापः स एव ज्वलन्दीप्यमानोऽनलः तस्य मिलन् सम्भवन् भूमा बाहुल्यं यस्यैवंभूतो मङ्गतरो धूमस्तस्य भ्रमाय साहृश्यादधूमेऽपि रजसि धूम इति बुद्धये नासीदपि तु सर्व्वस्यापि। आर्द्रवेणुरूपेन्धनं दहतो वह्नेर्भूयान् धूमो भवति । सर्व्वेऽप्यरय एतत्प्रतापवह्निना दग्धाः । अश्वपतिश्चायमिति भावः । सार्द्रमित्यार्द्रपर्य्यायः । मिलद्भूमभूमेति पाठे मिलतो धूमस्य बाहुल्ये तद्भ्रान्तये ॥ ७३ ॥

क्षीरेति । केषां जगतां भुवनानां सम्बन्धिना जनेनास्य राज्ञो यशसोऽभिषेक एवोत्सवो नाजनि नाकारि अपि तु स्वर्गादिस्थितेन सर्व्वेणापि लोकेनैतदीययशसोऽभिषेकः कृतः । विशेषेणाधिष्ठानमाह । किंभूतस्य यशसः । क्षीरोदन्वदपः क्षीरोदन्वान् क्षीरसमुद्रस्तस्यापो जलानि दुग्धरूपाणि प्रमथ्य मन्दराचलेन कृत्वा प्रकर्षेण विलोड्यामरैर्मथनक्रियायोगान्मथितमिति आदेशे सञ्ज्ञायां निर्म्मिते कृतायां अथ च निर्जलं मन्थमथितं दधि मथितमित्युच्यते । ततश्च क्षीरस्यापि मथनक्रिया-

केषां नाजनि वा जनेन जगतामेतत्कवित्वामृत-
स्रोतःप्रोतपिपासुकर्णकलशीभाजाभिषेकोत्सवः ॥ ७४ ॥

योगाद्दर्भैर्वन्मथितरूपे आदेशे निर्मिते सति जले क्षिप्य-
सम्भवक्षीरोदन्वदुदके दुग्धरूपे अतिघने कृते सतीत्यर्थः।
क्षीरोदरूपं सिंहासनं शुभ्रवस्तुमात्रापेक्षया तस्यातिशुभ्रत्वा-
द्भद्रं यद्भद्रपीठं तत्त्वेनात्मनाथ च सुखेन आयासरहितं यथा
तथा आक्रम्यसुपवेशनयोग्यं सृजतः कुर्वतः क्षीरोदपदमधि-
तिष्ठत इत्यर्थः। किंभूतेन जनेन। एतद्रचितं कवित्वं एतत्स-
म्बन्धिकविभिर्निर्मितं कीर्त्तिवर्णनरूपं कवित्वं तदेव स्वादुतर-
त्वादमृतं तस्य स्रोतसि प्रवाहे प्रोतौ स्यूतौ भृतौ सादरमा-
कर्णनेच्छू अथ च जलभरणेच्छू कर्णावेव कलशौ महान्तौ
कलशौ भाजा भजता। लोके हि कस्मिंश्चिद्राजनि केनचिन्म-
थिते तदीयं सिंहासनमधिष्ठितोऽन्यस्य केनचिद्वारिपूर्णेन कलशे-
नाभिषेकः क्रियते। घनीरूपतया उपवेशनयोग्यतां सूचयितुं
मथितादेशे कृते सतीत्युक्तं। जलोपरि उपवेशनासम्भवात्। क्षी-
रोदादपि विमलतरं महीयमेतद्यशो वैदेशिकैर्लोकत्रयमप्यारि
कृतमिति भावः। तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जल-
मित्यमरः। क्षीरोदन्वदपः। उदन्वानुदधौ चेति (पा० ८।२।
१३) साधुः। ऋक्पूरित्यप्रत्ययः (पा० ५।४।७४)।
स्वाकर्म्यं। पोरदुपधादिति यत् (पा० ३।१।९८)।
अजनि। कर्मणि चिण् (पा० ३।१।६६) ॥ ७४ ॥

समिति पतिनिपाताकर्णनद्रागदीर्ण-
प्रतिनृपतिमृगाचीलच्चवचःशिलासु।
लिखितलिपिरिवोरस्ताडनव्यस्तहस्त-
प्रखरनखरटङ्कैरस्य कीर्त्तिप्रशस्तिः ॥ ७५ ॥
विधाय ताम्बूलपुटीं कराङ्कगां
बभाण ताम्बूलकरङ्कवाहिनी।

समितीति। अस्य राज्ञः कीर्त्तिप्रशस्तिर्वर्णनपङ्क्तिः समिति सङ्ग्रामे पतीनां निपातो मरणं तस्याकर्णनेन द्राक् शीघ्रं अदीर्णानि प्रतिनृपतिमृगाचीणां लचस्य वचांसि तान्येव तत्चणमेवाविदीर्णत्वाच्छिलास्तासु शोकवशादुरस्ताडने व्यस्तयोर्दृढनिवेशितयोर्हस्तयोः प्रखरा अतितीच्णा नखरा नखा एव टङ्काः पाषाणदारणलोहविकारास्तैरंचितलिपिरिव रचितलेखनेवासीति शेषः। अन्यस्यापि कीर्त्तिप्रशस्तिः शिलासु टङ्किकाभिरुत्कीर्य्य लिख्यते। सर्व्वेऽप्यरयोऽनेन हतास्तचाय्र्यः शोकवशादुरस्ताडनं कुर्व्वन्ति अतिशूरत्वादस्य कीर्त्तिर्भवतीत्यर्थः। दृढशोकेऽप्यदीर्णत्वाच्छिलात्वं। शोकातुरस्योरस्ताडनं जातिः। टङ्कः पाषाणदारण इत्यमरः। समिदाजौसमित्सु चेति॥ ७५ ॥

विधायेति। ताम्बूलस्य करङ्कः सुवर्णादिरचितहंसाद्याकारं ताम्बूलधारणपात्रं पटीति लोके तस्य वाहिनी धारिणी काचित् सखी दमस्वसुर्भावं तदर्थमनिषेधरूपं अवेत्य ज्ञात्वा

दमस्वस्तुभावमवेत्य भारतीं
नयाऽनया वक्त्रपरिश्रमं श्रमं ॥ ७६ ॥
समुन्मुखीकृत्य बभार भारती
रतीशकल्पेऽन्यनृपे निजं भुजं।
ततस्त्वसद्वालपृषद्विलोचनां
शशंस संसज्जनरञ्जनीं जनीं ॥ ७७ ॥

भारतीं इति बभाण। किं कृत्वा। ताम्बूलपुटीं पूगीफलचूर्णख-दिरपर्णानि यत्रैकत्र क्रियन्ते। यां मध्यदेशभाषया गुलविडेति व्यवहरन्ति। तां देव्यै दातुं कराङ्कगां स्वीयकरतलमध्यगतां वा कृत्वा करङ्कं गृहीत्वेत्यर्थः। इति किं। हे देवि त्वं अनया वीटिकया एतदीयबहुवर्णनजनितं वक्त्रस्य सकलं परिश्रम श्रमं नय बहुवर्णनजनितं शोषं शान्तिं प्रापयेति। एतत्स्तुते-र्विरमेत्यर्थः। अन्योऽपि शुष्कमुखो वीटिकया श्रमं शमं नयति॥ ७६ ॥

समिति। भारती रतीशकल्पे कामतुल्येऽन्यनृपे निजं भुजं बाहुं सम्यग् उन्मुखीकृत्य बभार भैम्यै तं दर्शयितुं तदभिमुखं चकार। ततः अनन्तरं चलद्वालपृषद्विलोचनां भीतबालह-रिणमेत्रां संसज्जनानां सभ्यानां रञ्जनीं अनुरागजनिकां जनीं वरार्थिनीं तां भैमीं शशंस अभाणीत्। रतीशतुल्य इति च पाठः। रञ्जनीं। रञ्जेरणाभावाद्नलोपाभावः (पा॰ ६। ४। २४। सू॰ २ वार्त्तिके।) ॥ ७७ ॥

अयं गुणौघैरनुरज्यदुत्कलो
भवन्मुखालोकरसोत्कलोचनः।
स्पृशन्तु रूपामृतवापि नन्वमुं
तवापि दृक्तारतरङ्गभङ्गयः॥ ७८॥
अनेन सर्व्वार्थिकृतार्थनाकृता
ऽऽहृतार्थिनौ कामगवीसुरद्रुमौ।

*अयमिति। हे भैमि गुणौघैः सौन्दर्य्यादिगुणसङ्घैः अनु-*रज्यन्तोऽनुरक्ता भवन्तः उत्कला उत्कलाख्या तद्देशनिवासिनो लोका यत्र। अथ च गुणौघैरनुरज्यन्त उत्कृष्टाश्चतुःषष्टिःकला यत्र तैरुपलक्षितोऽयं नृपः। यस्मात् भवन्मुखालोके रसेनानु-रागेणोत्कलोचन उत्कण्ठितनेत्रोऽस्तीति शेषः। तस्मान्ननु हे रूपामृतवापि सौन्दर्य्यामृतदीर्घिके सुन्दरि तवापि दृगो-स्तारा उज्ज्वला विशाला वा चञ्चला वा तरङ्गाः पुनर्व्यापा-ररूपाः कल्लोलास्तेषां भङ्गयः प्रकारविशेषा अमुं स्पृशन्तु। अयं त्वां पश्यति त्वमप्येनं कटाक्षैः पश्य योग्यत्वादिति भावः। अनुरज्यदुत्कल इत्यनेन अन्यानुरञ्जनात् सर्व्वराधिक्यं सूचितं। अन्यस्यामपि जलवाप्यां चञ्चलतरङ्गभङ्गयो भवन्ति। अनुरज्य-दिति। शनो ङित्वान्नलोपः (पा॰ १।४।२४)॥ ७८॥

अनेनेति। कामगवीसुरद्रुमौ कामधेनुकल्पवृक्षौ मिथः अन्योन्यं क्रमेण पयःसेचनपल्लवाशने दुग्धसेचनपल्लवभोजने प्रदाय प्रकर्षेण दत्वा दानस्य व्यसनं अतिशये सत्यवश्यमवश्यकरणीय-

मिथःपयःसेचनपल्लवाशने
प्रदाय दानव्यसनं समाप्नुतः ॥ ७९ ॥
नृपः कराभ्यामुदतोलयन्निजे
नृपानयं यान् पततः पदद्वये ।
तदीयचूडाकुरुविन्दरश्मिभिः
स्फुटेयमेतत्करपादरञ्जना ॥ ८० ॥
यत् कस्यामपि भानुमान्न ककुभि स्थेमानमालम्बते
जातं यद्वनकाननैकशरणप्राप्तेन दावाग्निना ।

तथा प्राप्तस्यापत्यं समाप्नुतः समाप्तिं नयतः । कस्मादित्यत आह । किम्भूतौ । सर्व्वार्थिनां सर्व्वयाचकानां अभीष्टदानात् या कृतार्थता जन्मसाफल्यलक्षणं कृतार्थत्वं तां करोत्येवंभूतः कृत् तेनानेनाभिदानात् समत्याहृता आनीता अर्थिनो याचका ययोस्तौ । अर्थ्यन्तराभावात् कामगव्या कल्पवृक्षस्य दुग्धसेकः कृतस्तेन च पल्लवा भक्षयितुं तस्यै दत्ता इत्यर्थः । दानशूरोऽयमिति भावः ॥ ७८ ॥

नृपेति । अयं नृपः निजे पदद्वये प्रणामवशात् पततः नृपान् यान् नृपान् कराभ्यां कृपया शिरसि धृत्वा उदतोलयत् उत्थापयामास । तदीया राजकीया याश्चूडामुकुटास्तासां कुरुविन्दरश्मिभिः माणिक्यशोणशोभाभिः कृतेयमेतस्य करपादयोः रञ्जना रक्तिमा स्फुटा दृश्यत इति शेषः ॥ ८० ॥

यदिति । भानुमान् सूर्य्यः कस्यामपि ककुभि दिशि स्थेमानं,

एषैतद्भुजतेजसा विजितयोस्तावन्नयोरौचिती
धिक्तं वाडवमम्भसि द्विपि भिया येन प्रविष्टं पुनः ॥ ८१ ॥

स्थिरत्वं यत् नालम्बते अङ्गीकरोति किन्तु सर्व्वदा परिभ्रमत्येव। दावाग्निना वनवह्निना च घनं अतिगहनं काननं तमश्चरणं एकं केवलं शरणं रक्षितारं प्राप्तेन तदेकाश्रयेन यज्जातं। एतस्य भुजतेजसा विशेषेण जितयोस्तयोः सूर्य्यदावानलयोस्तावन्निश्चितं एषा औचिती युक्तकारितरता। भीतस्य व्याकुलता वनाश्रयणञ्च युक्तं इत्यर्थः। मानी हि जितः सन् लज्जया मुखमदर्शयन् पुनर्दर्शनभयेनैकस्मिन्देशे वासं त्यक्त्वा सर्व्वत्र परिभ्रमति सर्व्वथाऽन्यस्य प्रवेष्टुमशक्यं घनं गहनं वाविशति। ताभ्यां युक्तमेव कृतमित्यर्थः। तं वाडवं वडवानलं पुनर्धिक् येनास्य भिया द्विपि सहजशत्रौ अम्भसि समुद्रजले प्रविष्टं निमग्नं। मानी हि पराजितोऽपि वैरिणः शरणं नैति अयन्तु गत इति अभिमानित्वाभावान्निन्द्य एवेत्यर्थः। अथ च वाडवो ब्राह्मणः। ततश्च ब्राह्मणत्वाच्छत्रावपि भयेन प्रवेशो युक्तः। शत्रुणा च तस्य रक्षणं युक्तं इति च सूचितं। सूर्य्यादेरप्येतदीयं तेजोऽधिकतरमिति भावः। स्थेमानमिति। स्थिरशब्दाद्भावे पृथ्व्यादित्वाद्इमनिचि (पा॰ ५।१।१२२) प्रियस्थिरेति। स्थादेशः (पा॰ ६।४।१५७)। शरणं प्राप्तेन। द्वितीयाश्रितेति समासः (पा॰ २।१।२४)॥ ८१॥

अमुष्योर्वीभर्त्तुः प्रहमरचमूसिन्धुरभवै-
रवैमि प्रारब्धे वमथुभिरवश्यायसमये।
न कम्पन्तामन्तः प्रतिनृपभटा ग्लायतु न तद्-
वधूवक्त्राम्भोजं भवतु न स तेषां कुदिवसः॥ ८२॥

अमुष्येति। अमुष्योर्वीभर्त्तुरणसंरम्भात् प्रहमराः प्रहरणशीलाश्चमूसिन्धुराः सेनागजास्तेभ्यो भवैः समुत्पन्नैर्वमथुभिः करिकराग्रजातैर्मदजलविन्दुभिर्जलविन्दुभिर्वा अवश्यायसमये नीहारकाले हिमर्त्तौ प्रारब्धे निर्म्मिते सति प्रतिनृपभटा वीरा अपि रिपुनृपा अन्तःकरणे स्वीयमनसि वा न कम्पन्ताम् अपि तस्माद्भयेन युक्त एव कम्पस्तेषां। तथा तेषां रिपूणां वध्वो रमण्यस्तासां वक्त्राम्भोजं न ग्लायतु अपि तु भाविनः प्राणेशवधस्य निश्चितत्वात् तासां मुखस्य ग्लानिरुचितैव। तथा स प्रसिद्धो रणवासरस्तेषां वैरिणां तत्स्त्रीणां च कुत्सितो दिवसोऽशुभरूपो वासरो न भवत्वपि तु भवत्येव। वधनिश्चयाद्वैरिणां तत्स्त्रीणाञ्च शोकवशादित्यहमवैमि। हिमर्त्तौ शरीरकम्पः कमलग्लानिर्दुर्द्दिनञ्च भवति। प्रहरतरोऽयं गजपतिरिति भावः। सिन्धुरभरैरिति पाठे गजसङ्घैः कर्तृभिः वमथुभिः करणैरिति व्याख्येयं। वमथुः करिसीकरः। अवश्यायस्तु नीहार इत्यमरः। प्रहमरेति। स्रघस्यद इति क्मरच् (पा० ३।२।१६०।) अवश्यायेति। श्याद्व्यधेति णः (पा० ३।१।१४१)। तेषां। पुमान् स्त्रियेत्येकशेषः (पा० १।२।६७।)॥ ८२॥

आत्मन्यस्य समुचितीकृतगुणस्याद्येतरामौचिती
यद्गात्रान्तरवर्जनादजनयद्भूजानिरेष द्विषां ।
भूयोऽहंक्रियते स्म येन च हृदा स्कन्धो न यस्यानमत्
तन्मर्म्माणि दलं दलं समिदलंकर्म्मीणवाणव्रजः ॥ ८३ ॥
दूरं गौरगुणैरहंकृतिमृतां जैत्राङ्ककारे चर-
त्येतद्दोर्यशसि प्रयाति कुमुदं विभ्यन्न निद्रां निशि ।

आत्मनीति। आत्मनि स्वीये स्वरूपे समुचितीकृतगुणस्य मेलितसौन्दर्य्यादिसर्व्वगुणस्यास्य राज्ञः अद्येतरामतिशयेनौचितीयं। यत एष भूजानिर्भूपतिर्द्विषां गात्रान्तराणां हृत्स्कन्धेतराणां वर्जनात् अवयवान्तरं परित्यज्येत्यर्थः। येन च हृदा भूयः पुनः पुनरतितरां अहंक्रियते स्म अहङ्कारिणा जातमित्यर्थः। यस्य स्कन्धः नानमत् नम्रो न भूतः तस्यैव स्कन्धस्य मर्म्माणि अतिमृदूनि जीवस्थानानि दलं दलं खण्डं खण्डं अजनयत् चकार नान्येषां। किंभूतः। समिति सङ्ग्रामे अलङ्कर्म्मणो अलङ्कर्म्मीणोऽरिमारणसमर्थः वाणव्रजो यस्य। अपराधी हि राज्ञा दण्ड्यः। तत्स्कन्धस्यैवापराधो नान्येषां तस्यैव दण्डं कृतवान्नान्येषामित्यतितरामस्यौचितीत्यर्थः। अयञ्च सगुणः सदर्पान् सर्व्वांश्च मारयति शरणागतांस्तु रक्षतीति भावः। कर्म्मक्षमो-ऽलङ्कर्म्मीण इत्यमरः। अलङ्कर्म्मणे, पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्यीति समासे (पा० २।२।१८ सू० ७ वा०) अलङ्कर्म्मशब्दात्स्वार्थे, अषडक्षाशितंग्वलङ्कर्म्मेति खः (पा० ५।४।७।) ॥ ८३ ॥

दूरमिति। गौरगुणैः धवलवर्णैः कृत्वा दूरं भृशं अहंकृति-

धम्मिल्ले तव मल्लिकासुमनसां माल्यं भिया लीयते
पीयूषस्रवकैतवाद्धृतदरः शीतद्युतिः स्विद्यति ॥ ८४ ॥
एतद्गन्धगजस्तृषाम्भसि भृशं कण्ठान्तमज्जत्तनुः
फेनैः पाण्डुरितः स्वदिक्करिजयक्रीडायशःस्पर्द्धिभिः।

सतां अहङ्कारवतां वसूनां जैत्रस्य तदङ्ककारि च तस्मिन् जयाङ्ककारिणि एतद्दीर्यशसि एतस्य साङ्गयशसि सकलेषु जगत्सु चरति प्रसरति सति अथ च स्वप्रतिमल्लगवेषणाय भुवनं परिभ्रमति सति बिभ्यत् भीतं कुमुदं निशि निद्रां स्वप्नमथ च सङ्कोचं न प्रयाति। तथा मल्लिकासुमनसां माल्यं माला अस्माद्भिया तव धम्मिल्ले केशपाशे ग्रन्थनविशेषे लीयते आत्मानं गोपायति। अथ वा अदृश्यं तिष्ठति। तथा शीतद्युतिश्चन्द्रो धृतदरः प्राप्तभयः सन् पीयूषस्रवकैतवादमृतस्रवणव्याजात् स्विद्यति खेदं मुञ्चति। अथ च हिमकणान् मुञ्चति। एकयोद्धा मल्लकार इति वा। कुमुदादिभ्योऽप्यधिकं धवलमेतदीयं यश इति भावः। वह्नि धारयेन्माल्यमिति केशान्तर्गतमाल्यधारणाद्भैम्याः सदाचारत्वं सूचितं ॥ ८४ ॥

एतदिति। एतस्य गन्धगजः यः सप्तसु स्थानेषु स्रवति स गन्धगजः। स्वदानमलमूत्रादिगन्धेन जितान्यकरी। विरोधिकरिगन्धमसहमान इति वा गन्धगजः। कराम्भोवमिषयाजात् शुण्डदण्डाग्रेण मुखधृतगण्डूषजलवमनमिषात् अम्बुधेः समुद्रस्य अभ्रमुनाम्न्याः करिण्याः स्वभर्त्तुरैरावणस्य विरहं प्रवसितयोगजनितं

दन्तद्वन्द्वजलानुबिम्बनचतुर्दन्तः कराम्भोवमि-
व्याजादभ्रमुवल्लभेन विरहं निर्वापयत्यम्बुधेः ॥ ८५ ॥
अथैतदुर्वीपतिवर्णनाद्भुतं
न्यमीलदास्वादयितुं हृदीव सा ।

शोकं निर्वापयति शमयति । किंभूतः । भृशं नितरां तृषा पिपासया सफेनत्वात्क्षीराब्धेः पुरः प्रसर्पणेन कण्ठान्तं ग्रीवां मर्यादीकृत्य मज्जन्तो जले क्रीडन्तो जलप्रवेशाद्दृश्यमाना तनुर्देहो यस्य एवम्भूतः । तया स्वकीया दिक् प्राची तस्याः करी ऐरावणोऽन्यो वा तत्रत्याः करिणस्तेषां जयक्रीडा तयोपार्जितैर्यशोभिः सह स्पर्द्धिभिस्तद्वदुज्ज्वलैः फेनैः जलावगाहनोद्धूतैर्निमग्नदेहार्द्धदेशे पाण्डुरितः धवलीकृतः । तथा दन्तद्वन्द्वस्य दन्तद्वयस्य जलेऽनुबिम्बनं प्रतिबिम्बस्तेन कृत्वा चत्वारो दन्ता यस्य सः । जलमध्ये विद्यमानत्वाद्धवलत्वाच्चतुर्दन्तत्वाचैरावण एवायमिति भ्रान्त्या समुद्रः सुखी भवतीत्यर्थः । आसमुद्रं दिग्विजयीत्यर्थः ॥ ८५ ॥

अथेति । अथ सा भैमी न्यमीलत् अक्षिपक्ष्मसङ्कोचं चकार । किंभूता । अतिप्रीत्या मधुस्रजा वरणमधूकमालया नैषधस्य नाम जपति तच्छीलाऽत एव स्फुटीभवन् प्रत्यक्षायमाणः ध्यानेन चिन्तमातिशयेन पुरः स्फुरन् अपह्नुततयाऽवभासमानो नलो यस्याः सा । तत्रोत्प्रेक्षते । एतस्योर्वीपतेर्वर्णनया समुत्पन्नमद्भुतमाश्चर्यं हृदि विद्यमानं आस्वादयितुमिव । आश्चर्यस्य चेतसि वर्त्तमानत्वात्तदनुभवार्थं नेत्रे अप्यन्तः प्रविष्टे इवेत्यर्थः ।

मधुस्रजा नैषधनामजापिनी
स्फुटीभवद्ध्यानपुरःस्फुरन्नला ॥ ८६ ॥
प्रशंसितुं संसदुपान्तरञ्जिनं
श्रिया जयन्तं जगतीश्वरं जिनं।
गिरः प्रतस्तार पुरावदेव ता
दिनान्तसन्ध्यासमयस्य देवता ॥ ८७ ॥
तथाधिकुर्य्या रुचिरे चिरेप्सिता
यथोत्सुकः सम्प्रति सम्प्रतीच्छति।

नले एवानुरक्ता सती नेत्रनिमीलनेनैव तं नृपं निरीचीच-कारेति भावः। अन्योऽपि जपमालयाभीष्टदेवतामन्त्रजपं कुर्व्वन् तां साक्षात्कर्त्तुं नेत्रे निमील्य ध्यानेन तां साक्षात्क-रोति ॥ ८६ ॥

प्रशंसितुमिति। दिनान्तसन्ध्यासमयस्य देवता सरस्वती पुरावदेव पूर्व्ववदेव ता अतिगभीरमधुरा गिरः प्रतस्तार उवाच। किं कर्त्तुं। संसदः सभाया उपान्तौ उभयपार्श्वौ रञ्ज-यत्येवं शीलं श्रिया शरीरशोभया श्लाऽतिसुन्दरं जिनं बुद्धदेवं जयन्तं जगत्याः पृथिव्या ईश्वरं राजानं प्रशंसितुं वर्णयितुं। श्रिया संसदुपान्तरञ्जिनं जयन्तं जगति शौर्य्यादिना इन्द्रपुत्र-तुल्यं कीकटदेशप्रभुत्वाज्जिनं बौद्धं राजानमिति वा जयन्त-नामानं वा। जगदीश्वरमिति पाठे जिनविशेषणं ॥ ८७ ॥

तथेति। हे रुचिरे सुन्दरि त्वं तथा तेन प्रकारेणाधि-

अपाङ्गरङ्गस्थललास्यलम्पटाः
कटाक्षधारास्तव कीकटाधिपः ॥ ८८ ॥
इदंयशांसि द्विषतः सुधारुचः
किमङ्कमेतद्द्विषतः किमाननं।

कुर्य्याः अधिकारं कुर्य्याः। तथा कथं। यथा येन प्रकारेण कीकटाधिपः मगधदेशस्वामी तत्कटाक्षेषु उत्सुकः सन् चिरेप्सिताः तव कटाक्षधारास्तिर्य्यगवलोकनपरम्पराः सम्प्रतीदानीं सम्प्रतीच्छति अङ्गीकरोति। किंभूता धाराः। अपाङ्गो नेत्रप्रान्तास्तल्लक्षणं रङ्गस्थलं लास्यशाला तत्र लास्ये सविलासमन्दगतौ लम्पटाः। चिरेप्सिता त्वमिति वा। चिरेत्यकारान्तमव्ययं तेन समासः। एवमेवंशातीयेऽन्यत्रापि ज्ञातव्यं॥ ८८ ॥

इदमिति। अखिलेषु लोकेषु धाविभिः प्रसरणशीलैः लोकत्रयमुज्ज्वलं कुर्व्वाणैरस्य यशोभिः विशेषेण भीषिता लोकत्रयान्निर्व्वासिता तामसी कृष्णपक्षरात्रिरेव मषी इदंयशांसि अस्य कीर्त्तीर्द्विषतः असहमानस्य सुधारुचश्चन्द्रस्याङ्कं कलङ्कमयत्र सन्निधिं धावति शीघ्रं गच्छति प्रविशति किं। किंवा एतद्विषत एतच्छत्रोराननं प्राप्नोतीति संशयः। एतद्यशोभिश्चन्द्राद्यपि तनुसुभातिरिक्तस्य सकलस्यापि जगतः श्वेतीकरणात्तत्र निवस्तुमशक्ता सती मलिनं चन्द्रकलङ्कमेतच्छत्रुमुखञ्च प्रायेण गता। यो हि येन पराभूयते स तद्वेरिणमाश्रयतीत्यर्थः। अयमतिसरो यमस्मीति भावः। अन्योऽपि भीषितः स्वगोत्रं याति।

यशोभिरस्याखिललोकधाविभि-
र्विभीषिता धावति तामसी मषी॥ ८९॥
इदं नृपप्रार्थिभिरुज्झितोऽर्थिभि-
र्मणिप्ररोहेण विवृध्य रोहणः।
कियद्दिनैरम्बरमावरिष्यते
मुधा मुनिर्विन्ध्यमरुद्ध भूधरं॥ ९०॥

श्यामस्य च श्यामं वस्तु सगोत्रमिति। तामसी तमःसम्बन्धिनी रात्रिः मषी श्यामवस्तुमात्रगता श्यामिका च यथाक्रमं चन्द्राङ्कं शत्रुमुखं धावति किमिति वा। निरन्तरोद्योतकरणादेतत्कीर्त्त्या निष्काशितेव तामसी स्त्रीभावभीरुर्भर्त्तुश्चन्द्रस्योत्सङ्गं गता। अत एव रात्रिकालिमा चन्द्राङ्के दृश्यते। सर्व्वस्यापि श्वेतीकरणात् श्यामिकापि निर्व्वासिताऽन्यत्र स्थातुमशक्ततयैव रिपुमुखं गता। अत एव विवर्णीभूतेषु वैरिमुखेषु कालिमा दृश्यते। एतद्द्विषतः। दिषःशतुर्व्वेति (पा॰ २। ३। ६८ सू॰ ६ वा॰) षष्ठीसमासः ॥ ८९ ॥

इदमिति। अतिवदान्यस्यास्य नृपस्य प्रार्थनशीलैरर्थिभिर्याचकैरनेनैव समस्तकामानां पूरितत्वादुज्झितः परित्यक्तः अत एव स्वव्ययाभावान्मणिप्ररोहेण विवृध्य अङ्कुरोत्पत्त्या विशेषेण वृद्धिं प्राप्य रोहणो मेरुः कियद्भिः कतिपयैरल्पैरेव दिनैः अम्बरमावरिष्यते आच्छादयिष्यति यतस्तस्मान्मुनिरगस्तिर्विन्ध्यनामानं भूधरं मुधैवारुद्ध मदागमनपर्यन्तं त्वया न वर्द्धितव्यमिति नियमेन वृथैव वाग्यद्धमकरोत्। तद्वृद्ध्यभावेऽपि

भूशक्रस्य यशांसि विक्रमभरेणोपार्जितानि क्रमा-
देतस्य स्तुमहे महेभदशनस्पर्द्धीनि कैरक्षरैः ।
लिम्पद्भिः कृतकं कृतोऽपि रजतं राज्ञां यशःपारदै-
रस्य स्वर्णगिरिः प्रतापदहनैः स्वर्णं पुनर्निर्म्मितः ॥ ९१ ॥

रोहणेनैव सूर्य्यगतेः प्रतिबन्धकस्य करिष्यमाणत्वादगस्त्यप्रयासस्य वैयर्थ्यमेव जातमित्यर्थः । अगस्त्येन विन्ध्यरोधस्तु पुराणप्रसिद्धः । अतिवदान्योऽयमिति भावः । आवरिष्यते । विकल्पत्वादिटो दीर्घत्वेति (पा० ७।२।३८)। अरुद्धेति । लङात्मनेपदं ॥ ९० ॥

भूशक्रस्येति । वयं विक्रमस्य भरेण बाहुल्येन क्रमात्पारिपाट्यात् उपार्जितानि एतस्य भूशक्रस्य पृथ्वीन्द्रस्य यशांसि कैरक्षरैर्वर्णैः स्तुमहे वर्णयामः । यशसां भूयस्त्वादक्षराणां पञ्चाशत्त्वात् स्तोतुं न शक्नुमः । सामान्याकारेण कथञ्चिद्वर्ण्यन्त इत्यर्थः । किम्भूतानि । महेभाः षष्टिहायना गजा ऐरावतो वा तेषां दशनैः सह स्पर्द्धन्त एवंशीलानि तद्वद्गौराणि । स्वर्णगिरिर्मेरुरन्येषां राज्ञां लिम्पद्भिर्यशोलक्षणैः पारदैः कृतकमसत्यं रजतं कृतोऽपि प्रलेपनिर्म्मितपाण्डुद्युतितां नीतोऽपि सन् अस्य प्रतापरूपैर्दहनैरग्निभिः पुनः स्वर्णं निर्म्मितः कृतः । प्रतापस्य पीतत्वात्सुवर्णरूपतां प्रापितः । पारदलेपनेन सुवर्णं श्वेतीभवति वह्नितापेन चोड्डीने पारदे पुनः काञ्चनमेव भवतीत्यर्थः । एतत्प्रतापाग्रे परेषां यशांसि न प्रसरन्ति । यशस्वी प्रतापवांश्चान्यः कोऽपि नास्तीत्यर्थः ॥ ८१ ॥

यद्भर्त्तुः कुरुतेऽभिषेणनमयं शक्रो भुवः सा ध्रुवं
दिग्दाहैरिव भस्मभिर्म्मघवता दृष्टैः कृतोद्धूलना।
शम्भोर्म्मा वत सान्ध्यवेलनटनं भाजि व्रतं द्रागिति
क्षोणी नृत्यति मूर्त्तिरष्टवपुषोऽसृग्वृष्टिसन्ध्याधिया ॥ ९२ ॥

यदिति। अयं भुवः शक्रो भूमीन्द्रः यस्या भूमेर्भर्त्तुःपत्युः अभिषेणनं सेनयाऽभिगमनं कुरुते सा क्षोणी भूमिः इति मनसि कृत्वा लोहितलेनौत्पातिकी असृग्वृष्टिः रुधिरवृष्टिस्तद्रूपा या सायंसन्ध्या तस्या धिया भ्रमबुद्ध्या द्राक् शीघ्रं नृत्यति गात्रविक्षेपं करोति कम्पत इत्यर्थः। वत खेदे। भुवमुत्प्रेक्षे। किम्भूता सा। दाहादिन्धनज्वलनसम्भावात् दिग्दाहैरिव दिग्दाहाद्दिशामौत्पातिकनिर्हेतुकलोहितदीप्तेः प्रभवैरिव मघवतेन्द्रेण दृष्टैर्म्मोचितैः भस्मभिः कृत्वा कृतं धृतमुद्धूलनं अङ्गलेपो यया सा। इति किं। शम्भोः दिनरात्रिसन्धिरूपायां वेलायां काले भवं सान्ध्यवेलं सायंसन्ध्याकालसमुचितं नटनं नृत्यरूपं व्रतं नियमः माभाजि भग्नो माभूदिति स्वयं नृत्यतीत्यर्थः। यतः अष्टमूर्त्तेर्जलाद्यष्टमूर्त्तेः शम्भोरेका मूर्त्तिः पृथ्वी। शिवो हि सन्ध्यासमये नृत्यं करोति तन्मूर्त्तित्वात्तयापि नृत्यमारब्धमित्यर्थः। यमुद्दिश्य अयं प्रयाणं करोति तस्मिन्देशे दिग्दाहभस्मवृष्टिभूकम्परक्तवृष्टिमयणास्तत्पराजयसूचका उत्पाता भवन्ति। अयमेव विजयत इत्यर्थः। जमार्केन्द्वात्मखभूमिवायवः शिवमूर्त्तयः। यसेनयाभिगमनं राजाद्भिषेणमित्य-

प्रागेतद्वपुरामुखेन्दु सृजतः स्रष्टुः समग्रस्त्विषां
कोशः शोषमगादगाधजगतीशिल्पेऽप्यनल्पायितः ।
निःशेषद्युतिमण्डलव्ययवशादीषत्प्रभैरेष वा
शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्म्मितः ॥ ८३ ॥

मरः । यज्ञर्त्तुः । भर्तृशब्दस्य पत्यर्थत्वाद्याजकादित्वात् समासः । (पा० २ । २ । ९) सेनयाऽभिगमनमभिषेणनं । सत्यापपाशेति (पा० ३ । १ । २५) णिचि लुट् । उपसर्गात् सुनोतीति (पा० ८ । ३ । ६५) षत्वं । दिग्द्वादेरित्यत्र तसेदमित्यण् (पा० ४ । ३ । १२०)। सन्निवेलायां भवं सान्निवेलं। सन्निवेलेत्यण् (पा० ४ । ३ । १६)। इन्द्रः शिवस्य भस्मापहरणेऽधिकारी अत एव दिशां दाहं कृत्वा भस्मार्पितवान् इति केचित् ॥ ८२ ॥

प्रागिति । प्राक् सर्गादौ अगाधजगतीशिल्पेऽपि असर्य्या-द्वैलोक्यनिर्म्माणविषयेऽपि त्विषां समस्तः सकलः कोशो भाण्डारागारसञ्चयः नाल्पायितः अल्पवदाचरितः किन्तु ता-वानेवाक्षयः स्थितः । आमुखेन्दु मुखचन्द्रमभिव्याप्य एतस्य वपुः सृजतः स्रष्टुः ब्रह्मणः सम्बन्धी स त्विषां समस्तः कोशः शोषं समाप्तिं अगात् प्राप चयितः । यतश्चरणप्रभृतिमुखपर्य्यन्तावय-वनिर्म्माणार्थमेव पूर्णो न तु केशनिर्म्माणार्थं। ततस्तस्मात् कान्ति-क्षयाद्धेतोः केशमयः केशप्रचुरः केशरूपोऽस्य एष शेषो भागः निःशेषं द्युतिमण्डलं समस्ततेजोराशिस्तस्य व्ययवशात्क्षयवशात् •भाभावस्तम इति न्यायात् ईषत्प्रभैः सुप्रापैः सुलभैरन्धतमस-

तत्तद्दिग्जैत्रयात्रोद्धुरतुरगखुराग्रोद्धुतैरन्धकारं
निर्वाणारिप्रतापानलजमिव सृजत्येष राजा रजोभिः ।

स्तोमैर्गाढान्धकारमयैः कृत्वा किंवा निर्म्मितः इत्युत्प्रेक्षा। सुन्दरतरोऽयं केशास्यातिनीला घनाश्चेति भावः। ईषल्लभैः। अल्पार्थे खल्। उपसर्गादेव खल्घञोर्नान्यत्रेति नियमान्नुमभावः (पा० ७।१।६७)। अन्धतमसः। अवसमन्धेभ्यस्तमसः इत्यच् (पा० ५।४।७९) ॥ ८३ ॥

तद्दिति। एष राजा तासां प्राच्यादीनां सर्व्वासां दिशां जैत्रा जयकारिण्यो यात्रास्तासु उद्धुरा उत्साहवन्तोऽतिबलिनस्तुरङ्गास्तेषां खुराग्रैरुद्धुतैरजोभिः कृत्वा अन्धकारं सृजति। कथम्भूतमिव। निर्वाणः शान्तः अरिप्रतापानलस्तस्मादनन्तरजातमिव अन्धकारं सूर्य्यप्रकाशस्याच्छादितत्वात् तमः सृजति। अनले शान्ते भाभावरूपोऽन्धकारो भवति। एतस्य दिग्जययात्रायां प्रारब्धायां सर्व्वेषामपि वैरिणां प्रतापः शान्तो भवतीति भावः। तुरङ्गवाजाश्च। तथा एतस्य कीर्त्तिप्रतानैर्यशोविस्तारैरेव च विधुभिर्बहुभिश्चन्द्रैः युधे युद्धार्थं आह्वयमानः स्पर्द्धापूर्व्वमाकारित एव राज्ञः भियेव भयेनेव भूगोलस्य भूमण्डलस्य छायामयेन मायारूपेण व्याजेन गणितविद्भिः ज्यौतिषिकैर्गणितशास्त्रमाहात्म्येन उन्नेयस्तर्क्यः कायः शरीरं यस्यैवंभूतोऽभूत्। एतत्कीर्त्तिमयचन्द्रान् दृष्ट्वा एकस्य जेतुमशक्यत्वाद्राहुणा स्वङ्गोपायितुं भूगोलच्छायरूपं मायामयशरीरं धृतमि-

भूगोलच्छायमायामयगणितविदुन्नेयकायो भियाभू-
देतत्कीर्त्तिप्रतानैर्विधुभिरिव युधे राहुराहूयमानः ॥९४॥
आस्ते दामोदरीयामियमुदरदरीं यावलम्ब्य त्रिलोकी
सम्मातुं शक्तिमन्ति प्रथिमभरवशादत्र नैतद्यशांसि।
तामेतां पूरयित्वा निरगुरिव मधुध्वंसिनः पाण्डुपद्म-
च्छद्मापन्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥९५॥

त्यर्थः। ज्योतिःशास्त्रे च भूगोलच्छायैव राहुत्वेनोक्ता। अन्योऽपि शत्रोर्भीतः स्वं गोपायितुं रूपान्तरं धारयति। एतादृशो यशस्वी कोऽपि नास्तीति भावः। निर्वाणेति। निर्वाणोऽवात इति तस्य णत्वं (पा॰ ८।२।५०)। छायमायेति। विभाषासेनेति षण्डत्वं (पा॰ २।४।२५)॥९४॥

आस्त इति। या इयं त्रिलोकी लोकत्रयी दामोदरीयां उदरदरीं श्रीविष्णोर्जठरकन्दरामवलम्ब्याश्रित्यास्ते अत्रास्यां दामोदरोदरस्थितायां त्रिलोक्यां प्रथिमभरवशात् महत्त्वा-ऽत्यादतिसमातुं सुखेन स्थातुं न शक्नुवन्ति असमर्थानि सन्ति मान्यतिप्रसिद्धानि द्विपदशनैः सनाभीनि सदृशानि अतिगौराणि एतस्य यशांसि तामेतां विष्णूदरदरीस्थितां तत्सहितां त्रिलोकीं पूरयित्वावशिष्टानि तामुदरदरीं तस्थां त्रिलोकीं च परिपूर्णावशिष्टानि वा पाण्डुपद्मच्छद्मापन्नानि नाभीसमुत्पन्नपद्मस्य व्याजमापन्नानि तदाकाराणि सन्ति मधुध्वंसिनो विष्णोर्नाभीरूपेण पथा मार्गेण निरगुरिव निर्जग्मुरिव सट-

अस्यासिर्भुजगः स्वकोशसुषिराकृष्टः स्फुरत्कालिमा
कम्पोन्मीलदरालवल्लनस्तेषां भिये भूभुजां ।
सङ्ग्रामेषु निजाङ्गुलीमयमहासिद्धौषधीवीरुधः
पर्व्वास्ये विनिवेश्य जाङ्गुलिकता यैर्नाम नालम्बिता ॥ ८६ ॥

वासयात्तनाभिया बहिर्निर्गतानीव श्रीविष्णोर्नाभौ धवलं कमलं अन्ययोग्मेचितं पाण्डुपद्मं न किन्त्विदद्यशांसि । अथवा करिदन्तधवलतुल्यान्यतिभूयांसि चास्य यशांसीति भावः । दामोदरीयां । वृद्धाच्छः (पा॰ ४ । २ । ११४) । प्रथिमा । पृथ्वादिभ्यादिमनिच् । (पा॰ ५ । १ । १२२) । नाभीपथेन । स्वगादिना समासान्तः ( पा॰ ५ । ४ । ७४ ) ॥ ८५ ॥

अस्येति । अस्यासिरेव भुजगस्तेषां भूभुजां राज्ञां भिये भवतीति शेषः । किंभूतः । स्वकोश एव चर्म्ममयं पिधानं तदेव सुषिरं वल्मीकविवरं तस्मादाकृष्टः बहिष्कृतः सद्यो हतस्य तथा स्फुरन् प्रकाशमानः उत्तमलोहजातिविशेषत्वात् कालिमा श्यामत्वं यस्य । सर्पोऽपि सद्यो धृतत्वात् स्फुरत्कालिमा । तथा कम्पेन नव दृष्टान्दोलनेन छला उन्मीलन्त्यः प्रकटीभूता अराला वक्रा लीला येषु तादृशानि वल्लनानि गतिविशेषा यस्य । सर्पोऽपि वक्रगतिर्भवति । तेषां केषां । यैः सङ्ग्रामेषु निजाङ्गुलीमय्याः स्वीयाङ्गुलीरूपाया महासिद्धौषध्या वीरुधः स्पर्शमात्रेण विषघ्नाः वल्ग्याः पर्व्व ग्रन्थिराङ्गुष्ठाग्रपर्व्वग्रन्थिदयस्य आस्ये मुखे विनिवेश्य जाङ्गुलिकता विषवैद्यता गारुडिकता नालम्बिता

यः पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रता-
मस्मिन्नेव बिभर्त्ति यश्च किरति क्रूरध्वनिं निष्ठुरः।
दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुणं
विख्यातः स्फुटमेक एष नृपतिः सीमा गुणग्राहिणाम्॥९७॥

नाम प्रसिद्धो। सर्पोऽपि येन स्वमुखे सिद्धौषधीपर्व्वं न निचि-
प्यते तमेव यथा मारयति तथा एतदीयः शत्रुरोऽपि ये शस्त्राणि
न त्यजन्ति दैन्याच्च मुखे अङ्गुलीपर्व्वं न धारयन्ति तानेव
हन्ति नान्यान् विनीतांश्छरणागतांश्च। विषवैद्यो जाङ्गुलिक
इत्यमरः॥९६॥

य इति। अरिभटश्रेणीषु क्रूरतरवैरिसङ्घेषु विषये युधि
यः पृष्ठं दर्शयति पराङ्मुखः पलायते अथ च यं प्रत्याकृष्यते
तस्य स्वभावात् पृष्ठं दर्शयति। यः अस्मिन् स्वस्वामिन्येव नृपे
वक्रतामनृजुतं स्वाश्रय एव कृतघ्नत्वं बिभर्त्ति। अथ चान्यस्यैता-
दृग्बलाभावात् अस्मिन्नेव वक्रतां बिभर्त्ति नान्येन न स्वीकर्त्तुं
शक्यत इत्यर्थः। तथा यो निष्ठुरो निर्दयो दाक्षिण्यरहितः
सन् क्रूरध्वनिं अनेन सहाप्रियभाषणं किरति। अथ च परिघ-
तादरेराजस्य क्रूरं वैरिणां भयावहं शब्दं किरति क्षिपति।
दोषं दूषणं अथ च बाहुं भजतः तथाविधस्य तस्य चापस्य
तथाविधस्यान्यस्य वा कस्यचिद्गुणं सुतशौर्यादिकं गृह्णन् वर्णयन्।
अथ च मौर्व्वीग्राहिणां धनुर्द्धराणां सीमा पर्य्यन्तावधिः स्फुटं
विख्यातः प्रसिद्ध एक एष राजा। एवंविधो धनुर्द्धरः सम्-

अस्यारिप्रकरः शरश्च नृपतेः सङ्ख्ये पतन्तावुभौ
सीत्कारञ्च न सम्मुखौ रचयतः कम्पञ्च न प्रापतुः।
तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्त्ति यन्मुक्तयो-
रेकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्भुतं ॥ ९८ ॥

नच कोऽपि नास्तीत्यर्थः। धनुःपृष्ठदर्शनेनैतस्य पलायनाभावः सूचितः॥ ९७ ॥

अस्येति। अस्य नृपतेरुभौ सङ्ख्ये सङ्ग्रामे क्रमेण सम्मुखौ एतत्सम्मुखं वैरिसम्मुखञ्च पतन्तौ सन्तौ सीत्कारं दुःखाभिव्यञ्जकं दन्तमध्ये निर्गतं पक्षवातजनितञ्च ध्वनिविशेषं यस्र रचयतः कुरुतः यच मरणभीतिजनितं दुर्निर्गतत्वजनितञ्च कम्पं न प्रापतुः। उभौ कौ। अरिप्रकरः वैरिसङ्घः शरश्च एतौ द्वौ। तथा मुक्तयोः प्राप्तमोक्षधनुश्च्युतयोरुभयोर्यत्पुनर्निवृत्तिः जन्म प्रत्यागमनञ्च न जागर्त्ति भवति तत्सर्वं युक्तमुचितमेव। द्वयोरपि तुल्यधर्मत्वात्। तर्हि विलक्षणं किमित्याशङ्कायामाह। तत्र तयोर्द्वयोर्मध्ये एको वैरिसङ्घः मित्रं सुहृदमथ च सूर्यं भिनत्ति। अपरश्च शरः अमित्रं सूर्यव्यतिरिक्तमथ च वैरिणं भिनत्ति द्विधा करोतीत्यद्भुतं आश्चर्यं। तुल्यकर्मणोरतुल्यकर्मारम्भकत्वस्य विरुद्धत्वादित्यर्थः। चावन्योन्यसमुच्चये। दुःखभयरहितेन रणे सम्मुखः पतति शत्रुसङ्घः। द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ इति वचनात् सूर्यमण्डलं भित्त्वा मुक्तिं प्रापतुः। अदृढमुष्टितया मुक्तवाणः कम्पसीत्कारौ रचयति। तदकरणाच दृढमुष्टिताश्च सूचिता। दृढमुष्टित्वेन मुक्तो वैरिमध्ये न पुन-

धूलीभिर्दिवमन्धयन् बधिरयन्नाशाः खुराणां रवै-
र्वातं संयति खञ्जयन् जवजयैः स्तोतॄन् गुणैर्मूकयन्।
धर्माराधनसन्नियुक्तजगता राज्ञाऽमुनाधिष्ठितः
सान्द्रोत्फालमिषाद्विगायति यदा स्प्रष्टुं तुरङ्गोऽपि गाम्॥९९॥

रायाति वैरिणं हन्तीत्यर्थः। प्रहरतरोऽयं प्रभुमात्रं हतवानिति भावः। बाणपक्षे सम्यक् मुखं पुङ्खमयं वा यस्येति॥९८॥

धूलीभिरिति। धर्माराधने सम्यङ्नियुक्तं प्रेरितं जगद् येनैवंभूतेनामुना राज्ञा अधिष्ठित आरूढस्तुरङ्गोऽपि धूलीभिः खुररजोभिः दिवं स्वर्गलोकं अन्धयन् अन्धं कुर्वन् चक्षुः प्रविष्टाद्रजस एव निमीलितनयनं कुर्वन्नित्यर्थः। तथा खुराणां रवैः समुच्छलनशब्दैः हेला आशा दिशः प्रान्तनिवासिनो जनान् बधिरयन् बधिरतया शब्दान्तरग्रहणाशक्तान् कुर्वन्। तथा संयति सङ्ग्रामे जवस्य वातवेगस्य जयैः वायोःसकाशादतिवेगतया वातं खञ्जयन् पङ्गुं कुर्वन्। तथा गुणैर्हेतुभिः स्तोतॄन् अश्वजयस्वरूपलक्षणादिवर्णनकारिणो जनान् मूकयन् गुणाधिकत्वेन सामस्त्येन स्तोतुमसमर्थान्मूकानिव कुर्वन्। एवंभूतः सन्ननन्तरं सान्द्राणां निरन्तराणामुत्फालानां चतुर्भिश्चरणैरुत्पतनानां मिषात् पदैकेनापि चरणेन गां भुवमथच धेनुं स्प्रष्टुं तस्याः स्पर्शनं कर्त्तुं विगायति विशेषेण जुगुप्सते। धार्म्मिको राजा निषिद्धमाचरतः स्वाधीनान् पापिनो दण्डयति। अहं तु तदधिष्ठितः यदा गोस्पर्शलक्षणं पापं कुर्वन् दण्ड्यः स्यामिति बुद्ध्या यदा

एतेनोत्कृत्तकण्ठप्रतिसुभटनटारब्धनाट्याद्भुतानां
कष्टं द्रष्टैव नाभूद्भुवि समरसमालोकिलोकास्पदेऽपि।
अश्वैरस्वैरवेगैः कृतखुरखुरलीमंचुविचुद्यमान-
क्ष्मापृष्ठोत्तिष्ठदन्धङ्करणरणधुरारेणुधाराान्धकारात्॥ १००॥

न स्पृशति चेत्यर्थः। धार्मिको जवनाश्वश्चायमेवेत्यर्थः। अन्ध-यन्नित्यादौ तत्करोतीति णिजन्तात्क्वट्॥ ९९॥

एतेनेति। समरसमालोकिनो ये लोकास्तेषामास्पदे स्थानभूतायामपि भुवि। अथवा समरसमालोकिलोकानां देवानामास्पदे गगने वियति। एतेन राज्ञा उत्कृत्तकण्ठाः छिन्नग्रीवाः कबन्धरूपाः प्रतिसुभटाः रिपुवीरास्त एव नटा नर्त्तकास्तैरारब्धानां नाट्याद्भुतानां नृत्ताश्चर्याणां द्रष्टा नाभूदेव कष्टमेतत् दुःखमेतत्। तत्र हेतुः। अस्वैरवेगैः शीघ्रजवैरश्वैः कृता खुरैः कृता खुरली अभ्यासभूमिः पुरः पुरः न्यासो वा तया मंचु मनोज्ञं शीघ्रं वा विशेषेण चुद्यमानं चूर्णीभवत् क्ष्मापृष्ठं भूतलं तस्मादुत्तिष्ठन् उत्पतन् अनन्धमन्धं करोति अन्धङ्करण एवंभूतः रणधुरारेणुः रणमारम्भ एव समुत्पन्नो रेणुस्तस्य धाराः प्रवाहास्तज्जनितादन्धकारात्। रणविलोकनार्थमागतैरपि मानवैर्देवैरपि अश्वखुरोत्थितरजःपूरितनेत्रैः कबन्धनृत्यं नालोकीत्यर्थः। मन्दस्वच्छन्दयोः स्वैरं इति मेदिनी। एतस्योत्तमाङ्गेति पाठः साधीयान्। द्रष्टा। तृच्। रणधुरा। ऋगादिना ऽप्। (पा० ५।४।७४)॥ १००॥

उन्मीलन्नीलनीलोत्पलदलदलनामोदमेदस्विपूर-
क्रोडक्रीडद्द्विजालीगलदुदितमरुत् स्फालवाचालवीचिः।
एतेनाखानि शाखानिवहनवहरित्पर्णपूर्णद्रुमाली-
व्यालीढोपान्तशान्तव्यथपथिकदृशां दत्तरागस्तडागः॥ १०१॥
वृद्धो वार्द्धिरसौ तरङ्गवलिभं बिभ्रद्वपुः पाण्डुरं
हंसालीपलितेन यष्टिकलितस्तावद्वयोवंद्धिमा।

उन्मीलदिति। एतेन राज्ञा एतादृशस्तडागः अखानि। किंभूतः। उन्मीलन्ती विकसन्ती लीला विलासो येषां तानि नीलोत्पलानि तेषां दलानि पत्राणि तेषां दलनं विकासनं तदुद्भवेनामोदेन परिमलेन मेदस्वी पुष्टः बहुलपरिमलः पूरः प्रवाहस्तस्य क्रोडे उत्सङ्गे क्रीडन्ती द्विजाली हंसादिपङ्क्तिस्तस्या गलद्भ्यः पक्षेभ्य उदित उत्पन्नो मरुद्वायुः तस्य स्फालः सवेगगमनं सङ्घट्टो वा तेन वाचालाः शब्दायमानाः वीचयो यस्य। तथा शाखानिवहैः नवहरित्पर्णैर्नूतनश्यामपर्णैश्च पूर्णा द्रुमाल्यः वृक्षपङ्क्तयः ताभिर्व्यालीढः व्याप्तः उपान्तस्तीरप्रदेशस्तेन शान्ता व्यथा ग्रीष्मोष्मपीडा यासां तासां पथिकदृशां ग्रीष्मोष्मपीडा येषां पथिकानां वा दृशः तासां दत्तः रागः सन्तोषो येन। अस्य तडागस्यातिरमणीयत्वं सुखजनकत्वं अस्य च धार्मिकत्वं सूचितं॥ १०१॥

वृद्ध इति। असौ अनेन निर्मितस्तडागः वृद्धो महान् वार्द्धिः समुद्रः। समुद्रापेक्षयापि महानित्यर्थः। अथवा ऽसौ वारि

विभ्रच्चन्द्रिकया च कं विकचया योग्यस्फुरत्सङ्गतं
स्थाने स्नानविधायिधार्म्मिकशिरोनत्यापि नित्यादृतः ॥ १०२ ॥

धीयतेऽस्मिन् वार्द्धिर्वारिस्थानं तडाग एव वृद्धोऽतिप्रवयाः। कि-भूतः। तरङ्गैः कृत्वा वलिभं वलियुक्तं। तरङ्गा एव वार्द्धकसङ्कुचितस्थूलशरीरावयवविशेषस्थाने जाता यस्येत्यर्थः। तादृशतरङ्ग-रूपाभिर्वलिभिर्भाति इति वा। हंसालीपलितेन हंसपङ्क्तिरूपेण जराजनितश्वैत्येन पाण्डुरं धवलं प्रवाहरूपं वपुः बिभ्रत्। तथा यष्ट्या मध्यनिखातकीर्त्तिस्तम्भरूपया कलितो ज्ञातपरिमाणोऽलङ्कृत इत्यर्थः। अथ च स्खलच्छरीरधारणार्थं दण्डेन युक्तो धृतशरीर इत्यर्थः। तथा तावतामतिप्रह्वानां वयसां पक्षिणां बंहिमा बाहुल्यं यत्र। अथ च तावतः शतसमीपवर्त्तिनो वयसो वार्द्धकस्य बंहिमा यस्य। तथा विकचयाऽतिप्रकाशमानया चन्द्रिकया योग्यं समुचितं स्फुरत् प्रकाशमानं सङ्गतं मैत्रं यस्य। ज्योत्स्नावन्निर्मलं। अथ च समुद्रत्वादेतज्जलं ज्योत्स्नासमुचितं कं जलं बिभ्रत्। अथ च विगतकेशया चन्द्रिकया खालित्येन चान्दीति कान्यकुब्जभाषायां तया उचितं स्फुरन्मैत्रं कं शिरो बिभ्रत्। यद्वा केशरहितेन खालित्येनोपलक्षितं। तथा योग्यं वार्द्धकोचितं स्फुरत् प्रकटं सङ्गतं सम्यग्गतं कम्पनं यस्य शिरसस्तत्। तथा स्नानविधायिभिर्धार्म्मिकैः शिरोनत्यापि यत् नित्यादृतः तत् स्थाने उचितं। धार्म्मिकैश्च स्नानादौ तीर्थं नमस्क्रियते वार्द्धैरपि। समुद्रस्य पर्व्वण्येव स्पर्शयोग्यत्वादेतस्य मर्य्यादे-

तस्मिन्नेतेन यूना सह विहर पयःकेलिवेलासु बाले
नालेनास्तु त्वदक्षिप्रतिफलनभिदा तत्र नीलोत्पलानां।
तत्पाथोदेवतानां विशतु तव तनुच्छायमेवाधिकारे
तत्फुल्लाम्भोजराज्ये भवतु च भवदीयाननस्याभिषेकः ॥१०३॥

त्याधिक्यं समुद्रात्। वलिभमिति मत्वर्थे तुन्दिवलीति भः। (पा० ५।२।१३८)। द्वितीयाव्याख्याने पचाद्यच् (पा० ३।१।१३४)। वङ्किमेति। वङ्कस्य भावः। पृथ्वादित्वादिमनिच् (पा० ५।१।१२२)। प्रियस्थिरेति वंहिरादेशः (पा० ६।४।१५७)। धार्मिकः। धर्मं चरतीति ठक् (पा० ४।४।४१)॥१०२॥

तस्मिन्निति। हे बाले तस्मिन् तडागे त्वं एतेन यूना सह विहर क्रीड। तथा तत्र तडागे पयःकेलिवेलासु जलक्रीडावसरेषु योऽक्ष्णो वा तत्रैव नालस्य दृश्यत्वात्। प्रतियोगाभिप्रायं बहुवचनं। नीलोत्पलानां तवाक्षिप्रतिफलनात् नेत्रप्रतिबिम्बात् सकाशाद्भिदा भेदः नालेन कमलदण्डेनास्तु। प्रतिसादृश्यादिदं वा नीलोत्पलमिदं वेति संदेहे सनालं यत् तन्नीलोत्पलमनालस्य त्वन्नेत्रमिति नालमेव निर्णायकं भवत्वित्यर्थः। तथा तस्य पाथो जलं तस्य देवतानां अधिकारे आधिपत्ये वा तव तनुच्छायं त्वदीयशरीरप्रतिबिम्बमेव विशतु। तज्जलदेवतास्थाने त्वच्छरीरप्रतिबिम्बमेव भवत्वित्यर्थः। तथा तस्य फुल्लानां विकसितानां अम्भोजानां राज्ये खण्डे अथ चाधिपत्ये भवदीयाननस्य त्वदीयमुखकमलस्य च जलक्रीडावशात् अभि-

एतत्कीर्त्तिविवर्त्तधौतनिखिलत्रैलोक्यनिर्वासितै-
र्विश्रान्तिः कलिता कथासु जगतां श्यामैः समग्रैरपि ।
जज्ञे कीर्त्तिमयादहो भयभरैरस्मादकीर्त्तेः पुनः
सा यन्नास्य कथापथेऽपि मलिनच्छाया बबन्ध स्थितिं ॥१०४॥

षेकोऽद्य च पट्टाभिषेकः भवतु । नीलोत्पलजलदेवताफुल्लकम-
लापेक्षया भैमीनेत्रशरीराननमधिकमिति सूचितं । तनुछायं ।
विभाषासेनेति षण्डत्वं (पा० २ । ४ । २५) ॥ १०३ ॥

एतदिति । जगतां स्थावरजङ्गमात्मकानां भुवनानां सम्ब-
न्धिभिः समग्रैरपि श्यामैः कृष्णैः कज्जलादिपदार्थैः गुणैर्वा
कथासु वार्त्तास्वेव विश्रान्तिः कलिता आश्रयोऽङ्गीकृतः । किम्भूतैः
श्यामैः । एतस्य कीर्त्तेर्यशसः विवर्त्तेन परिणामेन विशेषेण
वर्त्तनं स्थितिर्वा तेन धौताद्धवलीकृतान्निखिलात् सकलात्
कन्दरादिसहितात् त्रैलोक्यात् सकाशान्निर्वासितैर्निष्कासितैः ।
कीर्त्त्या लोकत्रयस्य श्वेतीकरणात् तत्र श्यामगुणानां साम्प्रतमदर्श-
नात् पूर्वं श्यामानि वस्तून्यभूवन्निति वार्त्तामात्रशेषाणि श्यामा-
नि जातानि सर्वथा न सन्तीत्यर्थः । तथा कीर्त्तिमयात् कीर्त्ति-
प्रचुरादस्माद्राज्ञः सकाशात् अकीर्त्तेः पुनर्भयभरैर्भीतिबाहुल्यै-
र्जज्ञे जातं अहो आश्चर्यं । कीर्त्तेरकीर्त्तेश्च विरोधात् कीर्त्ति-
रूपादस्मादकीर्त्तेः भयं युक्तं इत्यर्थः । एतत् कुतः । यद्यस्मान्मलिन-
च्छायाऽतिकृष्णा साऽपकीर्त्तिः अस्य कथापथेऽपि स्थितिमाश्रयं न
बबन्ध नाकरोत् । एतत्कथाप्रारम्भे अकीर्त्तिलेशस्याप्यभावात्

अथावदद्भीमसुतेङ्गितात् सखी
जनैरकीर्त्तिर्यदि वास्य नेष्यते ।
मयापि सा तत् खलु नेष्यते परं
सभाश्रवःपूरतमालवल्लितां ॥ १०५ ॥

कीर्त्तिरेव वर्ण्यत इत्यर्थः । यस्य यस्माद्बिभेति स तदीयकथा-प्रारम्भ एव मलिनो भूलाऽन्यत्रैव गच्छति । अविद्यमानमपि शशविषाणादि वचनगोचरो भवति अकीर्त्तिस्तु वचनगोचरो ऽपि माभूदित्याश्चर्य्यं । अविद्यमानाया अप्यकीर्त्तेर्भयोत्पादना-दतिचित्रं । जरतामिति पाठे वृद्धानां कथास्विति व्याख्येयं । जग्मे । भावे लकारः ॥ १०४ ॥

अथेति । अथ सखी भीमसुतायाः इङ्गितात् अननुराग-सूचकात् भ्रूक्षेपणादिचेष्टितात् सरस्वतीमवदत् । किं । हे वाणि जनैरस्य अकीर्त्तिर्यदि नेष्यते वा नाभिलष्यत एव तत् तर्हि मयापि साऽस्याकीर्त्तिः खलु निश्चितं नेष्यत इति यद्यपि तुल्यं तथापि परं कोऽपि परः कश्चिद्विशेषोऽस्ति । सभायाः सभालोकस्य श्रवःपूरतमालवल्लितां कर्णाभरणतमालवल्लित्वं नेष्यते प्रापयिष्यते । जनानामसम्मतां शशविषाणादिवदसती-मप्यस्याकीर्त्तिमेव सर्व्वां सभां श्रावयिष्यामि इत्यर्थः । वाण्या-स्तद्दर्शननिवारणं चकारेति भावः । अकीर्त्तेर्नीलत्वात्तमालव-ल्लित्वं। इष्यते । इषेः कर्म्मणि लट् । नेष्यते । णीञः प्रधानकर्म्मणि लट् ॥ १०५ ॥

अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृताः सङ्ख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्त्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरा-
न्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधेरोधसि ॥ १०६ ॥

अकीर्त्तिमेव वर्णयति । अस्येति । हे वाणि मूकानां प्रकरेण समूहेन अस्य क्षोणिपतेरकीर्त्तयः किल प्रसिद्धं निश्चितं वा कूर्मरमणी कच्छपिका तस्या दुग्धादुत्पन्नस्योदधेः रोधसि तीरे गीयन्ते । किंभूताः । परार्द्धात् गणनावधेः सकाशात् परया ऽधिकया सङ्ख्यया लक्षीकृताः गणिताः परार्द्धादप्यधिकाः । तथा प्रज्ञाचक्षुर्भिर्जात्यन्धैः अवेक्ष्यमाणं दृश्यमानं तिमिरं तत्-प्रख्यास्तत्तुल्या अतिश्यामाः । किंभूतेन प्रकरेण । अष्टमं स्वरं निषादादिसप्तस्वरातिरिक्तं कलयताऽङ्गीकुर्वता । तथा वन्ध्यो-दरात् जातेन । एवमस्याकीर्त्तयः स्थिताः सभायां श्राविताः । परार्द्धाधिका सङ्ख्याऽन्धस्य दर्शनशक्तिः तिमिरस्य च चाक्षुष-त्वपलं स्वरस्याष्टमत्वं वन्ध्योदराज्जन्म कच्छपिकाया दुग्धं एतानि यथा सर्वथा न सन्ति तथैतद्विशेषणयुक्ता अस्याकीर्त्तयोऽपि न सन्तीति पर्य्यवसानवृत्त्या वर्णनैव कृता । उपहासार्थलसङ्गतोक्तिः । *आ मानसेन कीर्त्तयः पूर्व्वोक्तविशेषणविशिष्टा अस्य सम्यक् कीर्त्तयो गीयन्ते किल पर्य्यवसानवृत्त्याऽस्य कीर्त्तयो न सन्त्येवेति* निन्देयास्य स्तौमि वा । कच्छपी च दर्शनेनैवापत्यानि पालयति न दुग्धेनेति प्रसिद्धिः । प्रज्ञाचक्षुषो योगिनो ज्योतिर्विलोकन-

तद्धरैः सस्मितविस्मितानना
निपीय तामीक्षणभङ्गिभिः सभाम् ।
इहास्य हास्यं किमभून्न वेत्ति तं
विदर्भजा भूपमपि न्यभालयत् ॥ १०७ ॥
नलान्यवीक्षां विदधे दमस्वसुः
कनीनिकागः खलु नीलिमालयः ।

निष्ठास्तिमिरं न पश्यन्ति वा। तिमिरप्रख्याः तिमिरवत्प्रख्यायन्ते। मूलविभुजादित्वात् कः (पा० ३।२।५। वा० २।)॥ १०६ ॥

तद्धरैरिति। विदर्भजा इहास्यां सभायां एतदीयवचनविषये वाऽस्य वर्णितस्य नृपस्य हास्यं किमभूत् किंवा नाभूत् इति कारणात् स्वभावात्तमपि भूपं न्यभालयत् औदासीन्येन सम्मुखदृष्ट्या ददर्श न त्वनुरागादित्यर्थः। किं कृत्वा। अनुरागाभावेऽपि हास्यरसकृताभिरीक्षणभङ्गिभिः अवलोकनप्रकारविशेषैः तां सभां निपीय सादरमवलोक्य। किंभूतां सभां। तस्याः सख्याः विश्रुपक्रमैर्निषेधे पर्यवसितैः पूर्वोक्तैरुत्तरैः कृत्वा सस्मितानि सविस्मितानि साश्चर्याणि चाननानि यस्यास्तां। इह नृपेऽस्य हास्यं जातं न वेत्ति वा। स्मितसहितां विगतस्मितत्वं विरुद्धं। विरोधाभासः॥ १०७॥

नलेति। पतिव्रताया भैम्या नलान्यावलोकनमनुचितमित्याशङ्कां परिहरन्नुत्तरसर्गे वर्णयिष्यमाणस्य नलस्य प्रस्तावनां करोति। दमस्वसुः कनीनिका नेत्रतारा नलादन्यस्य नृपस्य

चकार सेवां शुचिरक्ततोचितां
मिलन्नपाङ्गः सविधे तु नैषधे ॥ १०८ ॥
दृशा नलस्य श्रुतिचुम्बिनेषुणा
करेऽपि चम्पाकुलनम्रकार्मुकः ।

वीक्षामवलोकनरूपामागः अपराधं विदधे चक्रे । किम्भूता । खलु यस्मान्मौलिन्नः कालिन्नः आलयः स्थानं । मलिनो हि निषिद्धमाचरति। अपाङ्गस्तु कटाक्षः पुनः सविधे द्वितीयपङ्क्तौ चिचतुरेभ्योऽनन्तरमुपविष्टे नैषधे सत्यनले मिलन् सम्बद्धः सन् शुचिरक्ततोचितां धवलरक्तलयोग्यां सेवां चकार । धवलरक्तलक्षणवामुद्रकलक्षणयुक्तोऽपाङ्गस्तु नल एव संलग्नोऽभूदित्यर्थः ।अथ च शुचेः पापभीरोः अनुरक्तस्य च स्वभावेन उचितां स्वामिभक्तोचितां इति वा। स्वामिभक्तो हि स्वामिनमेव सेवते न त्वन्यमित्यर्थः। कटाक्षेणान्यावलोकने दोषः। ऋजुदृष्ट्या त्वन्यविलोकने दोषो नेति न यातिप्रत्यचतिः कापि। नलमेव कटाक्षैर्विलोकयति स्मेति भावः। इन्द्रादिषु चतुर्षु अलीकनलेषु सत्स्वपि मत्यनलत्वेऽज्ञातेपि तत्रैव सत्यनले एवानुरागभाक्त्वाद्दृष्टवशात् कटाक्षनिरीक्षणं युक्तं ॥ १०८ ॥

इदानीं श्लोकचतुष्टयेन परस्परानुरागं वर्णयति । दृशेति । ततो भैमीकटाक्षविलोकनानन्तरं स्वयमनङ्गोऽङ्गरहितः परस्य नलस्यैव दृगादिभिरङ्गैरवयवैर्धन्विनां धनुर्द्धरलं अनुकस्य आकर्णगामिना बाणकल्पेन चक्षुषा अमीं भैमीमार्दयदपीडयत्।

स्मरः पराङ्गैरनुकल्प्य धन्विनां
जनीमनङ्गः स्वयमार्दयत्ततः ॥ १०९ ॥
उत्कण्टका विलसदुज्ज्वलपत्रराजि-
रामोदभागनपरागतराऽतिगौरी।

किंभूतः स्मरः। करे नलस्यैव हस्ते रेखामयराज्यादिलक्षणरूप-चक्रच्छलेन नवं चक्राकारं कार्मुकं यस्य सः। भैम्या कटाक्षैर्नले वीक्षिते सति नलेन कटाक्षैर्वीक्षिता सा सती कामातुरा जातेति भावः। मुख्याङ्गाभावे चानुकल्पोऽप्यङ्गीक्रियते। आर्दयत्। अर्द हिंसायां एयन्ताल्लङ्। आर्दिददिति पाठे लुङ्॥ १०८॥

उत्कण्टकेति। सा भैमी रुद्रक्रुधः रुद्रकृतशापपरित्याग समुद्भवात्कोपाद्धेतोः तस्य रुद्रस्यारिः कामः तस्य बुद्धाऽयं काम एवेति बुद्धा नले विषये वासस्य स्वयम्बरेण स्थितेरर्थितां अभिलाषुकत्वं अहत दधार। नले साभिलाषा जातेति भावः। स्वप्रभुसमाश्रयणस्य युक्तमेव। केव। काञ्चनकेतकीव। किंभूता सा केतकी च। उत्कण्टका उदितरोमाञ्चा उर्द्ध्वीभूतसूचीतुल्य शूकाया च। तथा विलसन्ती शोभमाना नीलपीतादिभिर्वर्णैरुज्ज्वला प्रकाशमाना उज्ज्वलेन शृङ्गारेण वा प्रकाशमाना विलोकनादिशृङ्गारोपाया एवंभूता वा कस्तूर्यादिरचिता कपोलवक्षोजादौ पत्रराजिः पत्रवल्ली पत्रपङ्क्तिर्यस्याः। शोभमानोज्ज्वलवर्णपत्रपङ्क्तिश्च। तथा आमोदं विलेपजं सुरभिगन्धं हर्षं वा स्वाभाविकं परिमलञ्च भजतीति भाक्। तथा अपगतोऽनु-

रुद्रकुधस्तदरिकामधिया नले सा
वासार्थितामधृत काञ्चनकेतकीव ॥ ११० ॥
तन्नालीकनले चलेतरमनाः साम्राज्यनागाग्र्यभू-
दध्यग्रे चतुरः स्थितान्न चतुरा पातुं दृशा नैषधान्।

रागो यस्या एवंभूता न भवति अतितरां अनपरागतरा। नले अतितरामनुरागिणी। न विद्यते परागः पुष्परजो यस्यामेवंविधा न भवति नितरां अनपरागा अनपरागतरा अतितरां परागसहिता। तथाऽनितरां गौरवर्णा उभय्यपि। गौरीं पार्वतीं अतिक्रान्ता वा भैमी। सुवर्णकेतकी यथा रुद्रकोपस्य वासः वसतिः तस्यार्थितां अभिलाषुकत्वं दधार तस्य स्थानं बभूवेत्यर्थः। तथा भैम्यपि नलविषये नलवैरिकामबुद्ध्या नलभ्रमात् काम एवेति नलसम्बन्धित्वेन मां पीडयतीति धिया रुद्रकोपस्यात्मनि यो वासस्तदर्थितां दधार। रुद्रकोपस्य स्थानं जाता नितरां सकोपा जातेत्यर्थः। कामसाम्यं नलस्योक्तं। नलेन कटाक्षवीक्षणे कृते अतितरां कामपीडिता जातेति भाव इति वा। गौरीमतिक्रान्तेति तत्पुरुषे। गोस्त्रियोरुपसर्जनस्येति (पा० १।२।४८)। ह्रस्वत्वप्राप्तेः अतिगौरिरिति स्यात्। तथापि ङ्यादिकारादन्निन इति (कौ० प० ३२। पं० ३। पा० ४।१।४५। वा०)। ह्रस्वाभावादपि पक्षे ङीपि अतिगौरीति सञ्च्छते ॥ ११० ॥

तदिति। न अलीको नालीकः स चासौ नलश्च नालीकनलः सत्यनलः। स चासौ नालीकनलश्च तन्नालीकनलस्तस्मि-

आनन्दाम्बुनिधौ निमज्य नितरां दूरङ्गता तत्तला-
लङ्कारीभवनाज्जनाय ददती पातालकन्याभ्रमं ॥ ११२ ॥

अदृष्टवशघटितदुर्घटदर्शने सत्यनले चलेतरत् निश्चलं मनो यस्याः सा । तस्मैवानुरक्ता सती सा भैमी अग्रे स्थितानपि चतुरश्चतुःसङ्ख्याकानलीकान् साम्यात् सत्यनलसाम्येन नलान् दृशा नयनव्यापारेण पातुं कटाक्षैर्विलोकयितुं मनागल्पमल्पमपि चतुरा कुशला नाभूत् । किम्भूता । आनन्दाम्बुनिधौ आनन्दरूपे समुद्रे निमज्य क्रीडिता नलावलोकनान्निमग्ना भूत्वेति यावत् । नितरां दूरङ्गता हर्षस्य परमकाष्ठां प्राप्ता तलङ्गता च । तथा तस्यानन्दसमुद्रस्य तलं तस्यालङ्कारीभवनाज्जनाय पाताल-कन्याभ्रमं अतिसौन्दर्यादानन्दवशाच्च निर्निमेषतया समुद्रे निमज्य तलगमनेन च किमियं नागकन्येति भ्रमबुद्धिं ददती जनयन्ती । अलङ्कारीभवते इति पाठे तस्य नलस्य भूतलस्य उपवेशनेनालङ्कारभूतायेन्द्रादिलोकाय नललक्षणाय जनाय वा पातालतलस्यालङ्कारीभवते वासुक्यादिनागलोकाय वा पुरःस्थितान्नलाकारानपीन्द्रादीनन्यराजवदतुच्छैव विलोकयति स्म । अदृष्टवशाच्च व्यवहितमपि सत्यनलं कटाक्षैर्विलोकयति स्मेति भावः । तन्नलेतिपाठे तेषामलीकनलत्वात्तदानीं स्वीयेन रूपेणालङ्कारभूताय जनाय सत्यनलायेत्यर्थः ॥ ११२ ॥

सर्व्वस्वं चेतसस्तां नृपतिरपि दृशे प्रीतिदायं प्रदाय
प्रापत्तद्दृष्टिमिष्टातिथिममरदुरापामपाङ्गोत्तरङ्गां ।
आनन्दान्ध्येन वन्ध्यानकृत तदपराकूतपातान् स रत्याः
पत्या पीयूषधारावलनविरचितेनाशुगेनाशु लीढः ॥ ११२ ॥

सर्व्वस्वमिति ॥ स नृपतिर्नलोऽपि चेतसः सर्व्वस्वं प्राणवत्प्रियां तां भैमीं दृशे स्वनेत्राय प्रीतिदायं सन्तोषजनितं दानं प्रदाय प्रकर्षेण दत्त्वा कटाक्षेण अतिसादरं दृष्ट्वा अमरदुरापां इन्द्रादिभिर्दुर्लभां लोकोत्तरस्वरूपां अथच तेषां कटाक्षेणानवलोकनात्तैर्दुरापां अपाङ्गे नेत्रप्रान्ते उत्तरङ्गां चलत्कल्लोलां अतिचञ्चलां कटाक्षरूपां तद्दृष्टिं भैमीदृष्टिमेव इष्टातिथिं प्रियमभ्यागतं प्रापत् लेभे। भैम्या पूर्व्वं कटाक्षैर्विलोकितोऽनन्तरं तेन सा विलोकिता अनन्तरं पुनरपि तया स विलोकित इत्यर्थः। अनन्तरं च रत्याः पत्या कामेन पीयूषधारारूपमतिनिर्वापकत्वादमृतरूपं यद्वलनं भैमीकृतं वलितग्रीवमवलोकनं तेन कृत्वा विरचितेनाशुगेन भैमीकटाक्षरूपेण बाणेनाशु शीघ्रं लीढो विद्धः सः नलः तदपराः तस्या भैमीदृष्टेरपरेऽन्ये तृतीयादयो ये आकूतपाताः अनेकभावाभिव्यञ्जका व्यापारविशेषास्तान् आनन्दान्ध्येन हर्षाश्रुपरिपूर्णनेत्रतया यदान्ध्यं अदर्शनलेन वन्ध्यान् निष्फलान् अकृत। भैमीद्वितीयकटाक्षवीक्षणेनैवातिष्टप्तो कामविवशः संस्तस्यास्तृतीयादिकटाक्षनिरीक्षणानि न ददर्शेति भावः। अन्योऽपि तुष्टः कस्मैचित् सर्व्वस्वं ददाति अतिप्रियमतिथिं प्राप्यानन्दवाष्पान्धो भवति ॥ ११२ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
तस्य द्वादश एष मातृचरणाम्भोजालिमौलेर्महा-
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः॥११३॥

श्रीहर्षमिति। पूर्वार्धार्थः पूर्ववत्। माता वागीश्वरी जननी च तस्याश्चरणावेवाम्भोजे तयोरलिरूपो भ्रमररूपः मौलिर्यस्य। यद्वा मातृचरणसम्बन्धिनी पूजार्थं चरणयोरुपढौकिता अम्भोजालिः कमलमाला तद्युक्तो मौलिर्यस्य। वागीश्वर्या जनन्या वा प्रसादरूपेण धृतनिर्माल्यकस्येत्यर्थः। द्वादशानां पूरणः सर्गः व्यगलत् समाप्तः। स्वभावत उज्ज्वल इत्यर्थः॥ ११३॥ इति श्रीवेदरकरोपनामक श्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे द्वादशः सर्गः॥ शुभमस्तु॥

## उत्तरनैषधचरिते।

त्रयोदशः सर्गः।

---

श्रीलक्ष्मीनृसिंहौ जयतः।

कल्पद्रुमान् परिमला इव भृङ्गमाला-
मात्माश्रयां निखिलनन्दनशाखिवृन्दात्।
तां राजकादपगमय्य विमानधुर्य्या
निन्युर्नलाकृतिधरानथ पञ्च वीरान्॥ १॥

इदानीं इन्द्रादिपञ्चनलीभञ्जं त्रयोदशं सर्गमारभते। कल्पद्रुमेति। अथ विमानधुर्य्याः शिविकावाहिनः तां भैमीं राजकाद्राजसमूहात् अपगमय्य निवर्त्य नलाकृतिधरान् नलवेषधारिणः पञ्च वीरान्नलसहितानिन्द्रादीन्निन्युः प्रापयामासुः। शिविकावाहिनां तेषु पञ्चसु नलोऽस्ति वा न वेति अपरिज्ञानात् नलस्यापि नलरूपधारकत्वं घटते। यस्य यद्रूपं तद्धारित्वं तस्यापि युक्तमेवेति काव्यापेक्षयापि युज्यते। वीरपदेन शौर्यं नायकगुणः। के। कस्मात्। कां। कानिव। परिमला मनोहराः गन्धाः समस्ताः नन्दनशाखिनो देवोद्यानतरवः तेषां वृन्दात् आत्माश्रयां परिमलाश्रितां भृङ्गमालां भ्रमरपङ्क्तिं परावर्त्य अतिशयान् कल्पद्रुमानिव। कल्पद्रुमा नन्दनस्थितवृक्षापेक्षया अधिकाश्रयाऽन्यराजापेक्षया तेऽपीत्यर्थः। सर्वाभिलाषपूरकत्वसाम्यात्।

साक्षात्कृताखिलजगज्जनताचरित्रा
तत्राधिनायमधिकृत्य दिवस्तथा सा
ऊचे यथा स च शचीपतिरभ्यधायि
प्राकाशि तस्य न च नैषधकायमाया ॥ २ ॥
ब्रूमः किमस्य वरवर्णिनि वीरसेना-
द्भूतिं दिपद्दनुविजित्वरपौरुषस्य ।

मन्दारादिर्ष्वपि चतुर्षु कल्पद्रुमशब्दप्रयोगः । भैम्या अप्यात्मा-श्रयविमाने स्थितत्वात् । नयतिर्द्विकर्मा ॥ १ ॥

साक्षादिति । सा देवी तत्र तेषु मध्ये प्राधान्यान्निवेश-नक्रमानुरोधाच्च दिवोऽधिनाथमिन्द्रमधिकृत्योद्दिश्य तथा तेन प्रकारेणोचे अकथयत् । यथा येन प्रकारेण स शचीपतिरिन्द्र-स्याभ्यधायि उक्तो भवति । तस्येन्द्रस्य नैषधकायस्य माया छद्म न च प्राकाशि प्रकटितं भवति। किंभूता। साक्षात्कृतं अखिलजगतां जनताचरित्रं जनसमूहवृत्तान्तो यया सा । यथा इन्द्रादीनां प्राकट्यं न विष्णोराज्ञया वर्णनं च नौचित्ये प्रतिभाचयो न तथाऽवोचदिति भावः । साक्षादिति विशेषणे नलरूपं कृत्वा आगतानामिन्द्रादीनां ज्ञानौचित्यं सूच्यते ॥ २ ॥

ब्रूम इति । हे वरवर्णिनि उत्तमे भैमि वयं अस्येन्द्रस्य वीराणां वा सेनायाः सैन्यस्य उद्भूतिं उत्कृष्टैश्वर्यं सामर्थ्यं वाङ्गन्वं वा किं ब्रूमो वर्णयामः । वर्णनाशक्यत्वादागगोचर इत्यर्थः । किम्भूतस्य । दिपद्भिन्ने यो दनुनामा दैत्यस्तस्य विजित्वरं जय-

सेनाचरीभवदिभाननदानवारि-
वासेन यस्य जनिताऽसुरभी रणश्रीः ॥ ३ ॥

नशीलं पौरुषं पराक्रमो यस्य। यस्य रणश्रीः सेनाचरीभवन्तौ सैनिकौ भवन्तौ यौ इभाननदानवारी गणेशनारायणौ तयोर्वा-सेनाधिष्ठानेन छला जनिता कृता असुरभीर्दैत्यभयं यया सा। असुरेभ्यो देवानां या भीस्तस्या ईरणं क्षेपणं तेन या श्रीः सा यस्य जनितेति वा। वागगोचरोऽस्य चरितमित्यर्थः॥ नलपक्षे तु अस्य वीरसेनाख्यनृपादुत्पत्तिं किं कथयामः अपि तु न। अकथनेऽपि लोकत्रये प्रसिद्धत्वात्। स्वगुणैरेवास्य ख्यातत्वाद्वा। अन्यो हि स्वयं न प्रसिद्धस्तस्य पित्रादिप्रसिद्ध्या वर्णनं क्रियते। अयं तु न तथेति भावः। किंभूतस्य। द्विषतां बलस्य सैन्यस्याह्निकस्य सत्त्वस्य वा जित्वरं पौरुषं पराक्रमो यस्य। यस्य रणश्रीः सेनाचरीभवन्तः सैनिका इभास्तेषां आननदानवारि मुखदानोदकं तस्य वासेन गन्धेन सुरभिर्जनिता। इत्थयोः सावर्ण्यात्सेनायामचलीभवतां पर्वतायमानानां इभानामिति वा। मत्तगजबाहुल्यमनेन सूच्यते। एवमिन्द्रनलयोरभेदबुद्धिर्यथा तथा भवति तथा द्वेयोक्तं। रण-शब्दो लक्षणया रणभूमौ वर्त्तते। इतः श्लोकादारभ्यात्याजीति यावत् प्रथममिन्द्रादिवर्णनं पश्चान्नलवर्णनं। अत्याजीत्यादौ च नलवर्णनं प्राधान्येन दिक्पालवर्णनं पश्चादिति ज्ञेयम्। श्लोका-दिह प्रथमत इति श्लोकेन नलस्य प्राधान्यनिर्देशाद्धुरीणेत्यादि श्लोकेषु दिक्पालानामप्राधान्यनिर्देशात्। उत्थाय्यपर्यवसी

शुभ्रांशुहारगणहारिपयोधराङ्क-
चुम्बीन्द्रचापखचितद्युमणिप्रभाभिः।

शीते शीतस्पर्शा तपात्यये। भर्तृभक्ता च या नारी सोच्यते वरवर्णिनीति वृद्धाः। उत्तमा वरवर्णिनीत्यमरः। वरो वर्णो यस्या इति वा। "अतिशायने धर्मशीलवर्णान्ताच्चेति इनिः (पा० ५। २। १३२)" ॥ २ ॥

शुभ्रेति। एष इन्द्रः समिति च यात्रासु विलासगतिषु च दण्डयात्रासु वा। अमरवाहिनीभिः सुरसेनाभिः अन्वास्यते अनुगम्यते। किं विधाभिः। शुभ्रांशुश्चन्द्रः हरसम्बन्धिनो हाराः एकादशरुद्रास्तेषाङ्गणः समूहः हरसम्बन्धिनो वा ये गणाः नन्दिप्रभृतयस्तान् सर्वानपि हरन्ति आत्मना सह नयन्ति तत्सहिता इति यावत्। एवंविधाः पयोधरा मेघाः। हरस्यापत्यं हारः स्कन्दो गणपतिर्मेघाश्चेति वा। तेषामङ्कचुम्बी स्वामिला-न्मध्यवर्त्तीन्द्रः शुभ्रांशुहारगणान् हरत्यात्मना सह नयत्येवं शीलः पयोधराङ्कचुम्बी च एवंविधो वा य इन्द्रस्तस्य चापं तेन खचिता सम्बद्धा· द्युमणिप्रभा सूर्यशोभा यासु ताभिः शुभ्रांश्वादिभिः शक्रधनुर्व्याप्तेन सूर्येण च प्रकर्षेण भान्ति·ताभि-र्वा। तथा बहुः प्रचुरो लाभो धनादिप्राप्तिर्येषु रणेषु अर्चिता-भिः पूजिताभिः। दैत्यजयाद्बहुला आभा दीप्तिर्यासां ताश्च ता रणार्चिताश्चेति वा। मेघानामपि कामरूपत्वात् सैनिकत्वं युज्यते। चन्द्रादिभिर्विशिष्टेन्द्रचापेन च खे आकाशे चिता वृद्धिं प्रापि-ता सूर्यशोभा यास्विति वा। तैः कृत्वा वृद्धिं प्राप्ता वा चन्द्राद-

अन्वास्यते समिति चामरवाहिनीभि-
र्यात्रासु चैष बहुलाभरणाचिंताभिः ॥ ४ ॥

यस्तेजस्विनस्तत्तेजःसम्बन्धेन सूर्य्यतेजः प्रचुरं यत्र जातमित्यर्थः॥ नलपचे एष नलः सभायां दण्डयात्रासु च चामरधारिणीभिः अन्वास्यते सेव्यते। किम्भूताभिः। शुभ्राः सिताः अंशवो यस्य तेन हारगणेन मुक्ताहारसमूहेन कृत्वा हारी सुन्दरः पयोधराङ्कः स्तनमध्यस्तद्भुम्बिनी तत्सम्बद्धा इन्द्रचापसम्बद्धसूर्य्यप्रभेव प्रभा यासां ताभिः। सोऽप्यर्थः। याचास्वपीति योजना। हारमध्यगमणीनामनेकवर्णत्वादिन्द्रचापसम्बद्धसूर्य्यप्रभासास्यं। तथा त एव बहुलानि प्रचुराणि आभरणानि तैरर्चिताभिरलङ्कृताभिः। प्राधान्याद्धाराणाङ्ग्रहणं। आभरणग्रहणं तद्व्यतिरिक्तालङ्काराणां अतो न पौनरुक्त्यम्। एतेन यथा सभायां निर्भयं आस्ते तथा सङ्ग्रामयात्रास्वपीति व्यज्यते। शुभ्र उद्दीप्तशुक्लयोः। द्युमणिस्तरणिर्मित्रः। समितियुद्धे सभयाश्च इत्यमरः। हरत्यद्वायतस्ते-र्हमित्यण् (पा॰ ४। २। १२०)। हारी। तान्छील्ये णिनिः। अपत्ये वा अत इञ् (पा॰ ४। १। ९५)। यद्वा शुभ्रांशुहारगणेन हारिणः पयोधराः स्तनास्तेषामङ्कः पार्श्वप्रदेशः तद्युम्नी इन्द्रचापो नवपदविशेषणेन सम्बद्धा दिव्यरत्नप्रभा यासां ताभिः। इन्द्रचापवदाकाशव्यापी दिव्यमणिप्रभा यासां ताभिरिति वा। चित्रमणिप्रभासम्वलिताः शक्रधनुःसदृशा भवन्तीति बहुभिराभरणैर्भूषिताभिरित्यर्थः। यच दीप्तिसंवरणयोः॥४॥

क्षोणीभृतामतुलकर्कशविग्रहाणा-
मुद्दामदर्पहरिकुञ्जरकोटिभाजां।
पक्षच्छिदामयमुदग्रबलो विधाय
मग्नं विपज्जलनिधौ जगदुज्जहार॥ ५॥

क्षोणीति। इति पद्यं कुत्रचित्पुस्तके दृष्टं। तस्यायमर्थः। अयं क्षोणीभृतां पर्व्वतानां पक्षच्छिदां विधाय कृत्वा विपज्जलनिधौ आपत्समुद्रे मग्नं पक्षसहितैः पर्व्वतैः सच्छिद्रीकरणाज्जगदुज्जहार उद्धृतवानित्यर्थः। पर्व्वतपक्षच्छेदनादिपद्रहितं कृतवानिति भावः। किंभूतानां। अतुला अत्युच्चाः कर्कशाश्च विग्रहा देहा येषां। तथा उद्दामदर्पाणां अत्युद्भटानां हरिकुञ्जराणां सिंहहस्तिनां कोटिं भजतां। एकस्मिन् प्रदेशेऽनेकसिंहानामन्यस्मिन्नत्युद्भटानामनेककुञ्जराणामित्यर्थः। किंभूतोऽयं। बलाद्दैत्यादुदग्रः उदग्रबलः। यद्वा उदग्रं पौरुषं यस्य सः॥ नलपक्षे अतुलानत्युच्चान् सलक्षणांश्च कर्कान् श्वेताश्वान् घ्नन्ति मारयन्ति एवंविधा विग्रहाः शरीराणि वैरं वा येषां। तथा उद्दामदर्पा हरयोऽश्वा गजाश्च तेषां कोटिं भजतां। वैरिनृपाणां पक्षच्छिदां सहायच्छेदं कुक्षिच्छेदं वा कृत्वा उदग्रं बलं पौरुषं सैन्यं वा यस्य। अयं नलो वैरिकृतापत्समुद्रे मग्नं जगदुज्जहार। वैरिणो हत्वा आपद्रहितमकरोदित्यर्थः॥ ५॥

भूमीभृतः समिति जिष्णुमपव्यपायं
जानीहि न त्वमघवन्तममुं क्वचित्‌।

भूमीभृत इति। हे घटस्य प्रतिभटौ सदृशौ स्तनौ यस्यास्तत्सम्बुद्धिः। हे भैमि त्वं समिति सङ्ग्रामे भूमीभृतः पर्व्वतान्‌ जिष्णुं जेतारं। तथा न विद्यते पर्व्वैर्वज्रस्य अपायो नाशो यस्य। तममुं अमघवन्तमनिन्द्रं न तु नैव जानीहि अपि त्विन्द्र एवायं। इन्द्रस्य सहस्रनेत्रत्वात्कथं तथेत्यत आह। त्वं एतदीयं शयं पाणिमतिक्रान्तं प्रस्रतादपि दीर्घं अत एवाद्भुतमाश्चर्य्यकारि कयाचिद्गुप्तं नलरूपधारणाच्छादितं बाहुनेत्रस्य भावो बाहुनेत्रं नालोकसे न पश्यसि गुप्तत्वान्न तु अविद्यमानत्वादित्यर्थः। शयावतिक्रान्तं हस्ततलयोर्नेत्राणि न सन्तीत्यर्थ इति वा। बाहुनेत्रसमूहं बाहुनेत्रमस्मिन्नेतदीयमतिशयमुत्कर्षं वाश्चर्य्यमिति वा। नलपक्षे त्वममुं अघवन्तं सपापं न जानीहि पुण्यश्लोकत्वात्‌। रणे राज्ञो जेतारं। तथापगतो विशिष्टोऽपायो यस्मात्तं। रणे अपगतो व्यपायः पलायनं यस्मात्‌ अपलायमानमित्यर्थः। एतदीयं अतिशयमपरिमितहस्तपरिमाणमाश्चर्य्यरूपं शावरणवशाद्दाहौ हस्ते स्थितं नेत्रं पीतांशुकं गुप्तं यथा तथा द्रव्यान्तरविलोकनव्याजेन नालोकसे अपि त्वालोकयेत्यर्थः। बाहू च नेत्रे च बाहुनेत्रं। शयमतिक्रान्तं बाहू हस्तपरिमाणाधिकपरिमाणौ नेत्रे च प्रस्रतादप्यधिकेत्यर्थः। तद्गुप्तं यथा तथा नालोकसे अपि त्वालोकयेति वा। अतिशयं बाहुनेत्रं बाहू अतिशयितौ वदान्यौ शयौ ययोस्तावतिशयौ। नेत्रे च शयमतिक्रान्ते अतिशयी च।

गुप्तं घटप्रतिभटस्तनि बाहुनेत्रं
नालोकसेऽतिशयमद्भुतमेतदीयम् ॥ ६ ॥
लेखा नितम्बिनि बलादिसमृद्धराज्य-
प्राज्योपभोगपिशुना दधते सरागं ।
एतस्य पाणिचरणं तदनेन पत्या
सार्द्धं शचीव हरिणा मुदमुद्वहस्व ॥ ७ ॥

अतिशये चेति नपुंसकैकशेषेण वा व्याख्येयं। एतदीयं गुप्तमनेन पालितं। बहवश्च ते नेतारश्च बहूनां वा नेतारस्तेषां समूहः अतिशयितो हस्तो यस्य। लक्षणया वदान्यं उत्कृष्टमालोकय। शूरा वदान्या अथनेन पोषिता इत्यस्योत्कृष्टत्वं व्यज्यते। कुलिश-भिदुरस्यविरित्यमरः। नेत्रं पथि गुणे च स्मे इति विश्वः। जिष्णुः। ग्लाजिस्थश्च ग्स्नुरिति ताच्छील्ये ग्स्नुः। (पा० ३ । २ । १३८)। तद्योगे भूमीश्वत इति न लोकेति (पा० २ । ३ । ६९)। षष्ठीनिषेधात् द्वितीया। बहुनेत्रशब्दात् भावसमूहसम्बन्धे ष्यण् (पा० ४ । २ । ३७)। पक्षे प्राण्यङ्गत्वादेकवद्भावः (पा० २ । ३ । २ ) ॥ ६ ॥

लेखा इति। हे नितम्बिनि अतिपृथुनिविडनितम्बे भैमि बलादीनां बलवृत्रनमुचिप्रभृतीनां समृद्धं सम्पूर्णं राज्यं राज-भावः तस्य प्राज्यो बहुः उपभोगस्तस्य पिशुनास्तद्सूचनाः लेखा देवाः एतस्येन्द्रस्य पाणी च चरणौ च पाणिचरणं सरागं सानु-रागं यथा तथा दधते धारयन्ति। हस्तनादात्पाणिं नमस्कारार्थं च चरणाविति अर्थः। तत्तस्मादनेन हरिणेन्द्रेण पत्या सार्द्धं शचीव

आकर्ण्य तुल्यमखिलां सुदती लगन्ती-
माखण्डलेऽपि च नलेऽपि च वाचमेताम्।
रूपं समानमुभयत्र विगाहमाना
श्रोत्रान्न निर्णयमवापदसौ न नेत्रात्॥ ८॥

मुदमुद्वहस्व धारय॥ नलपक्षे सरागमरुणं एतस्य पाणिचरणं कर्तृ सैन्यस्वाम्यमात्यादिभिः षड्विधेन वा बलेन समृद्धस्य राज्यस्य प्राज्य उपभोगस्तस्य सूचिका सामुद्रिकोक्तलक्षणभूताः ध्वजादिलेखाः कर्मभूताः दधते धारयति। दध धारणे एकवचनान्तमस्मिन् पक्षे रूपं। तस्मादनेन पत्या नलेन सह हर्षं धारयस्व। केन केव। हरिणेन्द्रेण शचीव। लेखा अदितिनन्दनाः। पिशुनौ खलसूचकावित्यमरः। नितम्बशब्दादतिशयार्थादिनिः (पा० ५।२।१३२)। पाणिचरणं। प्राण्यङ्गत्वादेकवद्भावे षण्ढत्वं (पा० २।४।१७)॥ ७॥

आकर्ण्येति। असौ सुदती भैमी एतां पूर्वोक्तां अखिलां वाचमाखण्डलेऽपि च नलेऽपि च तुल्यं लगन्तीं समानसम्बन्धामाकर्ण्य उभयत्र इन्द्रे नले च समानं रूपं ऐक्यरूपञ्च विगाहमाना जानती विशेषावलोकनादपि विशेषमनुपलभमाना यथाक्रमं श्रोत्राच्छ्रवणेन्द्रियात् नेत्राच्चक्षुरिन्द्रियाच्च निर्णयं नावापत् न प्राप। अनयेन्द्रः स्तुतः किंवा नलः। तयोः सरूपत्वादयमिन्द्रो नलो वेति नाज्ञासीदित्यर्थः। अपि चेति समुदायौ परस्परसमुच्चयवाचकौ। अवापत्। लृदित्वादङ्॥ ८॥

शक्रः किमेष निषधाधिपतिः स वेति
दोलायमानमनसं परिभाव्य भैमीम् ।
निर्दिश्य तत्र पवनस्य सखायमस्यां
भूयोऽप्यभज्जगवती वचसां स्रजं सा ॥ ८ ॥
एष प्रतापनिधिरुद्गतिमान् सदायं
किं नाम नार्जितमनेन धनञ्जयेन ।

शक्र इति। सा भगवती सरस्वती भूयः पुनरपि वचसः स्रजं वाङ्मालां असृजत् । किं कृत्वा । तत्र तेषु मध्ये अस्यां भैमीसमीपे पवनस्य सखायमग्निं निर्दिश्योद्दिश्य। पुनः किं कृत्वा भैमीं इति दोलायमानं दोलेव भवत् मनो यस्यास्तां परिभाव्य सञ्चिन्त्य। इति किं। एष किं शक्रः सत्यं दृष्टः निषधाधिपतिर्नलो वेति दोलेवाचरति। कर्त्तुः क्यङ् सलोपश्चेति (पा० ३ । १।११)। क्यङि शानचि दोलायमानमिति। अस्यां सामीपिक आधारः ॥ ८ ॥

एष इति। हे भैमि एष प्रतापस्य निधिः प्रकृष्टोष्मस्पर्शस्थानं। तथाऽयं सदा उद्गतिमानूर्द्ध्वगमनयुक्तः ऊर्द्ध्वज्वलनोऽयमित्यर्थः।धनञ्जयेन वह्निनाऽनेन किं नाम का सञ्ज्ञा नार्ज्जितं न प्राप्तं। अग्निर्वैश्वानरो वह्निरित्यादिकं नाम निर्वचनयोगात् प्राप्तमित्यर्थः। सर्व्वेषामपि नाम्नां निर्वचनमस्त्येव। नाम सम्भावनायां अग्निनाऽनेन किं नाम वस्तु न प्राप्तं। तैजसानां परमाणूनां सर्व्वत्राविरलत्वेन विद्यमानत्वादिति वा। अनेन धनञ्ज-

हेम प्रभूतमधिगच्छ शुचेरमुष्मान्
नास्त्येव कस्य च न भास्वररूपसम्पत्॥ १०॥

यशब्देन कृत्वा सार्थकं नाम किं नार्ज्जितमिति वा। धनञ्जयत्वादेतस्य त्वं शुचेरग्नित्वादमुष्मादग्नेः प्रभूतं बहु हेम स्वर्णमधिगच्छ प्राप्नुहि। धनमिच्छेद्धुताशनादित्युक्तेः। अग्नेरपत्यं प्रथमं सुवर्णमिति श्रुतेः। अस्मात् सुवर्णं प्रथममुत्पन्नं। अस्येवाग्नेरिव कस्य च न कस्यापि भास्वरा देदीप्यमाना रूपसम्पन्नास्ति तेजोमात्रविवक्षया। तेजोव्यतिरिक्तस्य कस्य च न शुक्लं भास्वरं रूपं दृष्टमित्यर्थः॥ नलपक्षे एष नलः चात्रतेजःस्थानं। तथा सदोदयवान्। तथाऽनेन जयेन कृत्वा किं नाम धनं नार्जितं वैरिणो विजित्य धनमर्जितं। दायो दानं तेन सहितमिति वा। एतेन धनार्जनस्य स्वोपभोगः फलं न किन्तु दानमेव मुख्यं फलं वदान्यत्वं च सूचितं। सदा अयः शुभावहो विधिर्यस्मादिति वा। शुचेः स्वधर्म्मोपार्जितद्रव्यादमुष्मात्प्रचुरं सुवर्णं प्राप्नुहि। शुचेः शृङ्गाररूपादिति वा। अस्य नलस्येव भास्वरा कायकान्तिसमृद्धिः कस्याप्यन्यस्य नास्ति। भा दीप्तिः स्वरः कण्ठशब्दः रूपं सौन्दर्यं तेषां सम्पदस्येव कस्यापि नास्तीति वा। तेजस्वी मधुरस्वरः सुन्दरश्चेत्युक्तं। वीतिहोत्रो धनञ्जयः। शुचिरप्पित्तमौर्वस्तु इत्यमरः। धनञ्जयः। सञ्ज्ञायां भृतॄवृजीत्यादिना खच् (पा॰ ३।२।४६)। अरुर्द्विषदिति मुम् (पा॰ ६।३।६७)। भास्वरं। स्थेशभासेति वरच् (पा॰ ३।२।१७५)॥ १०॥

अत्यर्थहेतिपटुताकवलीभवन्त्
तत्पार्थिवाधिकरणप्रभवस्य भूतिः।
अभ्यङ्गरागजननाय महेश्वरस्य
सञ्जायते रुचिरकर्णि तपस्विनोऽपि ॥ ११ ॥

अत्यर्थेति। हे रुचिरकर्णि शोभनश्रवणेन्द्रिये भैमि अस्याग्नेरत्यर्थोऽतिशयितहेतिपटुता ज्वालापाटवं तस्य कवलीभवन्ति ग्रासीभवन्ति तानि तानि पार्थिवानि पृथिवीकार्याणि इष्टकाष्ठकरीषादीनि तान्येवाधिकरणं भस्मन एवाधारः ततः प्रभव उत्पत्तिर्यस्या एवंविधा भूतिर्भस्म तपस्विनोऽपि पाशुपतादिमतनिष्ठस्य महेश्वरस्य शिवस्याङ्गरागजननाय उद्धूलनेनाङ्गानां विशिष्टवर्णोत्पत्तये सञ्जायते सम्पद्यते। एतत्सम्बन्धि भस्मापि ईश्वरस्य तपस्विनोऽपि उपकर्तृ प्रभवति अन्यस्य भवतीति किं वक्तव्यमिति स्तुतिः। रुचिरकर्णेति श्रेयोऽक्तिचातुरीविषये सावधाना भवेति व्यज्यते। एतद्वरणे भस्मैव केवलं नान्यत्किञ्चिदिति विचार्य वृणीष्वेति व्यज्यते॥ नलपक्षे अङ्ग रुचिरकर्णि अस्य नलस्य भूतिः सम्पत् महेश्वरस्य महाधनिकस्यापि त्यक्तसर्वसङ्गस्य मुनेरपि च अभिलाषसमुद्भूतये सम्पद्यते। ममेदृक्सम्पद्भूयादिति धनिको मुमुक्षुरपि अस्य भूतये स्पृहयतीत्यर्थः। धनिकस्य तपस्विनोऽपि ईर्ष्याजननाय सम्पद्यत इति वा। किम्भूता सम्पत्। अतिशयेनास्त्रपटुतया मोचोपसंहारादिमन्त्रप्रयोगसामर्थ्येन ग्रासीभवन्तस्ते च ते पृथ्वीश्वराश्च तेषामधिको

एतन्मुखा विबुधसंसदसावशेषा-
माध्यस्थ्यमस्य यमतोऽपि महेन्द्रतोऽपि।

रणस्तस्मादुत्पन्ना। स प्रभव उत्पादको यस्या इति वा। स्वत्र-तेजसोपार्जितेत्यर्थः। रागोऽनुरक्ते मात्सर्य्ये। हेतिर्ज्वालायुधेऽपि च। पार्थिवेति। तस्येश्वर इत्यधिकारे (पा० ५।१।४२)। सर्व्वभूमीत्यण् (पा० ५।१।४१)। रुचिरकर्णीति। नासिको-दरौष्ठेति (पा० ४।१।५५)। ङीष्॥ ११॥

एतदिति। हे पिकमुखि असेषा सर्व्वाऽसौ विबुधसंसत् देवसभा एष एव मुखं यस्याः सा। अग्निमुखा वै देवा इति श्रुतेः। अस्याग्नेर्यमतोऽपि महेन्द्रतोऽपि माध्यस्थ्यं आसनापेक्षया दिगपे-क्षया च मध्ये विद्यमानत्वं अस्ति। त्वं महस्विनं तेजोयुक्तं महस्सु तेजस्सु विषये इमं स्वामिनं चैनं उपेहि प्राप्नुहि। येन सदारुणा कान्तमहितेनामुना करश्रीः किरणशोभा उच्चैरुच्चां रक्ता वा-ध्रियते। पिकमुखीति समुद्धा धन्यत्वं व्यज्यते। धन्या पिकमुखी कन्या धन्यो मातृमुखःसुत इति सामुद्रिकोक्तेः॥ नलपक्षे असौ जगति प्रसिद्धा पुरो दृश्यमाना च निखिला विद्वत्सभा एत-न्मुखा एतत्प्रधाना। यथा सर्व्वस्वङ्गेषु मुखं प्रधानं तथा विद्व-त्सभायामसौ। के विबुधा इति पृष्टे प्रथममसौ गण्यत इत्यर्थः। पुण्यश्लोकत्वात्। एष मुखो यस्यास्तादृशीति वा। अस्य यमतः सम-वर्त्तिनोऽपि इन्द्रादप्यधिकं माध्यस्थ्यं व्यज्यते। पक्षपातरहितत्वं शत्रुमित्रयोस्तुल्यदण्ड इत्यर्थः। तमेः सार्व्वविभक्तिकत्वात्सोकपा-लाभ्यामिन्द्रयमयोरेतन्मध्यवर्त्तित्वं इति केचित्। तेजस्विनमेनं

एनं महस्विनमुपेहि सदारुणोच्चै-
र्येनामुना पितृमुखि ध्रियते करश्रीः॥ १२॥
नैवाल्पमेधसि पटोर्रुचिमत्त्वमस्य
मध्येसमिन्निवसतो रिपवस्तृणानि।

प्राप्नुहि। येनानेन सदा सर्व्वदा हस्तशोभा अतिशयेनारुणा रक्ता धार्य्यते। स्विनं शोभनं पतिमेनं मह पूजय। तथा एनमुपेहि एतत्समीपं गच्छेति वा। महस्विनमुत्सववन्तं वा। विश्वप्रकाशे सकारान्तस्य महःशब्दस्य पाठात्। मुखं मुखे च वक्रे स्यादित्यजयपालः। पिता मुखं यस्या इति समासे मुखेनैव मुखस्य सादृश्यात् पितृमुखमिव मुखं यस्या इत्यत्र पर्य्यवस्यति ॥ १२ ॥

नैवेति। एधसि काष्ठे पटोर्ज्वलमानस्यास्याग्नेः रुचिमत्त्वं दीप्तियुक्तत्वं अल्पं नैव किन्तु बह्वित्यर्थः। जाज्वल्यमानस्यास्य इन्धने दीप्तिमत्त्वं अल्पं नैव तत्सम्बन्धादधिकं दीप्तिमानयं भवतीत्यर्थ इति वा। तथा मध्ये समित् समिधां काष्ठानां मध्ये निवसतो विद्यमानस्य तृणानि रिपवः शत्रवः। रिपुनाशो यथा वेगेन क्रियते तथा सम्बन्धेनानेन तानि क्षणमात्रेण दह्यन्त इत्यर्थः। प्रादेशमात्राणां पलाशशम्यादिकाष्ठानां मध्य इति वा। इह लोके समिन्मध्ये वा उत्थानवान् ऊर्द्ध्वं ज्वलन् तरस्वी वेगवानयं विरोधिना केन उदर्केन पराभवितुं पुनः शक्यो भवति तेनैव शान्तिमेति शान्त्येनेत्यर्थः। शक्यो भवति अपि तु न। वेगेनोत्थितस्यास्य वा-

उत्थानवानिह पराभवितुं तरस्वी
शक्यः पुनर्भवति केन विरोधिनायं ॥ १७ ॥
साधारणीकृतिरमुष्बुधनैषधाभ्या-
मेनां निपीय न विशेषमवापवत्याः।

रिणापि शान्तिः कर्त्तुमशक्येत्यर्थ इति वा॥ नलपक्षे पटोर्धहण-धारणादिसमर्थस्याल्पमेधसि मन्दप्रज्ञे ह्रविमत्त्वं मौतियुक्तं नैव अयोग्यत्वात्तस्येति भाव इत्यर्थः। तथा समित्मध्ये सङ्ग्राममध्ये निवसतोऽस्य वैरिणस्तृणानि अकिञ्चित्करा इत्यर्थः। इह रणे भूलोके वा तरस्वी उत्थानवान् वेगवान् बलवान् वायं केन रिपुणा जेतुं शक्योऽपि तु न केनापि। कस्याप्यजय्योऽयमित्यर्थः। उत्थानमुदयः इदंसदृशोऽपि उदयी बलवांश्च नास्तीत्यर्थः। भवतीति सम्बोधनं वा। तरो बले च वेगे च। इध्ममेधः समिदित्यमरः। अल्पमेधसि। नित्यमसिच्प्रजामेधयोरित्यच (पा॰ ५। ४। १२२)। नित्यग्रहणादन्यस्मादपि भवतीति वृत्तिकारोक्तेः प्रयोगानुसारेण असिच्। मध्ये समित्। पारे मध्ये षष्ठ्या वेति (पा॰ २। १। १८)। अव्ययीभावे निपातनादेत्वम्। प्रय इति (पा॰ ५। ४। १११)। वैकल्पिकत्वाट्टजभावः। परा भवितुं। शकधृषेति (पा॰ ५। ४। ६५)। अक्रियार्थत्वेऽपि शकियोगात्तुमुन्॥ १७॥

साधारणीमिति। उपबुधनैषधाभ्यां अभिन्नाभ्यां साधारणीं समामेनाकृतिं निपीयाकर्ण्य इदमीयमनयोः सम्बन्धिनं

ऊचे नलोऽयमिति तम्प्रति चित्तमेकं
ब्रूते स्म चान्यदनलोऽयमितीदमीयं ॥१४॥

विशेषं तारतम्यं न अवाप्तवत्या ज्ञातवत्या भैम्याः पुरोवर्त्तिनं तं प्रति एकं चित्तं मनः अयं नल इत्यूचे अन्यदपरं चित्तं अयमनल इति ब्रूते स्म। नलव्यतिरिक्तोऽयं च वह्निरित्यकथयत्। युगपदालोचनसन्निप्रसङ्गान्मनः प्रति शरीरमेकत्वस्य साधितत्वादेकस्मिन्नपि मनसि क्रियाभेदाद्वस्थान्तरमात्रैर्भेद इवोपचर्य्यते। एकमेव तं पुरोवर्त्तिनं अनल इति प्रत्यूचे। प्रकारश्लेषेणानलोऽयमिति ब्रवीति स मनः। तथा अयमन्यान् वैरिणो द्यति अवखण्डयति अन्यद् स चासौ नलश्चेति च ब्रूते स्म। अत्र व्याख्याने प्रथमसूचितक्रमभङ्गोऽपि न भवति। एकस्य द्वैरूप्यादिरोधाभासश्च। चेतश्चित्तेन उपर्बुध इत्यमरः। उपर्बुध्यत इति उपर्बुधः। इगुपधेति कः (पा॰ ३।१।१३५) अहरादीनामिति रेफः (पा॰ ८।२।७० वा॰ १)। तुल्यार्थैरिति तृतीया। (पा॰ २।३।७२)। अन्यदेति पचे कः। समानं साधारणमस्य साधारण्यं अनेकं प्रत्यविशिष्टं सम्बन्धं। पृषोदरादिः। तत्स्त्रियां पादार्घाभ्यां चेत्यत्र (पा॰ ५।४। २५)। आग्नीध्रसाधारणादञिति वार्त्तिकादञि ङीप् वा। प्रकरणाच्च साधारणभूमिरित्यादादिव अत्रापि घटते। इदमीयं त्यदादित्वात् इदाद्यः (पा॰ ४।२।६) ॥१४॥

एतादृशीमथ विलोक्य सरस्वती तां
सन्देहचित्रभयचित्रितचित्तवृत्तिम् ।
देवस्य खलुमरविन्दविकासिरश्मे-
रुद्दिश्य दिक्पतिमुदीरयितुं प्रचक्रे ॥ १५ ॥
दण्डं बिभर्त्त्ययमहो जगतस्ततः स्यात्
कस्याकुलस्य सकलस्य न पक्षपातः ।

एतादृशीमिति । अथ सरस्वती अरविन्दविकासिनः कमलविकासकरा रश्मयः किरणा यस्य देवस्य रवेः दिक्पतिं दक्षिणदिशः पतिं सूनुं अन्येषां पुत्राणां दिक्पतित्वाभावाद्यमं उद्दिश्य उदीरयितुं वक्तुं प्रचक्रे आरेभे । किं कृत्वा । एतादृशीमुक्तसंशयास्पदीभूतां तथा नलनिश्चयाभावात् सन्देहः । तुल्यरूपदर्शनाद्देव्युक्तिचातुर्याद्वा चित्रं । नलनिश्चयाभावान्नसमाप्तिविघ्नात्त्रासः तैः संशयाश्चर्य्यत्रासैः चित्रिता नानाविधाकृता चित्तवृत्तिर्यस्याः सा । एवंविधां तां भैमीं विलोक्य । चित्तभित्तिमिति पाठे चित्तमेव भित्तिर्यस्याः । भित्तौ हि चित्रं युक्तमित्यर्थः । एषैव दृश्यत इत्यर्थः । एतादृशीत्यदादिषु दृश इति कञि (पा० ३ । २ । ६०) । आसर्व्वनाम्न इत्यात्वे (पा० ६ । ३ । ८९) । टिड्ढेति ङीपि (पा० ४ । १ । १५) । एतादृशीति सिद्धं ॥ १५ ॥

दण्डमिति । अहो सम्बोधने अयं यमो दण्डं स्वायुधं बिभर्त्ति तस्मात्कारणाद्धेतोः पुराणादिदर्शनेन कस्याकुलस्य पाप-

सर्व्वैद्ययोरपि मदव्ययदायिनीभि-
रेतस्य रुग्भिरमरः खलु कश्चिदस्ति ॥ १६ ॥

भीरोः सकलस्य जगतो भुवनस्य पङ्कपातो बुडनं न स्यात् भवेत्। पङ्के महारौरवादौ नरके वा एतद्भयात् पापं कोऽपि न करोतीत्यर्थः। अहो आश्चर्य्यं। अन्यो यष्टिं धारयति अन्यस्य च कम्पमानस्य कर्द्दमपातो न भवतीत्यसङ्गतेः। तथा चिकित्सा-सामर्थ्ययोः सर्व्वैद्ययोर्दस्रयोरपि मदव्ययदायिनीभिः गर्व्वक्षयं कुर्व्वाणाभिरेतस्य रुग्भिः प्राणिकर्मविपाकदर्शनेनानेन प्रेरिताभिः पीडाभिः न म्रियत इत्यमरः कश्चित् किमस्ति अपि तु न कोऽप्यस्ति। कर्मजरोगाणां ताभ्यामप्यचिकित्स्यत्वादित्यर्थः। सर्व्वैद्ययोरपि नाम रुजापनयनसामर्थ्यासम्भवसूचनार्थं॥ नलपक्षे अयं नलो दण्डं शासनं यतो बिभर्त्ति ततः शासनभयात्कम्पाकुलस्य सकलस्यापि लोकस्य पङ्कपातो न भवेत् पूर्व्ववदेतस्माद्भयात् अयं दण्डं चतुरङ्गसैन्यं बिभर्त्ति ततः शत्रुभयात् कम्पाकुलस्य लोकस्य पङ्कपातः दुःखपातो न भवेत् सैन्येनैव वैरिणां निहतत्वाल्लोकस्य दुःखनाश इति वा। सौन्दर्य्येण प्रसिद्धयोर्नासत्ययोरपि गर्व्वक्षयकारिणीभिरस्य रुग्भिःकायकान्तिभिरुपलक्षितोऽस्य देवोऽपि कश्चिदस्ति किमु अपि तु नास्ति। देवेषु मध्ये इमावेव सुन्दरतमौ तावप्यनेन जितौ यतः। ये लेतत्समीपस्थाः रमणीयास्त एतद्रूपधारणादेव न तु स्वभावेनेत्यर्थः। पङ्कोऽस्त्री शादकर्द्दमौ। अस्त्री पङ्कं पुमान् पाप्मा। सु:

मित्रप्रियोपजननं प्रति हेतुरस्य
सञ्ज्ञा श्रुताऽसुहृदयं न जनस्य कस्य।
छायेदृगस्य च न कुत्रचिदध्यगामि
नष्टं यमेन नियमेन तपोऽमुनैव॥ १७॥

प्रभारुग्रुचित्विड्भा इत्यमरः। स्त्रीरुग्रुजाद्युतिः शोभा इति मेदिनी। दायिनीभिरिति ताच्छील्ये णिनिः॥ १६॥

मित्रेति। अस्य यमस्योपजननं उत्पत्तिम्प्रति सञ्ज्ञा नाम्नी मित्रप्रिया सूर्य्यपत्नी हेतुर्निमित्तं श्रुता आकर्णिता। छाया-नाम्नी तु कुत्रचित् कुत्रापि पुराणादौ ईदृगस्योत्पत्तिं प्रति हेतुर्नाध्यगामि नाज्ञायि। किन्तु शनैश्चरस्यैवेत्यर्थः। यमो यमी श्राद्धदेवः सञ्ज्ञायास्तनयास्त्रय इति पुराणं। अयं यमः कस्य जनस्य असुहृत्प्राणहर्त्ता न अपि तु सर्व्वस्यापि प्राणहर्त्ता। अमुना यमेनैव नियमेन नक्तोपवासादिव्रतेन कृत्वा तपस्तप्तं धर्म्मः कृतः। अत एवास्य पुत्रत्वं धर्म्मराजत्वं चेत्यर्थः॥ नलपक्षे अस्य नलस्य सञ्ज्ञा नाम श्रुता सती मित्रप्रियस्य सुहृदिष्टस्योपजननं प्रति उत्पादनं प्रति हेतुः। अस्य सञ्ज्ञा सुहृदिष्टजननं प्रति हेतुः। श्रुता ख्यातेत्यर्थ इति वा पुण्यश्लोकत्वात्। अयं कस्य सुहृन्मित्रं न अपि तु सम्यक्परिपालनादुपकारित्वाद्वा सर्व्वस्यापि सुहृदेव। ईदृक् प्रत्यक्षे दृश्या अस्य छाया कायकान्तिः कुत्रापि नरसुरोरगेषु नाध्यगामि न दृष्टा। सुन्दरतरोऽयमित्यर्थः। छाया रीतिः लोकपालनमित्यर्थं इति वा। अस्येव जगत्पालनं कोऽपि

किञ्च प्रभावनमिताखिलराजतेजा
देवः पिताऽम्बरमणी रमणीयमूर्त्तिः।

न करोतीत्यर्थः। अमुना नखेनैव यमेन ब्रह्मचर्य्यादिनियमेन नक्तादिमनेन च तपस्तप्तं त्वदर्थमिति शेषः। छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः।तपश्चान्द्रायणादौ स्याद्धर्म्मे इत्यादि विश्वः। अध्यगाञ्जीति। इङो गाङादेशे कर्म्मणि चिण्। यमेनेति। पक्षे हेतौ तृतीया॥ १७॥

किञ्चेति। केवलं मन्त्रास्य जननीत्येव न। किञ्चान्यच प्रभया दीप्त्याऽवनमितं तिरस्कृतं अखिलं राजचन्द्रस्य तेजो येन सः।तथा रमणीयमूर्त्तिः अम्बरमणिः सूर्य्यः देवोऽस्य पिता। अस्य यमस्य उत्क्रान्तिदा नासिका अथ च मरणदा शक्तिरायुधविशेषः कमनु लघीकृत्य न प्रतिभाति समर्था न भवति अपि तु सर्व्वमनु समर्थैव।परेष्वन्येषु जनेषु गदान् रोगान्नियोक्तुः प्रेरयितुरस्य कृष्णत्वं श्यामलञ्च परपीड़ाजननेनापयश इत्यर्थः। अस्य कृष्णत्वं लौहत्वं लोहवत्कठिनान्तःकरणत्वमित्यर्थ इति वा॥ नलपक्षे प्रभावेन पराक्रमेण नमितसकलभूपप्रतापः।अम्बरमणिः सूर्य्यः इः कामस्तद्वद्रमणीयमूर्त्तिः देवो राजा वीरसेनोऽस्य पिता। देवो विजिगीषुरिति वा। महाकुलीनत्वमस्य सूचितं। राज्ञ इन्द्रस्य वा प्रभाया वनेन भजनया सम्बन्धेन तेजःसङ्गेन कृता मितमल्पीकृतमखिलभूपतेजो येनेति वा। अम्बरमणीभिर्वस्त्ररत्नैः कृत्वा रमणीयमूर्त्तिरिति वा। मणीशब्द ईकन्तोऽपि अम्बेति सम्बोधनं।.रमणीनां स्त्रीणां रमणयोग्या मूर्त्तिर्यस्येति

उत्क्रान्तिदा न कमनु प्रतिभाति शक्तिः
कृष्णत्वमस्य च परेषु गदान् नियोक्तुः ॥ १८ ॥
एकः प्रभावमयमेति परेतराजौ
तज्जीवितेशधियमत्र निधेहि * मुग्धे ।

वा । अस्य शक्तिरायुधविशेषः कं वैरिणमनु उत्क्रान्तिदा मरणदा न भवति । अस्य शक्तिः सामर्थ्यं कं यममनु उत्क्रान्तिदा मरणप्रदा न प्रतिभाति अपि तु सम्भाव्यत एव । यमादन्येषां भयं तस्याप्यस्माद्भयं शूरत्वातिशयो द्योत्यते इति वा । तथा शत्रुषु गदां शस्त्रविशेषं प्रयोक्तुरस्य कृष्णत्वं देवकीपुत्रत्वं । गदायुद्धप्रावीण्याच्छ्रीकृष्णसमानत्वमित्यर्थ इति वा । अस्य राज्ञः परा उत्कृष्टा इषुसम्बन्धिनो गदाः रोगाः दुःसहबाणजनिताः पीडा इति यावत् । तान् अर्थादरिषु प्रयोक्तुरस्य कृष्णत्वमर्ज्जुनत्वं च । बाणयुद्धप्रावीण्यादर्ज्जुनसमानोऽयमित्यर्थ इति वा । राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः । को ब्रह्मात्मनि लोकेषु शमने सर्व्वनाम्नि च । शक्तिर्बलप्रभावादौ शक्तिः प्रहरणान्तरे । इत्यादि विश्वः ॥ १८ ॥

एक इति । अयमेकः परेताः प्रेताः तेषां राजौ पङ्क्तौ विषये प्रभावं सामर्थ्यमेति । तत्तस्मादत्रास्मिन् जीवितेशधियं अन्तकबुद्धिं विधेहि कुरु हे मुग्धे उभयोर्भेदमजानाने सन्त्रासगर्भत्वात् दक्षषष्ठोदरस्याश्विभातुर्यस्य यमस्य भूतेषु प्राणिषु

* निधत्स्वेति पाठान्तरं ।

भूतेषु यस्य खलु भूरि यमस्य वश्य-
भावं समाश्रयति दक्षसचोदरस्य ॥ १८ ॥
गुम्फो गिरां शमननैषधयोः समानः
शङ्कामनेकनलदर्शनजातशङ्के ।

भूरि प्रचुरं भूतं वश्यभावमधीनत्वं समाश्रयति प्राप्नोति । प्राणिषु मध्ये प्रचुरं भूतं यस्य यमस्य वशि वशवर्त्ति सत् अभावं विनाशमेवाश्रयतीति वा । मुमुक्षवः कतिपये तदपेक्षया भूतानां प्राचुर्य्यं खलु निश्चये सर्व्वप्राणिनाम् एतदधीन इति निश्चये-नायमन्तक इति किन्न जानासीत्यर्थः ॥ नलपक्षे पराश्च इतरे आत्मीयाश्च तेषामाजिः परान्छेत्तांस्तेजस्विनोऽपि इतरे यस्मिं चोदीयसः कुर्व्वन्ति ये तेषामाजिरिति वा । परेरत्याष्टा या इतरेषां वैरिणामाजिरिति वा । तस्मां अयं नलः एक एव प्रभावमेति । तथा भूतेषु पृथिव्यप्तेजोवाय्वाकाशेषु मध्ये दृयति-रयभिनयेन सकला भूः सौन्दर्य्येण दक्षसहोदरस्य अश्विनुल्यस्य यस्याश्च वश्यत्वमाश्रयति। तस्मान्मुग्धे सुन्दरि अस्मिन् प्राणेश-बुद्धिं निधेहि । तथा समा सश्रीका त्वं यस्य एतद्वरणे प्रयत्नं कुरु । एवंविधः शूरः प्रभुशक्तियुक्तः सुन्दरश्च कोऽपि नास्ती-त्यनेनमेव वृणीष्वेति भावः। इतरशब्दात् पचे तत्करोतीति णिच् पचाद्यचि णिलोपः ॥ १८ ॥

गुम्फ इति । शमननैषधयोः यमनलयोर्विषये समानः तुल्यः पूर्व्वोक्तः गिरां गुम्फः देव्या वाणीसन्दर्भः विदर्भसु-

चित्ते विदर्भवसुधाधिपतेः सुतायाः
यन्निर्म्ममे खलु तदेष पिपेष पिष्टम् ॥ २० ॥

तत्रापि तत्रभवती भ्रमसंशयालो-
रालोक्य सा विधिनिषेधनिवृत्तिमस्याः।
पाथःपतिम्प्रति धृताभिमुखाङ्गुलीक-
पाणिः क्रमोचितमुपाक्रमताभिधातुं ॥ २१ ॥

धाधिपतेः सुतायाः भैम्याश्चित्ते यच्छङ्कां संशयं निर्म्ममे तत् खलु निश्चितं एष पिष्टं पिपेष चूर्णमेव चूर्णितवान् इति दृष्टान्त इत्यर्थः। चूर्णचूर्णनं यथा वृथा तथेदमपीत्यर्थः। किम्भूते चित्ते। अनेकेषां नलानां दर्शनेन जातशङ्के उद्भूतसंशये। गुम्फः स्याद्गुम्फने गुच्छे इति विश्वः ॥ २० ॥

तत्रेति। तत्रभवती पूज्या सा सरस्वती क्रमोचितं क्रमप्राप्तं परिपाटीयोग्यं यथा तथा वाभिधातुं वक्तुमुपाक्रमत। किं कृत्वा। तत्र यत्नेऽपि भ्रमसत्यर्थं संशयालोः सन्दिहानाया अस्या भैम्या विधिनिषेधाभ्यां सकाशान्निवृत्तिं प्रवृत्तिनिवृत्त्योरभावं आलोक्य। किंभूता। पाथसां पयसां पतिं प्रभुं वरुणं प्रति धृतः अवस्थापितः अभिमुखाङ्गुलीकः सम्मुखकरशाखः पाणिर्यया। तत्रभवच्छब्दः पूज्यार्थः। अङ्गुलीकेति। नद्यृतश्चेति कप् (पा॰ ५। ४।१५३)। उपाक्रमत। प्रोपाभ्यामिति तङ् (पा॰ १।३। ६४)। अभिधातुं। अभियोगे शकधृषेति तुमुन् (पा॰ ३।४। ६५) ॥ २१ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं।
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं ॥
स्वादूत्पादभृति त्रयोदशतयाऽऽदेश्यस्तदीये महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ ५६ ॥

परितापेनास्कन्दितो अभिभूत आनन्दो यस्य। परितापेन कृत्वा ऽऽस्कन्दितोऽप्राप्त आनन्दो येनैवम्भूतं वाऽस्या मुखं कर्त्त मिहिरेण सूर्य्येण रचितः अवस्कन्दः पराभवो यस्यैवंविधं इन्दुं निनिन्द निष्प्रभदिनचन्द्रसदृशमभूदित्यर्थः। आस्कन्दनमास्कन्दः पराभवः परितापेन य आस्कन्दः स सञ्जातो यस्यैवंविधो आनन्दो यस्येति। तदस्येति (पा० ५।२।३६) तारकादित्वादितच सिद्धिः ॥ ५५ ॥

श्रीहर्षमिति। अर्द्धं पूर्ववत् ॥ स्वादूत्पादभृति सहृदयहृदयाह्लाददायित्वात् स्वादुरसोत्पत्तिधारके ऽत्यन्तमधुरनवार्थसहिते त्रयोदशतया आदेश्योऽभिधेयः सर्गो स्वभावेनोज्ज्वलः व्यरमत् समाप्त इत्यर्थः। व्यरमत्। व्याङ्परिभ्यो रमः (पा० १।३।८३) इति परस्मैपदम् ॥ ५६ ॥ इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे त्रयोदशः सर्गः ॥ १३ ॥

---

## उत्तरनैषधचरिते।

### चतुर्दशः सर्गः।

---

ॐ गणेशाय नमः।

अथाधिगन्तुं निषधेश्वरं सा
प्रसादनामाद्रियतामराणाम्।
यतः सुराणां सुरभिर्नृणान्तु
सा वेधसाऽसृज्यत कामधेनुः॥ १॥

अथाभिगन्तुं निषधेशमेवा
प्रसादनं दानवशात्रवाणाम्।
अचेष्टतासौ महतीष्टसिद्धि-
राराधनादेव हि देवतानाम्॥ २॥

अथेति। अथ विकल्पदूषणानन्तरं सा भैमी निषधेश्वरं नलमधिगन्तुं निश्चेतुं प्राप्तुञ्च षोडशोपचारैरमराणां प्रसादनं परितोषणमाद्रियतादरेण चकार। यतः वेधसा सुराणां कामधेनुरभिप्रायप्रदः सुरभिर्गौरसृज्यत सृष्टा। नृणां तु पुनः कामप्रदः सा देवप्रसादना सृष्टा। तस्मान्नलनिश्चयार्थं प्राप्त्यर्थञ्च देवपरितोषणं चकारेति युक्तमित्यर्थः॥ १॥

अथेति क्षेपकः। अचेष्टत अकुरुत। यतश्च एव साध्यवाः प्रसा-दिनाम् स्वार्थम्॥ २॥

प्रदक्षिणप्रक्रमणालवाल-
विलेपधूपाचरणाम्बुसेकैः ।
इष्टञ्च मिष्टञ्च फलं सुवाना
देवा हि कल्पद्रुमकाननं नः ॥ ३ ॥
श्रद्धामयीभूय सुपर्वणस्तान्
ननाम नामग्रहणाग्रकं सा ।

पूर्व्वोक्तार्थसमर्थनार्थमर्थान्तरन्यासमाह । प्रदक्षिणेति । हि यस्माद् देवाः नोऽस्माकं मनुष्याणां कल्पद्रुमकाननं बहवः कल्पवृक्षा एवेति कवेरुक्तिः । किंभूता देवाः । प्रदक्षिणरूपं प्रक्रमणञ्च वलयाकारं परिभ्रमणं तदेवालवालं वृक्षमूले जलधारणार्थं वलयाकारः सेतुः स च विलेपश्चन्दनादिलेपश्च धूपो दशाङ्गादिः तेषामाचरणानि करणानि तान्येवाम्बुसेकाः प्रदक्षिणाद्याचरणञ्च उदकस्नपनानि च तैर्वा कृत्वा इष्टमभिलषितञ्च मिष्टञ्च स्वभावसुन्दरं सुस्वादु च फलं मनोरथरूपमाम्रादिकञ्च सुवाना उत्पादयन्तः । वृक्षा अपि आलवालवृक्षायुर्वेदोक्ततरुदोषनाशकनिविडिङ्गादिलेपदोहदधूपाम्बुसेकैरिष्टं मिष्टञ्च फलं सुवते । आवरणमिति पाठे अङ्गप्रत्यङ्गदेवतापूजा कण्टकादिवृतिर्वेति व्याख्येयं ॥ ३ ॥

पूजाप्रारम्भार्थं प्रथमं नमस्कारमाह । श्रद्धेति ॥ सा श्रद्धामयीभूय आस्तिक्यप्रचुरा भूत्वा नाम्नमवेशधारिणः सुपर्वणो देवान् नामग्रहणाग्रकं इन्द्राय नम इत्यादिनामग्रहणपूर्व्वकं

सुरेषु हि श्रद्दधतां नमस्या
सर्व्वार्थसिद्ध्यङ्गमिथःसमस्या ॥ ४ ॥
यत्तान् निजे सा हृदि भावनाया
बलेन साक्षादकृताखिलस्थान्।
अभूदभीष्टप्रतिभूस्तदस्या
वरं हि दृष्टा ददते परन्ते ॥ ५ ॥

ननाम ववन्दे। हि यस्मात् सुरेषु श्रद्धावतां नमस्या नमस्कार एव सर्व्वार्थसिद्धेर्यान्यङ्गानि तेषां मिथःसमस्या परस्परपूरण-हेतुः। श्रद्धापूर्व्वं देवनमस्कार एव कारणसामग्रीसम्पादकः। तस्माद्देवं नमस्कृतवतीत्यर्थः। समस्या यथा पदानां परिपूरणं करोति तथा नमस्या वाञ्छापूरणं करोतीति भावः। श्रद्धा-मयी। प्रकृतवचने मयट्। अयकं। शेषाद्विभाषेति कः (पा॰ ५।४।१५४।) नमस्करणं नमस्या। नमो वरिव इति क्यच् (पा॰ ३।१।१९।) ॥ ४ ॥

देवपूजाङ्गं ध्यानं प्रथममाह। यदिति॥ साऽखिलस्थान् सर्व्वगतांस्तानिन्द्रादीन् भावनया ध्यानस्य बलेन सामर्थ्येन निजे हृदि यत्साक्षादकृत प्रत्यक्षीचकार। सर्व्वगतानपि ध्यानबलेनै-कस्थानीय ददर्शेत्यर्थः। स साक्षात्कार एव तस्या भैम्या अभी-ष्टस्य नलप्राप्तिलक्षणस्य प्रतिभूः दाननिश्चयकर्त्ताऽभूत्। हि यस्माद्दृष्टास्ते देवाः परं श्रेष्ठं वरमभीष्टं परिणेतारञ्च ददते प्रयच्छन्ति। न हि देवदर्शनं निष्फलं भवतीत्यर्थः॥ ५ ॥

हृत्पद्मसद्मन्यधिवास्य बुद्ध्या
दध्यावथैतान्नियमैकताना।
सुपर्वणां हि स्फुटभावना या
सा पूर्व्वरूपं फलभावनायाः॥ ६॥
सभाजनं तत्र ससर्ज तेषां
सभाजने पश्यति विस्मिते सा।

पूजानन्तरं पुनरपि ध्यानमाह। हृदिति। अथ पूजानन्तरं नियमैकतानाऽनन्यवृत्तिस्तत्परा सती हृदेव पद्मं तद्रूपे सद्मनि गृहे एतानिन्द्रादीन् बुद्ध्याऽधिवास्याधिष्ठाप्य दध्यौ सर्व्वगतानामपि देवानां हृदये बुद्ध्या समारोपितं रूपं ध्यानेन साचादकृतेति यावत्। हि यस्मात् सुपर्व्वणां देवानां या स्फुटा भावना ध्यानबलेन प्रत्यचता सा फलभावनायाः कार्य्यसिद्धेः पूर्व्वरूपं प्रथमं स्वरूपं। कारणस्य कार्य्यापेचया नियतप्राग्भावित्वाद्देवानां प्रत्यचतायाः कार्य्यमात्रं प्रति कारणत्वात् कारणसामग्रीरूपां देवप्रत्यचतां ध्यानेनाकृतेत्यर्थः। पूजायाः पूर्व्वमनन्तरञ्च ध्यानस्य दृष्टत्वात् अत्रानित्यत्वाच्च च स्रोकस्य न पौनरुक्त्यं। उपान्वध्याङ्वसः इत्यत्र (पा० १।४।४८) अप्यन्तस्य वसेर्ग्रहणात् स्वरसादन्ते मुनिमासने इति च ण्यन्तस्य वसेः प्रकृत्यन्तरत्वात् हृत्पद्मनीत्याधारस्य न कर्म्मत्वं॥ ६॥

इदानीं देवपूजामाह। सभाजनमिति। सा तत्र स्वयम्बरस्थाने अकस्मादेव देवपूजारम्भाद् अत्यादरेण च पूजनाद्विस्मिते

आमुद्यते यत्सुमनोभिरेवं
फलस्य सिद्धौ सुमनोभिरेव ॥ ७ ॥
वैशद्यहृद्यैर्म्रदिमाभिरामै-
रामोदिभिस्तानथ जातिजातैः ।

साश्चर्ये सभाजने सभालोके पश्यति सति समनादृत्य वा तेषां देवानां सभाजनं प्रीत्याऽऽराधनं ससर्ज चक्रे। यद्यस्मात् फलस्याभीष्टस्य सिद्धौ दाने सुमनोभिः शोभनचित्तैरेवम्भूतैरेव सद्भिः सुमनोभिर्देवैः एवमत्यादरपूजनेन कृत्वा आमुद्यते हृष्टैर्भूयते तस्मादेवमपूजयदित्यर्थः। एवमेवैवंसत्येवेत्येवकारयोजना वा। पुष्पैरपि फलसिद्ध्यर्थमामुद्यते विकस्वरीभूयते। सभाजने। यस्य च भावेनेति (पा० २।३।३७) षष्ठी चानादर इति (पा० २।३।३८) वा सप्तमी ॥ ७ ॥

वैशद्येति। अथ सा नवीनैर्नवैः स्तवैः स्तुतिश्लोकरूपैः प्रसूनस्तवकैः पुष्पगुच्छैः स्तुतिश्लोकैः पुष्पगुच्छैश्च वा तानिन्द्रादीन् आनर्च। किं विधैः। वैशद्येन स्पष्टतया प्रसादगुणेन हृद्यैः सहृदयहृदयप्रियैः। अथ च शुभ्रत्वेन मनोज्ञैः। तथा म्रदिम्ना निष्ठुरटवर्गादिवर्णरहितश्रुतिमधुरवर्णरचनाजनितेन माधुर्येण। अथ च सौकुमार्येणाभिरामैरत एवामोदिभिर्दर्पजनकैः। अथ च सौगन्ध्यसहितैः। तथा जातैः षड्विंशत्यक्षरजनितचरणाद्युत्कृष्टादिजातिभिर्युक्तैः। अथ च मालतीप्रभवैः। तथा आर्याविशेषरूपया गीत्या अन्विता युक्ताः षट्पदाः षट्चरणाः दोश

आनर्च गीत्यन्वितषट्पदैः सा
स्तवप्रसूनस्तवकैर्नवोनैः॥ ८॥
भक्त्या तयैव प्रससाद तस्या-
स्तुष्टं स्वयं देवचतुष्टयं तत्।
स्वेनानलस्य स्फुटतां यियासोः
फूत्कृत्यपेक्षा कियती खलु स्यात्॥ ९॥

यच। अथ च गुञ्जन्मधुकरैः। वैशयं शब्दार्थालङ्कारापशब्द-भावदोषराहित्यं तेन मनोज्ञैर्वा। जातिः छन्दसि सामान्ये मालत्याङ्गोत्रजन्मनोः। गीतिश्छन्दसि गाने चेति विश्वः। हृद्येति। हृदयस्य प्रिय (पा० ४।४।९५।) इति यत् हृदयस्य हृल्लेखेति (पा० ६।३।५०।) हृदादेशः अभिरम्यते यैस्तैरभिरामैः। अ-कर्त्तरि च कारक (पा० ३।३।१९।) इति चकारादसञ्ज्ञा-यामपि करणे घञ्। ज्यात्यादिलक्षणं छन्दोग्रन्थे ज्ञातव्यं। न वा कैरिति पाठे कैर्वा स्तवप्रसूनस्तवकैर्नानर्च अपि तु नानाप्र-कारैःस्तवप्रसूनस्तवकैश्चापूपुजदित्यर्थः॥ ८॥

भक्त्येति। तस्याः पातिव्रत्यादिगुणैरादावेव भक्तिनिर-पेक्षं स्वयमात्मनैव तुष्टं तदिन्द्रादिदेवचतुष्टयं तस्यास्तयैवाल्पी-यस्यापि भक्त्या पुनः प्रसाद प्रसन्नमभूत्। अल्पीयस्यापि भक्त्या प्रसन्नतायां दृष्टान्तमाह। खलु यस्मात् स्वेनात्मनैव स्फुटतां प्राकट्यं यियासोर्यातुमिच्छतः सम्बद्धसन्धुक्षणतया आसन्न-प्रज्वलनस्यानलस्य वह्नेः कियती सन्धुक्षणार्थं फूत्कृतेर्मुखपवनस्या-

प्रसादमासाद्य सुरैः कृतं सा
सस्मार सारस्वतसूक्तिसृष्टेः।
देवा हि नान्यद्वितरन्ति किन्तु
प्रसद्य ते साधुधियं ददन्ते॥ १०॥

पेक्षा स्यात् भवेत् अपि त्वन्येव। तादृशोऽग्निर्दिवैरेव फूत्कारैः सन्धुक्षितो दीप्यतेतरामित्यर्थः। तस्मात् स्वतः प्रसन्नस्याप्यपि भक्त्या पुनः प्रसन्नत्वं युक्तमित्यर्थः। तस्याः सरित्वादय ते पवित्रात् प्रागेव हृष्टा झटिति प्रसेदुरित्यपि पाठः स्पष्टार्थः॥ ९॥

प्रसादफलमाह। प्रसादमिति। सा भैमी सुरैः कृतं प्रसादमासाद्य सरस्वत्या इमाः सारस्वत्यस्ताश्च ताः सूक्तयश्च शोभनोक्तयः श्लेषवाक्यानि तासां सृष्टेर्निर्माणस्य रचनां इत्यर्थं सस्मार। श्लेषार्थे सन्देहं परित्यज्य गाथाक्रमेणेन्द्रादीन्वहतोऽपि ज्ञात्वा पञ्चमो नल इत्यजानादित्यर्थः। देवीवचनस्मरणरूपः को नाम प्रसाद इत्यत आह॥ हि यस्मात् देवा अन्यत्किञ्चिन्न वितरन्ति ददति किन्तु ते देवाः प्रसन्ना भूत्वा साध्वीं कार्यसाधिकां धियं बुद्धिमेव ददन्ते। तदुक्तं महाभारते॥

"न देवा दण्डमादाय रक्षन्ति पशुपालवत्।
यन्तु रक्षितुमिच्छन्ति बुद्ध्या योजयन्ति तमिति।"

तस्मादयमेव प्रसादो युक्त इत्यर्थः। सृष्टेः। अधीगर्थेति (पा॰ २।३।५२।)कर्मणि षष्ठी। ददन्ते। दद दाने इत्यस्य रूपं॥ १०॥

शेषं नलं प्रत्यमरेण गाथा
या या समार्था खलु येन येन।

स्मरणमेव विशदयति। शेषमिति॥ शेषं पंचमं सत्यनलं प्रति लचीकृत्य ब्रूमः। किमित्यादिराकर्ण्येति यावत्। एष इत्यादिः साधारणीमिति यावत्। दण्डमित्यादिर्गुम्फमिति यावत्। या सर्व्वेत इत्यादिः शङ्केति यावत्। या या गाथा प्रसादात् पूर्वं येन येनेन्द्रादिदेवेन सह समार्था तुल्यार्था सरस्वत्योक्तेति शेषः। सा भैमी तां तां ब्रूम इत्यादिगाथां ततः प्रसादानन्तरं तदन्येन तस्मात्तस्मादिन्द्रादिरूपान्मुख्यादर्थादन्येन क्षेपगत्या प्रतिभासमानेन नलरूपेणार्थेन सह खलु निश्चितमलगन्तोमसम्बद्धार्थां विशेषं प्रति स्वस्वाकारधारणात् भिन्नमिन्द्रादिदेवं प्रतिसन्धे योजयामास। इयमेतस्य गाथेयमेतस्य गाथेति सम्बन्धं चकारेत्यर्थः। ब्रूम इत्यादेः सालां विलोक्येति यावत्। नलस्य सर्व्वत्रानुस्यूतत्वादिन्द्रादीनान्तु चतसृषु चतसृष्वेव स्वस्वगाथासु अनुस्यूतत्वात्तां तामिन्द्रादिगाथां तदन्येन वज्रादिना सहान्वगन्तीं विशेषमजानात्। येन्द्रेण नलेन चासमानार्था तामिन्द्रविषयामेव ससार॥ एवमितरदेवचितयेऽपि प्रत्येकगाथामेकविषयामेव ससार। एवं चतसृष्वपि गाथासु नलस्यानुवृत्तेरिन्द्रादीनाञ्च व्यावृत्तेरावापोद्वापाभ्यामेते देवा अयमेव नल इत्यज्ञासीदित्याशय इति वा। प्रतिश्लोकं गाथात्वेऽपि चतुर्भिश्चतुर्भिःश्लोकैरेकैकस्य प्रतिपादनादेक-

तां तां तदन्येन सहालगन्तीं
ततो विशेषं प्रतिसन्दधे सा ॥ ११ ॥
एकैकवृत्तेः प्रतिलोकपालं
पतिव्रतालं जगृहुर्दिशां याः।

गाथात्वसमारोपात्प्रत्येकपर्य्यवसानादेकवचनं। यद्वा पञ्चमं नल प्रति या या, अत्याजि, येनामुना, यत्पण्डिमा, किन्ते तथेत्यादिका, गाथा येन येनेन्द्रादिना सह सम्बद्धार्था तदन्येन वरुणादिना सहालगन्ती तां तां गाथामेव विशेषं भेदं जानाति स्म। एकैकस्या गाथाया एकैकदेवपर्य्यवसानाद्यत्नल्लक्षणामपि गाथानां नले प्रर्य्यवसानात्परिशेषप्रमाणादयं पञ्चम एव नल इति विशेषमज्ञासीदित्यर्थः। अस्मिन् पद्येऽमुमेवार्थमुक्तिविशेषेण प्रकटयितुमाह। एकैकेति। उत्तरश्लोकस्यावतारिका कर्त्तव्या॥११॥

एकैकेति। या गाथा एकैकवृत्तेः एकस्मिन्नेकस्मिन्निन्द्रे अग्नौ यमे वरुणे च वर्त्तमानत्वात् प्रतिलोकपालमेकैकस्मिन्निन्द्रादिदिक्पालं प्रति दिशामैन्द्र्यादीनां पतिव्रतालं जगृहुरग्रीषत्। प्राच्यादीनामिन्द्रादिप्रतिनियतदेवत्ववत्तितया यत् पातिव्रत्यं तत्पातिव्रत्यं तेनैवाकारेण या अत्याजीत्यादि गाथा अग्रीषत् इत्यर्थः। ता गाथा मिलितास्ततोऽपि तदा प्रमादादमरश्रमापेक्षया केवलस्य नलस्य वध्वा नलैकप्रवणा नलैकाभिधायिनीरेव वेद ज्ञातवती। का इव गाथा इव। मिलिता दिशो यथा नलस्य वध्वाः ऐन्द्र्यादीनां दिशामिन्द्रादिकैकप्रवृ

वेद स गाथा मिलितास्तदासा-
वाशा इवैकस्य नलस्य वश्याः ॥ १२ ॥
या पाशिनैवाशनिपाणिनैव
गाथा यमेनैव सहाग्निनैव ।

त्वेऽपि सर्व्वासां दिशां चक्रवर्त्तिनलैकवश्यत्वं यथा तथा गाथा-नामपीत्यर्थः । आशा अर्थिनां मनोरथाः वदान्यतया नलस्य यथा वश्या इति वा । दाशा इति वा पाठः । भ्रान्तिदशाया-मुभयार्थत्वं प्रसादानन्तरं तु नलैकार्थत्वं वेद स्मेति भावः । दिशां पातिव्रत्यं गाथाभिर्गृहीतमित्यर्थः ॥ १२ ॥

येति । किं न इत्यादिर्या गाथा पाशिनैव वरुणेनैव समा तुल्यार्था न त्वन्येनेन्द्रादिना । या चाऽत्याजीत्यादिरशनिपा-णिनेन्द्रेणैव समा न त्वन्येन देवेन । या च यचण्डिमेत्यादिर्यमे-नैव समा न त्वन्येन । या च येनामुनेत्यादिरग्निनैव तुल्या न त्वन्येन । नलस्य सम्बन्धिनीं मिलितां समुदितां चतुष्टयरूपां तां गाथामेव तदा देवप्रसादादनन्तरं सैषा भैमी नलस्य विशेषाय इन्द्रादिभ्यो भेदज्ञानाय मेने । इन्द्रादीनामेकैकस्यामेव गाथायां वर्त्तमानत्वात् । नलस्य तु सर्व्वत्रानुगतत्वादत्याजीत्यादिगाथा-चतुष्टयप्रतिपाद्यो यः स एव नल इति तामेव गाथां मिलितां नलस्य भेदज्ञापिकामज्ञासीदिति भावः । या नलस्य गाथेति वा सम्बन्धः । या पाशिनेवेन्द्रेणेव यमेनैवाग्निनैव समा गाथा नलस्य सम्बन्धिनीं मिलितां तामेव अनलस्य नलव्यतिरिक्तस्ये-

तामेव मेने मिलितां नलस्य
सैषा विशेषाय तदाऽनलस्य ॥ १३ ॥
निश्चित्य शेषं नमसौ नरेशं
प्रमोदमेदस्वितरान्तराऽभूत्।

न्द्रादेर्भेदाय मेने। मिलितया तया कला नले निश्चिते यति नान्तरीयकलाक्तादितरे देवा अपि तयैव निश्चिता इति भाव इति वा। मिलितां तामेव गाथां नलस्य विशेषाय तथा नलेतरस्येन्द्रादेर्भेदाय मेने इति वा व्याख्येयं। या पाशिनैवेत्यादेरेवकारात् परस्परसमुच्चयार्थानपर्थ्यानङ्गीकृत्य या नलसम्बन्धिनी गाथा पाशिनापीन्द्रेणापि यमेनाप्यग्निनापि तुल्यार्थाऽभूत्तां देवः पतिरित्यादिमिलितां पश्चार्थां गाथां देवप्रसादादनन्तरं नलस्यैव विशेषाय मेने। प्रसन्नैर्देवैः स्वीयस्वीयाकारेषु धृतेषु पूर्वं पश्चार्थत्वेन प्रतिभातामपीदानीमेकस्य नलस्यैव प्रतिपादिकामज्ञासीदिति भावः। देवः पतिरितीयमेव गाथा विषय इति शेयं। अवधारणार्थैव्यर्थैवकारेषु इयमेव गाथा विषय इति व्याख्येयं। अयं श्लोकः निश्चित्य शेषं, एकैकदृत्तेरिति द्वाभ्यां श्लोकाभ्यां समानार्थः। अनलस्येति। प्रत्येकपर्य्यवसायित्वादेकवचनं ॥ १३ ॥

निश्चित्येति। असौ भैमी शेषमवशिष्टं तं पञ्चमं पूर्वोक्तप्रकारेण नरेशं नलं निश्चित्य प्रमोदेन महाहर्षेण मेदस्वितरं अत्यन्तपरिपुष्टं मोक्षासमतरं माधर्म यस्याः एवंविधाऽभूत्।

देव्या गिरां भावितभङ्गिराख्य-
च्चित्तेन चिन्तार्णवयादसेदम् ॥ १४ ॥
सा भङ्गिरस्याः खलु वाचि काऽपि
यद्भारती मूर्त्तिमतीयमेव ।
श्लिष्टं निगद्याहतवासवादीन्
विस्मिप्य मे नैषधमप्यवादीत् ॥ १५ ॥

नले निश्चिते सति नितरां हृष्टाऽभूदित्यर्थः। रत्नयोः सावर्ण्यात् नरत्नभावीभुय तं इति वा। अनन्तरञ्च देव्याः सरस्वत्या गिरां वचनानां भाविता पर्य्यालोचिता भङ्गिः प्रकारो यया विज्ञाताशया गिरां देव्याः सरस्वत्या वा विज्ञातवचोरचना-विशेषा सती नलनिश्चयात् पूर्व्वं चिन्तार्णवयादसा चिन्तासमुद्र-जलजन्तुरूपेण, नलनिश्चये सत्यपि तत्प्राप्त्युपायचिन्तासमुद्र-जलचरेण वा चित्तेन मनसा इदं वक्ष्यमाणप्रकारं आख्यत् ऊचे। मनस्येवैवमचिन्तयदिति भावः। चित्रार्णवेति पाठे वि-चित्रदेवीवचनानुस्मरणजनिताश्चर्य्यसमुद्रजलचरेणेति साश्चर्य्ये-णेत्यर्थः ॥ १४ ॥

किमाख्यदित्याह। सेति। खलु निश्चितं सा प्रसिद्धा मूर्त्ति-मती भारती सरस्वती देवी, इयमेवेयं मूर्त्तिमती सा भारत्ये-वेति भारतीत्वं विधेयं। यद्यस्मादस्या वाचि काऽपि लोकोत्तरा भङ्गिः रचनाऽस्ति तस्मादित्यर्थः। यस्मादियमेव मूर्त्तिमती भारती तस्मादस्या वचने निश्चितं सा कापि भङ्गिरस्तीति वा।

जग्रन्थ सेयं मदनुग्रहेण
वचःस्रजः स्पष्टयितुं चतस्रः।

तामेव भङ्गीमाह। यत् प्रियमुभयसम्बद्धं वचो निगद्य स्पष्टमुक्का वासवादीनादृतगौरवेणावर्णयत्। विशिष्य विशेषं कृत्वा तेभ्यो विशिष्य वा यदस्याजीत्यादिश्लोकचतुष्टयेन मे मम भर्त्तारं नैषधमप्यवादीत्। सर्व्वलोकपालांशस्य नलस्यैव वर्णनं कृतमिति युक्तमिति भावः ॥ १५ ॥

जग्रन्थेति। सेयं वाणी मयि मम वाऽनुग्रहेण कृपया स्पष्टयितुं नलं स्पष्टं ज्ञापयितुं चास्मतलोऽस्याजीत्यादीर्वचःस्रजो वचनमाला जग्रन्थ ससर्ज। तासु मध्ये द्वे ते वचःस्रजौ नासत्यौ मया नलमुदीरितं क्ष्मभृन्नले सद्दजरागभरादित्येवंरूपे मही महेन्द्रे नलमुदीरितमित्येवंरूपे वा नलं सूचयितुं ज्ञापयितुं क्षमेते समर्थे भवतः। अहो आश्चर्य्यं। ममैवायमेतावन्तं कालं मदीयान्मोहः अबोधः। नले स्पष्टं कथितेऽपि एतावन्तं कालं मम निश्चयो नाभूदित्याश्चर्य्यमित्यर्थः। पूर्व्वोक्ता एव चतस्रो वचःस्रजः स्पष्टयितुं तदर्थं स्पष्टीकर्त्तुं ये द्वे ते वचःस्रजौ, त्वं यार्थिनी, देवः पतिरित्येवंरूपे सेयं देवी जग्रन्थ, ते द्वे वचःस्रजौ नलं सूचयितुं क्षमे समर्थे। त्वं यार्थिनीत्यनेन प्रथमव्याख्याने स्फुटं नलस्यैव प्रतिपादनात् व्याख्यानान्तरेऽपि च देवान् परितोष्य सम्यग्ज्य वा नल एव स्वीकरणीय इति यावदर्थे नलस्यैव प्रतिपादनाद्देवः पतिरित्यनेनापि लोकपालांशत्वादे-

द्वे ते नलं लक्षयितुं क्षमेते
ममैव मोहोऽयमहो महीयान्॥ १६ ॥
श्लिष्यन्ति वाचो यदमूरमुष्याः
कवित्वशक्तेः खलु ते विलासाः।

कस्यापि नलस्यैव पञ्चरूपत्वसम्भवादिन्द्रादेरसम्भवान्नलादन्यस्त्वव कतरो वरोऽपि त्वन्यो नास्तीत्यपि नलस्यैव प्रतिपादनादित्यर्थ इति वा। अत्र पूर्वस्तच्छब्दो विशेष्य वचःस्रक्परामर्शार्थः। उत्तरस्तु तत्परामर्शकोऽपि विधेयसंस्पर्शी। यत्तदोश्च नित्यसम्बन्धात् यच्छब्दः सम्बध्यते। श्रन्थि ग्रन्थि दम्भि स्वञ्जीनामिति वक्तव्यमिति (पा० १।२।६। वा० १) नित्यमपितो लिटः कित्त्वविधानाच्छ्रन्थेति रूपं। संयोगात्परस्य लिटो वा कित्त्वमिति केचिदिति अपितो लिटः कित्त्वविधानाद्वा नलोपाभावः समर्थनीयः। युक्त्यन्तरेण वा समाधातव्यं॥ १६॥

श्लिष्यन्तीति। अमुष्या देव्या अमूः पूर्वोक्ता वाचः यदनेकार्थतया श्लिष्यन्ति श्लेषं भजन्ते खलु निश्चितं कवित्वशक्तेः काव्यनिर्माणसहजप्रतिभाया विलासाः विजृम्भणानि। कवित्वशक्तिं विना श्लेषवचोरचना निर्मातुमशक्येत्यर्थः। किल यस्मात् व्यतिभेदिनोऽपि परस्परापेक्षया नलापेक्षया वा विशेषेण सहस्रनेत्रत्वादिना अतितरां भिन्ना अप्यमी लोकपालाः भूपालस्य नलस्य लीला विलासान्समाविशन्ति अनुभवन्ति नलाकारं बिभ्रति। अथ च नलवर्णकेषु श्लोकेषु मूर्त्तीभूय प्रविष्टा इव

भूपाललीलाः किल लोकपालाः
समाविशन्ति व्यतिभेदिनोऽपि ॥ १७ ॥
त्यागं महेन्द्रादिचतुष्टयस्य
किमभ्यनन्दत् क्रमसूचितस्य ।
किं प्रेरयामास नले च तन्मां
का सूक्तिरस्या मम कः प्रमोदः ॥ १८ ॥

दृश्यन्त इत्यर्थः । अतः श्लेषवशान्मम भ्रमोऽभूदिति भावः । श्लेषवशान्नललीलाः सन्तो लोकपाला गाथाः समाविशन्तीति वा । अन्योन्यं भिन्ना अपि लोकपाला नललीलाः सन्तोऽनेन नृपत्वं प्राप्ताः सन्तः किलैकीभवन्ति । अतो नलस्यैव लोकपालांशतया तत्र युक्तानि देवीवचांसि श्लेषं वदन्तीति कवित्वशक्तिविलासा एव ॥ १७ ॥

त्यागमिति । इयं देवी अत्याजि येनेत्यादिश्लोकचतुष्टयेन त्वं यार्थिनी, देवः पतिरित्यादिना गाथाद्वयेनापि क्रमेण सूचितस्य प्रत्यायितस्येन्द्रादिनलचतुष्टयस्य पूर्व्वव्याख्यानप्रकारेण परित्यागं किं कथमभ्यनन्दत् युक्तमेतदिति स्तौति स्मेत्यर्थः । नले मां पूर्व्वव्याख्यानप्रकारेण प्रेरयामास च । किं कथं प्रेरयामास एकेनैव वाक्येन द्वयमिति कथंचकाराश्चर्य्यमेतदित्यर्थः । किं शब्दावाश्चर्य्ये । नले च नल एवेति । चकारोऽवधारणार्थो वा । तत्तस्मात्कारणादस्या देव्याः का सूक्तिः शोभनवचननिर्माणचातुरी अपि तु लोकोत्तरा । मम प्रहृष्टो मोदश्च कः,

परस्य दारान् खलु मन्यमानै-
रस्पृश्यमानाममरैर्धरित्रीम् ।
भक्त्येव भर्त्तुश्चरणौ दधानां
नलस्य तत्कालमपश्यदेषा ॥ १९ ॥

अपि तु सोऽपि लोकोत्तरः । अस्या इयमुक्तिः क्व मम मोहस्य कोऽत्यर्थः । एवं देव्या इन्द्रादिचतुष्टयस्य स्वयं परित्यागेऽभ्यनुज्ञाते नलस्य च वरणेऽभ्यनुज्ञाते ममैवं मोहो न युक्त इत्यर्थः । पूर्वं मोहोऽभूदिदानीं तु निवृत्त इत्याशयः । इन्द्रादित्यागं किमर्थमभ्यनन्दत् नले च मां किमर्थं प्रेरयामास उभयमपि तावचकार । तदेतन्मदनुग्रहार्थमेवेति भाव इति वा । त्यागं । यजोः कुषिप्सतोः ७ । २ । ५२ । इति कुत्वं ॥ १८ ॥

एवं विचारानन्तरं किमभूत्तदाह । परस्येति ॥ एषा भैमी तत्कालं देवप्रसादसमये एवम्भूतां धरित्रीं पृथ्वीं अपश्यत् । किम्भूतां । परस्य नलस्य दारान् मन्यमानैरिव परनारीबुद्ध्येवामरैरिन्द्रादिभिरस्पृश्यमानां । खलु इवार्थे । तथा भूपतिलाञ्छनर्नलस्य भक्त्येव सेवाबुद्ध्येव चरणौ दधानां धारयन्तीं । अन्यापि भक्त्या भर्त्तुश्चरणौ धारयति । देवत्वात् सहजो भूम्यस्पर्शो मनुष्यत्वात् सहजो भूमिस्पर्शोऽन्यथोत्प्रेक्षितः । देवमनुष्यचिह्ने दर्शिते । दारानिवेति वा पाठः ॥ १९ ॥

सुरेषु नापश्यदवैक्षताक्ष्णो-
र्निमेषमुर्वीभृति सम्मुखी सा।
इह त्वमागत्य नले मिलेति
सञ्ज्ञानदानादिव भाषमाणम्॥ २०॥
नाबुद्ध बाला विबुधेषु तेषु
क्षोदं क्षितेरैक्षत नैषधे तु।
पत्ये सृजन्त्याः परिरम्भमुर्व्याः
सम्भूतसम्भेदमसंशयं सा॥ २१॥

सुरेष्विति। सा भैमी सम्मुखी सती बुद्धिपूर्व्वं विलोकयन्ती सुरेषु अक्ष्णोर्निमेषं नेत्रपक्ष्मसङ्कोचं नापश्यत् नावैक्षत। उर्वीभृति नले तु अवैक्षत। देवानामनिमेषत्वान्मनुष्याणाञ्च सनिमेषत्वादित्यर्थः। तत्रोत्प्रेक्षते। किम्भूतं निमेषं। सञ्ज्ञानदानात् अकारणसूचकाक्षिपक्ष्मचेष्टाकरणात् इति भाषमाणमिव। इति किं। हे भैमि त्वमागत्य इह मया चिह्निते नले मिल संयुक्ता भवेति॥ २०॥

नेति। सा तेषु विबुधेषु देवेषु क्षितेः क्षोदं भूरेणुं लग्नं नाबुद्ध न ददर्श। नैषधे तु ऐक्षत ददर्श। देवानां रजःसम्बन्धाभावात्। नराणां तत्सम्बन्धादित्यर्थः। तत्र असंशयमुत्प्रेक्षते। पत्ये नलाय परिरम्भमालिङ्गनं सृजन्त्या ददत्या उर्व्याः सकाशात् सम्भूतसम्भेदमिव सञ्जातसम्बन्धमिव आलिङ्गनवशात् रेणुसंश्लेषं इवेत्यर्थः। पत्ये। क्रियया यमभिप्रैति स सम्प्रदा-

स्वेदः स्वदेहस्य वियोगतापं
निर्व्वापयिष्यन्निव संसिसृक्षोः ।
हीराङ्कुरश्चारुणि हेमनीव
नले तयालोकि न दैवतेषु ॥ २२ ॥
सुरेषु मालाममलामपश्यन्-
नले तु वाला मलिनीभवन्तीम् ।

नम्निति (पा० १।४।३२।वा० १) सम्प्रदानत्वं ॥ २१ ॥

स्वेद इति । तया नले स्वेद आलोकि न दैवतेषु देवेषु । किं करिष्यन्निव । संसिसृक्षोर्भैम्यालिङ्गनं कर्त्तुमिच्छोः स्वदेहस्य नलशरीरस्य वियोगतापं भैमीवियोगजनितं ज्वरं निर्व्वापयिष्यन्निव शमयिष्यन्निव । देवेषु स्वेदस्याभावान्नरेषु च तत्सद्भावादित्यर्थः । उदकं हि तापं शमयति । नलालिङ्गनोत्सुकस्य भैमीदेहस्य वा सात्त्विकस्वेदयुक्तो नलो मया मात्र एवेति भैम्या विरहज्वरशान्तिः । उत्प्रेक्षते । चारुणि अत्युत्तमे हेमनि सुवर्णे खचितो हीराङ्कुर इव । अतिगौरदेहरोमकूपस्थस्वेदजलकणझलत्कारो हेमस्थवज्राङ्कुरत्वेनोत्प्रेक्षितः । देवता एव दैवतानि । प्रज्ञादित्वात्स्वार्थे (पा० ५।४।३८) अण् । क्वचित् स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति (पा० ५।३।६८) परिभाषया षण्ढत्वं ॥ २२ ॥

सुरेष्विति । वाला भैमी सुरेषु मालां अमलां निर्म्मलामम्लानां चापश्यत् नले तु मलिनीभवन्तीं पूर्व्वमम्लानां काल-

इमां किमासाद्य नलोऽद्य स्वर्दौ
श्रद्धास्यते मामिति चिन्तयेव ॥ २२ ॥
श्रियं भजन्तां कियदस्य देवा-
श्छाया नलस्यास्ति तथापि नैषाम्।

क्षेपणोष्मणा च म्लानां मलिनाञ्च जायमानां अपश्यत्। सुराणामम्लानकुसुमत्वादित्यर्थः। उत्प्रेक्षते। इति चिन्तयेव मलिनीभवन्तीं। इति किं। नलो ऽद्य स्वयम्बरदिने स्वर्दौ मत्सकाशादर्थितिमद्दत्तीं इमां भैमीं आसाद्य प्राप्य मां मालां श्रद्धास्यते किं आदरेणाङ्गीकरिष्यति किं अपि तु नेति ॥ २२ ॥

श्रियमिति। देवा अस्य नलस्य श्रियं शोभां कियद्भजन्तां आश्रयन्तु अपि तु न किञ्चिदपि यस्मात् एषां देवानां नलस्य सम्बन्धिनी तथा तादृशी अतिप्रसिद्धा छायापि कान्तिलेशोऽपि नास्ति। येषां यदीयकान्तिलेशोऽपि नास्ति ते तदीयां शोभां कथमाश्रयन्तामपि तु न कथञ्चिदित्यर्थः ॥ अथ च एषां नलसम्बन्धिनी आदर्शादिस्थिता छाया प्रतिबिम्बमपि नास्ति। प्रतिबिम्बतुल्यास्ते न भवन्तीति यावत्। येषां यदीयप्रतिबिम्बेनापि न साम्यं ते तदीयबिम्बश्रियं कथं भजन्तामित्यर्थः ॥ अथ चास्य श्रियं किञ्चिद्भजन्तां नटवन्नलरूपधारणात् किञ्चिच्छोभन्तां। तथापि स्वाभाविकी नलस्य कान्तिरेषां नास्ति ॥ अथ चास्य सम्पदं बहु भजन्तां तथापि नलस्य कान्तिरेषां नास्ति। सम्पदा तुल्यत्वेऽपि कान्त्या तुल्यत्वं नास्तीत्यर्थः ॥

इतीरयन्तीव तया निरैचि
सा नैषधे न त्रिदशेषु तेषु ॥ २४ ॥
चिह्नैरमीभिर्नलसंविदस्याः
संवादमाप प्रथमोपजाता।
सा लक्षणव्यक्तिभिरेव देव-
प्रसादमासादितमप्यबोधि ॥ २५ ॥

अथ चास्य श्रियं कियद्वक्तु भजन्तीं तथापि भूमौ तमःप्रकृतिः छाया देहव्यवहितरविप्रभोपलक्षितः श्यामाकारो नलस्यास्ति एषां तेजोरूपत्वेन नास्ति। तेजोराहित्येन च नराणां विद्यत इत्यर्थः। तया भैम्या इति पूर्वोक्तप्रकारैरीरयन्तीव कथयन्तीव यथाहं वर्त्ते स एव नल इति प्रकाशयन्तीव सा छाया नैषधे निरैचि दृष्टा तेषु त्रिदशेषु न। छायापि स्वाभावभावाभ्यां देवत्वनरत्वव्यञ्जिका जातेत्यर्थः। कियदिति क्रियाविशेषणं ॥ २४ ॥

चिह्नैरिति। अस्या भैम्याः प्रथमोपजाता दूत्यकालोत्पन्ना इतरनलतुल्याभागिति पूर्वसर्गोक्ततर्कोत्पन्ना वा देवीश्लोकानुसन्धानोत्पन्ना वा अयमन्य एव नल इति संवित् बुद्धिरमीभिः पूर्वोक्तैर्भूस्पर्शादिभिश्चिह्नैः संवादं स एवायं नल इति अनुव्यवसायरूपं आप। पूर्वं मम नलोऽयमिति प्रत्ययो युक्त एव जात इति। एतैश्चिह्नैर्निश्चितवतीत्यर्थः। अनन्तरञ्च सा भैमी देवत्वनरत्वज्ञापकानां लक्षणानां निमेषत्वभूस्पर्शादिचिह्नानां व्यक्तिभिः प्रकटनैरेवासादितं प्राप्तं देवप्रसादमप्यबोधि। एता-

नले निधातुं वरणस्रजन्तां
स्मरः स्म रामां त्वरयत्यथैनां।
अपत्रपा तां निषिषेध तेन
द्वयानुरोधं तुलितं दधौ सा॥ २६॥
स्रजा समालिङ्गयितुं प्रियं सा
रसादधत्तैव वङ्कप्रयत्नम्।

वत्पर्य्यन्तं भूस्पर्शादिचिह्नानि न दृष्टानि इदानीन्तु दृश्यन्ते तस्मान्मम पूजया देवाः प्रसन्ना इत्यवजानादित्यर्थः॥ २५॥

नले इति। अथ स्मरः तां वरणस्रजं वरणमधूकमालां नले निधातुं निक्षेप्तुं एनां रामां भैमीं त्वरयति स्म शीघ्रं प्रेरयामास। अपत्रपा अन्यतो लज्जा च तां भैमीं निषिषेध निवारयामास। सर्व्वस्मिन् जने पश्यति सति कथमहमेनं वृणे इति लज्जावशात्तस्या बुद्धिरुदभूदित्यर्थः। तेन कारणेन सा भैमी द्वयानुरोधं स्मरलज्जयोराज्ञा प्रवृत्तिनिवृत्तिसन्देहं तुलितं समानमेव दधौ। भावसन्धिवशादुत्कण्ठापत्रपाभ्यां मालानिक्षेपानिक्षेपदोलायिताभूदित्यर्थः। अन्योऽपि तुल्याभ्यां द्वाभ्यां विरुद्धकार्य्यद्वयार्थं प्रेषितो द्वयोरनुरोधादौदासीन्यमेवावलम्बते। तामिति पुनरुपादानं वाक्यान्तरत्वात् समर्थनीयं। निषिषेध। स्यादिष्वभ्यासेनेति (पा० ८।३।६) षत्वं॥ २६॥

स्रजेति। सा भैमी रसात् प्रीत्या स्रजा मधूकमालया प्रियं नलं समालिङ्गयितुं वङ्कप्रयत्नं भूयांसमुद्योगं अधत्तैव रसा-

स्तम्भत्रपाभ्यामभवत्तदीये
स्पन्दस्तु मन्दोऽपि न पाणिपद्मे ॥ २७॥
तस्या हृदि व्रीडमनोभवाभ्यां
दोलाविलासं समवाप्यमाने।
श्रितं धृतैणाङ्ककुलातपत्रे
शृङ्गारमालिङ्गदधीश्वरश्रीः ॥ २८॥

रेव। तु पुनस्तदीये पाणिपद्मे स्तम्भत्रपाभ्यां हेतुभ्यां मन्दो-ऽप्यल्पोऽपि स्पन्दश्चलनं नाभवत् ॥ २७॥

तस्या इति। अधीश्वरो समर्था भूयसी अधीश्वरस्य कस्य-चिद्राज्ञो वा श्रीर्नलश्रीस्तस्या भैम्या हृदि स्थितं वर्त्तमानं शृङ्गारं शृङ्गाररसं आलिङ्गत्। किम्भूते हृदि। व्रीडमनोभवाभ्यां दोलाविलासं आन्दोलजनितां क्रीडां समवाप्यमाने प्राप्यमाणे। कोटिद्वयसम्बन्धात् प्रवृत्तिनिवृत्तिसन्देहं प्राप्ते इत्यर्थः। तथा एणाङ्कश्चन्द्रस्तस्य कुलं कुलोत्पन्नो नल इत्यर्थः। स एवातपत्रं धृतं एणांककुलातपत्रं येन तस्मिन्। शृङ्गाररस एव सम्राट् भैमीहृदयमेव सिंहासनं नल एव छत्रं लज्जाकामौ दोलाया उभयपार्श्वेन आन्दोलनार्थं स्थितौ चामरधारिणौ वा। तस्या भावसन्धिसम्वलितः शृङ्गारो राजवदुज्जृम्भत इति भावः। दोला दोलनेव भोगस्त्रियः प्रियमालिङ्गन्ति॥ अधीश्वरस्य नलस्य श्रीरिति वा। अथ पत्ते व्रीडाकामाभ्यां दोलायमानां भैमीं दृष्ट्वा यानो नलः पूर्व्वं विप्रलम्भशृङ्गारं प्राप्तः ततः सापि

करः स्रजो सज्जतरस्तदीयः
प्रियोन्मुखः सन् विरराम भूयः।
प्रियाननस्यार्द्धपथं ययौ च
प्रत्याययौ चातिचलः कटाक्षः॥ २९॥
तस्याः प्रियं चित्तमुपेतुमेव
प्रभूबभूवाक्षि न तु प्रयातुम्।
सत्यः क्षतः स्पष्टमभूत्तदानीं
तयाक्षिलज्जेति जनप्रवादः॥ ३०॥

तं तादृशं दृष्ट्वा तदीयशोभाङ्गीकारात् स्वयमपि तादृशी बभूवेति भावः। आन्दोलिकाछत्रचामरैरयं प्रभुरिति ज्ञायत इत्यर्थः। श्रितमिति पाठे छदीति विषयसप्तमी॥ २८॥

कर इति। स्रजा सज्जतरो नितरां सज्जः कण्ठे निवेष्टुमुद्यतः कृतमालस्तदीयः करः प्रियोन्मुखः नलसम्मुखं गन्तुं मौऽधोगः सन् भूयः पुनर्लज्जावशाद् विरराम निवृत्तः। तदीयोऽतिचलः कटाक्षश्च प्रियाननस्यार्द्धपथं ययौ च प्रत्याययौ च। दिदृक्षारसादर्द्धमार्गं गतोऽपि लज्जावशान्मध्ये मार्गे सम-कटाक्षमभ्यास्य पुनः प्रत्यावृत्त इति भावः। अन्योऽप्यतिचलो गतागते करोति॥ २९॥

तस्या इति। तस्याश्चित्तं प्रियं उपेतुमेव प्राप्तुमेव अक्षि तु पुनः सम्यं प्रयातुं प्राप्तुं न प्रभूबभूव समर्थं नाभूत्। स्पष्टमुक्तिर्हि। चाक्षिणि मैव लज्जेति जनप्रवादो लोकाभाणकः तथा तदानीं

कथं कथञ्चिन्निषधेश्वरस्य
न्यस्यास्यपद्मं दरवीक्षितश्रि ।
वाग्देवताया वदनेन्दुबिम्बं
त्रपावती साऽक्षत सामिदृष्टं ॥ ३१ ॥
न जानतीवेदमवोचदेनाम्
आकूतमस्यास्तदवेत्य देवी ।

नलवरणसमये सत्यः कृतोऽभूत् । अन्यथा लज्जायाश्चित्तधर्मत्वे चित्तस्य नलप्राप्तिरयुक्ता नेत्रस्य च नलप्राप्तिर्युक्तेत्यर्थः । प्रीत्या चित्तं नल एव वर्त्तते परं लज्जावशात् कटाक्षेण विलोकयितुं नाशकदिति भावः । अभूतभूता च्वौ चेति (पा० ७ । ४ । २६ ।) दीर्घः ॥ ३० ॥

कथमिति । सा भैमी त्रपावती निषधेश्वरस्यास्यपद्मं मुखकमलं कथं कथञ्चित्महता कष्टेन लज्जाविगमप्रयत्नेन दरवीक्षितश्रि ईषद्विलोकितशोभं कृत्वा वाग्देवताया वदनेन्दुबिम्बं लज्जया सामिदृष्टमर्द्धदृष्टमकृत । किञ्चिद्दृष्ट्वा पुनर्व्यावृत्तत्वाददृष्टप्रकाशशोभं चकारेत्यर्थः । त्रपावतीत्युभयत्र हेतुः । एतां मालां नलकण्ठे स्थापयेत्याशयेन देवीमुखमर्द्धवीक्षितं चकारेति भावः ॥ ३१ ॥

न जानतीति । देवी अस्या भैम्यास्तत्पूर्वश्लोकसूचितं आकूतमाशयं अवेत्य ज्ञात्वापि न जानतीव एनां भैमीं प्रतीदमवोचत् । इदं किं । हे भैमि त्रपोर्मिभृतिभीरया लज्जाकल्लोलरूपजवनि-

भावस्तपोर्मिप्रतिसीरया ते
वितीर्यते लक्षयितुं न मेऽपि ॥ ३२ ॥
देव्याः श्रुतौ नेति नलार्द्धनाम्नि
गृहीत एव चपया निपीता ।
अथाङ्गुलीरङ्गुलिभिः स्पृशन्ती
दूरं शिरः सा नमयाञ्चकार ॥ ३३ ॥

कया ते तव भाव आशयः मेऽपि ममापि लक्षयितुं सरस्वत्या अथ च विश्वास्य सखीभूताया अपि ज्ञातुं न वितीर्यते। त्वं लज्जावशादतिगूढं यत् सूचयसि तन्मयापि न ज्ञायते। ततः किञ्चिल्लज्जां त्यक्त्वा स्पष्टं कथयेति परिहासबुद्ध्या तामेव स्वाशयं बोधयितुमबोधयदित्यर्थः। अन्यदपि जवनिकाच्छादितं न ज्ञायते। प्रदीयते लक्षयितुं न मेऽपीति पाठे मे मह्यं। प्रतिसीरा जवनिकेत्यमरः ॥ ३२ ॥

देव्या इति। देव्याः श्रुतौ कर्णे नेति नलस्यार्द्धे नाम्नि गृहीत एव भैम्या उच्चारित एव चपया निपीता यतः सा भैमी लेति द्वितीयमक्षरं उच्चारयितुमशक्ता ततो ऽनन्तरं सख्या अङ्गुलीः, देव्या वा अङ्गुलीः, स्वीयाङ्गुलीभिः स्पृशन्ती गृह्णन्ती निबिडं पीडयन्ती शिरः दूरमत्यर्थं नमयाञ्चकार। अभिलापप्रतिबन्धे दुःखितत्वाङ्गुलिमर्दनं स्वभावोक्तिः ॥ ३३ ॥

करे विधृत्येश्वरया गिरां सा
पान्था पथीन्द्रस्य कृता विहस्य।
वामेति नामैव बभाज सार्थं
पुरन्ध्रिसाधारणसन्विभागम्॥ ३४॥
विहस्य हस्तेन विकृष्य देवी
नेतुं प्रयाताऽभि महेन्द्रमेनाम्।
भ्रमादियं दत्तमिवाहिदेहे
ततश्चमत्कृत्य करं चकर्ष॥ ३५॥

कर इति। गिरामीश्वरया वाग्देव्या विहस्य प्रज्ञाननाट-नाट्यास्यं कृत्वा सा करे विधृत्य इन्द्रस्य पथि पान्था पथिका कृता। इन्द्रं प्रति वरणार्थं नीता सा भैमी पुरन्ध्रीणामन्यस्त्रीणां साधारणः समानः सन्विभागः अंशो यस्य पुरन्ध्रिषु वा एवम्भूतं सर्व्वस्त्रीवाचकं वामेति नाम वक्रार्थत्वात् सार्थं नामैव बभाज भेजे। इन्द्रं प्रति देव्या नीयमाना सा वक्राभूदिति भावः। सार्थमेव नाम इति वा। पान्थेति पूर्व्ववत्। पाथेति पाठे, पथे गताविति धातोर्ज्वलादित्वाणि, पथि गन्त्री कृतेत्यर्थः। पुरन्ध्रीति पूर्व्ववत्॥३४॥

तमेवार्थमुक्तिविशेषेण पुनराह। विहस्येति। वाम्यानन्तरं देवी विहस्य किञ्चिद्धसित्वा एनां भैमीं स्वहस्तेन विकृष्य महेन्द्रमभिलक्षीकृत्य नेतुं प्रयाता प्रस्थिता इन्द्रं प्रापयितुं निर्गता। तत इन्द्राद्दिगमनोद्योगानन्तरं इयं भैमी चमत्कृत्य किमियमिन्द्रवरणे मां प्रवर्त्तयतीति बुद्ध्या भीता करं स्वहस्तं चकर्ष।

भैमीं निरीक्ष्याभिमुखीं मघोनः
स्वाराज्यलक्ष्मीरधृताभ्यसूयाम्।
दृष्ट्वा ततस्तत्परिहारिणीं तां
व्रीडां विडौजःप्रवणाभ्यपादि ॥ २६ ॥
त्वत्तः श्रुतं नेति नले मयातः
परं वदस्वेत्युदिताथ देव्या।

आचकर्ष किंभूतमिव करं। भ्रमाद्रज्जुभ्रान्तेः अच्छिद्रे सर्पशरीरे दत्तमिव स्थापितमिवेत्युत्प्रेक्षा। सर्पदेहे भ्रमाद्दत्तं हस्तं यथा कश्चित् कर्षति तथेत्युपमा वा। ततो देवीकरादिति वा॥२५॥

भैमीमिति। स्वाराज्यलक्ष्मीः विडौजःप्रवणा इन्द्रेऽत्यन्तमनुरक्ता स्वर्गाधिपत्यश्रीः भैमीं मघोन इन्द्रस्याभिमुखीं निरीक्ष्य सपत्नीबुद्ध्या भैम्यामभ्यसूयामसहनत्वं अधृत दधार। [illegible] अनन्तरं तां भैमीं तत्परिहारिणीं इन्द्रत्यागिनीं दृष्ट्वा इन्द्रेऽनुरक्ता सती व्रीडां लज्जामभ्यपादि प्राप। इयमिन्द्रं नाभिलषति वृथैव मयेर्ष्या कृतेति सलज्जेत्यर्थः। इयं भैमी स्त्रीरत्नभूता सती निर्गुणतयैनं परिहरति तस्मादहं प्रिया जातेति लज्जितेत्यर्थः। अभ्यपादि। कर्त्तरि चिण्॥ २६ ॥

त्वत्त इति। अथ देव्या इति उदिता परिहासवशादुक्ता भैमी इषा इवैव भाषितनैषधाऽभूत्। इति किं। हे भैमि मया त्वत्तः नलविषये नेति श्रुतं निषेधार्थो नकारः श्रुतः। अतः कारणात्परं नलादन्यमभीष्टं वदस्व कथय। अथ च नलविषये

ह्रीमन्मथद्वैरथरङ्गभूमि-
र्भैमी द्रुतं भाषितनैषधाऽभूत् ॥ ३७ ॥
इतस्तु भैमीं द्विविधस्तु पाणौ
पाणिं प्रणीयाप्सरसां रसात् सा ।
आलिङ्ग्य नीत्वाऽकृत पान्थदुर्गां
भूपालदिक्पालकुलाध्वमध्यम् ॥ ३८ ॥

नल इति पदे नेति नलनाम्नोऽर्द्धं श्रुतं अतो नकारात् परमनन्तरमक्षरं कथयेति । किम्भूता । ह्रीमन्मथयोर्लज्जाकामयोर्द्वैरथस्य द्वाभ्यां प्रवृत्तस्य युद्धस्य रङ्गभूमिर्नृत्यस्थानं सबललज्जाकामवशीकृता । अस्मिन्नले मालां मया क्षेपयेति दृष्ट्वैव नलं निर्दिष्टवती न लनं । न च साचाक्षकारमुच्चारयति स्मेत्यर्थः । उदिताऽथ पश्चादिति वा । वदस्व । भाषणेऽतिभाषणे साल्लन उत्साहे वा नङ् । द्वैरथं । द्विरथसम्बन्धि इति सम्बन्धेऽण् ॥ ३७ ॥

इतस्त्विति । सा देवी भैमीं आलिङ्ग्यांकपालिकया धृत्वा भूपालस्य नलस्य दिक्पालकुलस्य च इन्द्रादिचतुष्टयस्य पुरःसरोऽध्वा मार्गस्तन्मध्यं नीत्वा प्रापय्य पान्थदुर्गां पथिकमिन्द्रादिपूजितशिलामयकल्पितमार्गदेवतां अकृत चकार इन्द्रादिपञ्चकमार्गमध्ये नीत्वा सुमोचेत्यर्थः । लज्जाभरनिश्चलत्वादतिसौन्दर्याच्च देवतात्वं । केषु सत्सु । रसादुभयाश्रयपरिज्ञानाद्भैम्याश्च देव्याश्रयापरिज्ञानात् प्रीतेर्वा अप्सरसां उर्वशीप्रभृतीनां पाणौ पाणिं प्रणीय निधाय तालिकादानपूर्वं द्विविधस्तु इन्द्रा-

आदेशितामप्यवलोक्य मन्दं
मन्दं नलस्यैव दिशां चलन्तीम्।
भूयः सुरानर्द्धपथाद्यथासौ
तानेव तां नेतुमना नुनोद ॥ २९ ॥
मुखाब्जमावर्त्तनलोलनालं
कृत्वालिकुञ्जं स्खलदम्बलक्ष्म्।

दिक्षु चलत् चलत्। उत्सवादौ मस्तके दुर्गामारोप्य राजवीथिषु भ्राम्यते तथैनामपि चलद्दुर्गां चकारेत्यर्थ इति वा। दिविषत्। सत्सूद्विषद्रुहेत्यादिना (पा० ३।२।६१) क्विप्। हृद्युभ्यां चेति (पा० ६।३।९। वा० १) सप्तम्या अलुक्। हलदन्तादिति (पा० ६।३।९।) सुषामादित्वात् (पा० ८।३।९८) इति वा षत्वं। पान्थानां दुर्गा। पान्था चासौ दुर्गा चेति वा ॥ २८ ॥

आदेशितामिति। अथ असौ देवी भूयः पुनरपि अर्द्धपथात् सकाशान्नलं विहाय तानेव सुरानिन्द्रादीन्नेतुमनाः प्रापयितुकामा सती तां भैमीं नुनोद इतश्चलेति प्रेरयति स्मेत्यर्थः। किं कृत्वा। इन्द्रादिसमुखमागच्छेत्यादेशितामाज्ञप्तामपि तथा मन्दं मन्दं नलस्यैव दिशां नलसम्मुखमेव चलन्तीं गच्छन्तीं विलोक्य। आदेशः सञ्जातोऽस्याः। अदेशितामिति पाठे नलं प्रति गच्छेत्यप्रेरितामपीत्यर्थः ॥ २९ ॥

मुखेति। भीमोद्भवा देव्यास्तामरूपार्णौ नुनोदानुपत्। केव। विवोढुः परिणेतुः दूती प्रथमसुरतारम्भभीरुं नव-

भीमोद्भवा तां नुनुदेऽङ्कपाली-
र्देव्या नवोढेव दृढां विवोढुः ॥ ४० ॥
देवी कथञ्चित् खलु तामदेव-
ध्रीचीभवन्तीं स्मितसिक्तसृक्का।

पाली नवोढा नववधूरिव। अङ्कपालीमोचनमात्रेण साम्यं वि-वक्षितं न तु लिङ्गं। किं कृत्वा। परिहासवशान्नलसम्मुखगमन-निषेधिकानां आलीनां सखीनां निवारणयत्नकः झंझं इति रवः शब्दस्तद्रूपैर्लक्ष्मीस्फिक्कैर्लक्ष्यं ज्ञेयं। तेषां वा लक्ष्यं विषयभूतं, यद्वा यान्नलवरणनिषेधिकास्तास्विपु कोपवशाद्भीमया एव झंझं-कारास्तद्रूपैर्यत्नैर्लक्ष्यं, अथवाऽलीनां भ्रमराणामिव यं झंझं-रवचिह्नैर्लक्ष्यं निपतद्भृङ्गभ्रमरं आवर्त्तने परावर्त्तने लोलं चञ्चलं कण्ठदण्ड एव नालं यस्य एवं मुखाब्जं कृत्वा। नवो-ढापि आलिङ्गनादि कुर्वित्युपदिशन्तीनां सखीनां तासु वा झंझंरवचिह्नलक्ष्यं मुखाब्जमावर्त्तयति। अब्जमपि लोलनालं भ्रमरझंझंरवलक्ष्यञ्च भवति। रवलचेति पाठे लचमङ्गा इत्यर्थः ॥ ४० ॥

देवीति। देवी तां भैमीमित्याह स्म। किंभूतां। कथञ्चिन्म-हताङ्कपालीमोचनादिप्रकारेण कष्टेन खलु निश्चितं अदेवध्री-चीभवन्तीं न देवानञ्चति देवान् प्रत्यगच्छन्त्येवंविधा भवन्ती तां। किम्भूता। स्मितेन ईषद्धासेन सिक्तसृक्का सिक्तौष्ठप्रान्ता स्वा-भिप्रायापरिज्ञानात् किञ्चित्स्मितवशा। इति किं। हे शशा-

आह स्म मां प्रत्यपि ते स्पृशं का
शङ्का शशाङ्कादधिकास्यबिम्बे ॥ ४१ ॥
एषामकृत्वा चरणप्रणाम-
मेषामनुज्ञामनवाप्य सम्यक्।

ङ्कात् अधिकं सुन्दरमाह्लादकं आस्यबिम्बं यस्याः एवम्भूते, भैमी-सखीप्रायां मामपि प्रति, इयं प्रतार्य्य इन्द्रादिवरणार्थं मां नयतीति। तेन च का पुनः शङ्का अपि त्वेवं शङ्का न कार्य्या मा भैषीरिति। देवानञ्चति देवद्रीची। विष्वग्देवयोरिति (पा० ६।३।९२) टेरद्र्यादेशे, उगितात् (पा० ४।१।६) ङीपि, अच. (पा० ६।४।१३८) इत्यकारलोपे, चाविति (पा० ६।३।१३८) पूर्व्वस्याणो दीर्घः। पश्चान्नञ्समासः। अदेवद्रीचीभवन्तीमिति पाठः सभ्यः। अदेवद्रीचीं देवद्रीचीं भवन्तीं ततो नञ्समासः, च्विप्रत्ययः। शशाङ्कात्। यस्मादधिकमिति (पा० २।३।९) ज्ञापकत्वात् पञ्चमी ॥ ४१ ॥

चेन्न प्रतारयसि तर्हि पुनः इन्द्रादिसम्मुखं मां किमिति नयसीत्याशङ्क्याहाह ॥ एषामिति ॥ एषामिन्द्रादीनां चरणयोः प्रणाममकृत्वा तथा एषां सम्यग्यथा भवति तथाऽनुज्ञां मन्वरणानुमतिं अप्राप्य निजचिह्नप्रकटनमात्रानुमितप्रसादेन मत्प्रायामपि मातापितृरःकम्यादिसचिवामनुज्ञामलब्ध्वा एवं पर्वतैरे स्वावज्ञामादिन्द्रादिभिः सह विरोधे सति ध्येयं ना त्वद्भेत्तिं नर्म्म वदितुं दैवा चेष्टाऽभिप्रायो वा मा कथमिवेति

सुपर्ववैरे नव वैरसेनिं
वरीतुमीहा कथमौचितीयम्॥ ४२॥
इतीरिते विश्वसितां पुनस्ता-
मादाय पाणौ दिविषत्सु देवी।
कृत्वा प्रणम्रां वदति स्म सा तान्*
भक्तेयमर्हत्यधुनानुकम्पाम्॥ ४३॥
युष्मान् वृणीते न वहून् सतीयं
शापावमानाच्च भवत्सु नैकम्।

अपि तु न कथञ्चित्। स्वावज्ञानादिरुष्टाः सन्तः शापं दास्यन्तीति तान् प्रति नीयमे न तु वरणार्थमिति भावः। इयमौचितीति वा। कतमौचितीत्यपि पाठः॥ ४२॥

इतीति। सा देवी इति पूर्वोक्तप्रकारेण ईरिते सति विश्वसितां तां भैमीं पाणौ पुनरादाय धृत्वा दिविषत्सु देवेषु विषये नमस्कारवशात्प्रकर्षेण नम्रां कृत्वा तान् देवानिति वदति स्म। इति किं। भवद्भक्ता इयं भैमी अधुना नलवरणानुमतिरूपामनुकम्पामर्हतीति॥ ४३॥

एतद्वरणार्थमागतानामस्माकं नलवरणानुमतिर्दीयतामिति कथमुच्यते इत्याशङ्कां परिहरति॥ युष्मानिति॥ हे लोकपालाः इयं भैमी यस्मात्सती पतिव्रता एकभर्तृकैव तस्मा-

* आह स्म नम्रां प्रविधाय सा ताम् इति सं० पुस्तक पाठः।

तदः समेतं नृपमंशमेतं
वरीतुमन्विष्यति लोकपालाः ॥ ४४ ॥
भैम्याः स्रजः सञ्जनया पथि प्राक्
स्वयम्वरं सञ्जनयांबभूव।

इच्छन् युष्मान् न वृणीते पतित्वेन नाङ्गीकरोति। भवत्सु मध्ये शेषावमानाच्च एकं न वृणीते। तत्तस्मात् सर्व्वैकवरणपक्षयोर्दोषदर्शनाद्धेतोरेकत्र नलस्वरूपे समेतान् मिलितानंशानंशभूतान्वो युष्मानेवैनं नृपं, अष्टानां लोकपालानां वपुर्धारयते नृप इति वचनात् युष्मद्रूपमेवैनं नलं नृपं वरीतुं अन्विष्यति विचारयति। नले वृते पूर्व्वोक्तोभयदोषाभावात् नलमेव वरीतुं वाञ्छतीत्यर्थः। वो युष्माकं समेतानंशानेनं नृपमिति वा ॥ ४४ ॥

परदारत्वाद्दमीयं भवद्भिर्नाभिलषणीयेत्याह॥ भैम्या इति। हे लोकपालाः, वेधाः मात्स्येवनानन्तरं स्वमन्दिरागमनवेलायां पथि स्रजो मालायाः सञ्जनया सङ्गेन षष्ठे सर्गे प्रशमनादधिगतेत्यादिकथितप्रकारेण भ्रान्तिदृष्टनलेषु मध्येऽहम्यगतस्य मत्यनलस्य कण्ठे निक्षेपणया हेतुना भैम्याः स्वयम्वरं प्राक् पूर्व्वमेव सञ्जनयाम्बभूवाहत। तथा तत्रैव सर्गे तथ्यं मिथ्याविद्याद्युक्तप्रकारेणास्य नलस्यालिङ्गनयालिङ्गनेन भैम्याः सम्भोगं बाह्यरतमपि व्यधत्त। अस्य सम्भोगमिति वा। स्वस्वयम्वरस्य संयोगं फलं आलिङ्गनेन चकारेति वा। तस्मात्

सम्भोगमालिङ्गनयास्य वेधाः
शेषन्तु कं हन्तुमियद्यतध्वम् ॥ ४५ ॥
वर्णाश्रमाचारपथात् प्रजाभिः
स्वाभिः सदैवास्खलते नलाय ।
प्रसेदुषो वेदशरुत्तभङ्ग्या
दित्सैव कीर्त्तेर्भुवमानयद्वः ॥ ४६ ॥

पुनः शेषं अवशिष्टमंशं हन्तुं विनाशयितुं इयत् नलाकारधारणादिप्रकारेण यतध्वं प्रयत्नं कुरुत, अपि तु न कोऽप्यवशिष्टोंऽशः । तस्माद्वृथा प्रयासो न कार्यः किन्त्वाज्ञैव दातव्येत्यर्थः । वाग्भरतस्यैवाभ्यर्हितत्वात् तथाप्यालिङ्गनस्याभ्यर्हिततरत्वात्तस्य च संवृत्तत्वात् कं पुनः शेषं सम्भोगं हन्तुं इयद्यतध्वं इति वा । किमिति पाठे शेषा तु लोकस्थितिरिति कामशास्त्रोक्तन्यायेन शेषं लोकस्थितिरूपं सम्भोगं पुनर्हन्तुं इयत् किं यतध्वं इति व्याख्येयं । सङ्गनालिङ्गनेत्यत्राप्यन्तत्वाद्युच् ॥ ४५ ॥

इदानीं युक्त्यन्तरेण देवान् सान्त्वयति ॥ वर्णेति ॥ वा पूर्वापरितोषे । पूर्वमसम्भावितमेवोक्तं मया । किन्तु नलाय कीर्त्तेर्दित्सैव वो युष्मान् भुवमानयत् भैमीस्वयम्वरदर्शनव्याजेन नलाय कीर्त्तिं दातुमेवात्रागमनं युष्माकं न तु भैमीवरणार्थमित्यर्थः । किंभूताय । यतः स्वाभिः प्रजाभिः सह वर्णानां ब्राह्मणादीनां आश्रमाणां ब्रह्मचर्यादीनां सत्युक्तादाचारपथात् सकाशादस्खलते अच्युताय । किंभूतान् वः । ईदृग्वृत्तभङ्ग्या प्रसेदुषः

इति श्रुते ऽस्या वचसैव चास्यात्
कृत्वा सलास्याधरमास्यबिम्बम् ।
भ्रूविभ्रमाकूलकृताभ्यनुज्ञे-
ष्वेतेषु तां साथ नलाय निन्ये ॥ ४७ ॥
मन्दाचनिस्पन्दतनोर्मनोभू-
दुःप्रेरमप्यानयति स्म तस्याः ।
मधूकमालामधुरं करं सा
कण्ठोपकण्ठं वसुधासुधांशोः ॥ ४८ ॥

स्वाचाराचरणादेव निष्कपटदूत्यकरणाद्वा प्रसन्नात् । भैम्या इन्द्रादीन् विहाय सौन्दर्यादिना गुणेन नल एव वृत इति कीर्त्तिः ॥ ४६ ॥

इतीति । इति पूर्व्वोक्ते देवीवचने श्रुते सति अस्या देव्या वचसैव जाताद्धास्यात् स्मिताद्धेतो आस्यबिम्बं मुखचन्द्रं सलास्याधरं चञ्चलोष्ठं कृत्वा एतेषु देवेषु भ्रूविभ्रमरूपेणाकूतेनाशयज्ञापकेनेङ्गितेन कृता कृताभ्यनुज्ञा नलवरणानुमतिर्यैस्तेषु सत्सु। अथानन्तरं सा देवी तां नलाय नलं प्रापयितुं नलार्थं वा निन्ये पुनर्नलसम्मुखीचकारेत्यर्थः ॥ ४७ ॥

मन्दाचेति । सा देवी मधूकमालया मधुरं सुन्दरं तस्याः करं वसुधासुधांशोर्भूचन्द्रस्य नलस्य कण्ठोपकण्ठं कण्ठसमीपमानयति स्म प्रापयति स्म । किम्भूतायाः। मन्दाचेन लज्जया निस्पन्दा निश्चला तनुर्यस्याः सत्यास्तस्या इत्यर्थः । किम्भूतं करं।

अथाभिलिख्येव समर्प्यमाणां
राजिं निजस्वीकरणाक्षराणाम्।
दूर्वाङ्कुराढ्यां नलकण्ठनाले
वधूर्मधूकस्रजमुत्ससर्ज॥ ४९॥
तां दूर्वया श्यामलयातिवेलं
शृङ्गारभासन्निभया सशोभाम्।

मनोभुवा नलविषयकामेन दुःप्रेरमपि कामेनापि प्रेरयितुमशक्यं। निष्पन्देति पाठे पूर्ववत्पलं। दुःप्रेरमपि प्रेरयति स्मेति विरोधाभासः॥ ४८॥

अथेति। अथ करस्य नलकण्ठसमीपनयनानन्तरं वधूर्भैमी दूर्वाङ्कुराढ्यां मधूकस्रजं नलकण्ठनाले उत्ससर्ज निचिक्षेप। उत्प्रेक्षते। अभिलिख्य समर्प्यमाणां दीयमानां निजेनात्मना नलस्य स्वीकरणं तत्सम्बन्धिनामक्षराणां मया त्वं निश्चितं वृतोऽसीति एवंरूपाणां वर्णानां राजिमिव। निश्चयज्ञापनार्थं हि पत्रं दीयते तदिवेत्यर्थः। मालासञ्जनानन्तरं वाङ्गीकरणे निश्चयो जातः। दूर्वाङ्कुराणां श्यामत्वादक्षरसाम्यं मधूकानि लिखिताक्षरसन्धिस्थानीयानि। कण्ठस्य नालत्वामुखस्य कमलत्वं॥ ४९॥

तामिति। भूमन्नलः तां मालां कण्ठेन विभरांबभूव। किम्भूतां। श्यामलया अत एव शृङ्गाररसस्य भया कान्त्या सन्निभया तुल्यया दूर्वयाऽतिवेलमतितरां सशोभनदीप्तिं। तथा

मालां प्रसूनायुधपाशभासं
कण्ठेन भूस्तद्विभरांबभूव ॥ ५० ॥
दूर्वाग्रजाग्रत्पुलकावलिं तां
नलाङ्गसङ्गाङ्कुरमुल्लसन्तीम्।
मानेन मन्ये नमिताननासा
साक्षयमालोकत पुष्पमालाम् ॥ ५१ ॥

प्रसूनायुधस्य कामस्य पाशभासं पाशसदृशीं। मालानिक्षेपानन्तरमेव कामपरवशत्वान्मालायाः कामपाशत्वं। श्यामो भवति शृङ्गार इति भरतवचनाच्छृङ्गारस्य श्यामत्वं। भूस्तत्पत्नीत्यपि। विरांबभूव। भीह्रीति (पा० ३।१।३९) श्लमि, श्नद्वेति (पा० ३।१।४०) भुवोऽनुप्रयोगः ॥ ५० ॥

दूर्वेति ॥ मानेनेर्ष्याजनितकोपेन नमितानना सा भैमी साक्षयं गुणवत्यामपि तस्यां दोषारोपसहितं यथा तथा सेर्ष्यमिति यावत् पुष्पमालामालोकत इत्यहं मन्ये शङ्के। किंभूतां। दूर्वाग्राण्येव दूर्वाङ्कुरा इव च जाग्रती स्फुरन्ती पुलकावलिर्यस्याः तां। तथा नलाङ्गसङ्गाङ्कुरमुल्लसन्तीं शोभमानां सद्दर्पाञ्च। लज्जानम्रमुखी सत्येव मालासहितं नलवक्षः कटाक्षैर्विलोकितवती। अन्यापि नायिका एवंविधां सपत्नीं मानेन नम्रमुखी सती सेर्ष्यमालोकते। स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये इत्यमरः ॥ ५१ ॥

काऽपि प्रमोदास्फुटनिर्जिहान-
वर्णैव या मङ्गलगीतिरासाम्।
सैवाननेभ्यः पुरसुन्दरीणा-
मुच्चैरुलूलुध्वनिरुच्चचार॥ ५२॥
सा निर्मले तस्य मधूकमाला
हृदि स्थिता च प्रतिबिम्बिता च।
कियत्यमग्ना कियती च मग्ना
पुष्पेषुबाणालिरिव व्यलोकि॥ ५३॥

कापीति। प्रमोदाद्धर्षवशात्कण्ठस्य गद्गदत्वादस्फुटा अप्रकटा निर्जिहाना निर्गच्छन्तो वर्णा अचराणि यस्या एवंविधैव या पुरसुन्दरीणां विलोकयितुमागतानां आननेभ्यः कापि लोकोत्तरा मङ्गलरूपा धवलादिगीतिरासीत् सैवोच्चैरुलूलुध्वनिरुच्चचार उदलसत्। विवाहाद्युत्सवे स्त्रीणां धवलादिमङ्गलगीतिविशेषा गौडदेशे उलुलुरित्युच्यन्ते। सोऽप्यव्यक्तव्यक्तवर्ण उच्चार्यते। स्वदेशरीतिः कविनोक्ता॥ ५२॥

सेति। तस्य नलस्य निर्मले हृदि स्थिता चान्तःप्रतिबिम्बिता च सा मधूकमाला कियती किञ्चिदमग्ना अबुडिता कियती च मग्ना बुडिता, पुष्पेषुः कामस्तस्य बाणालिः शरपङ्क्तिरिव व्यलोकि वीक्षिता लोकैरिति शेषः। मधूकप्रतिबिम्बानां किञ्चिदन्तःप्रविष्टरूपत्वाद्बाणांशसाम्यमुपरिस्थितानां चाग्रबाणांशसाम्यं। मालास्पर्शाद्नलोऽपि कामपरवशो जात इत्यर्थः॥५३॥

रोमाणि सर्व्वाण्यपि बालभावाद्
वरश्रियं वीक्षितुमुत्सुकानि।
तस्यास्तदा कण्टकिताङ्गयष्टे-
रुद्ग्रीविकादानमिवान्वभूवन्॥ ५४॥

रोमाङ्कुरैर्दन्तुरिताखिलाङ्गी
रम्भाधरा सा सुतरां विरेजे।
शरव्यदण्डैः श्रितमण्डनश्रीः
स्मारी शरोपासनवेदिकेव॥ ५५॥

रोमाणीति। तदा तस्मिन् समये कण्टकिता सञ्जातरोमाञ्चाऽङ्गयष्टिः शरीरं यस्यास्तस्या भैम्या वयसोरभेदात् बालभावात् कोमलत्वादस्य च शिशुत्वादस्य नलस्य श्रियं शोभां वीक्षितुं उत्सुकानीव सर्व्वाण्यपि रोमाणि उद्ग्रीवैर्ग्रीवा यस्यां क्रियायां सा उद्ग्रीविका क्रिया तस्या आदानमङ्गीकरणं बभूवन्निव। सात्त्विको रोमाञ्चस्तम्भश्च तस्या जात इत्यर्थः। बालाश्च वरश्रियं वीक्षितुं उत्कण्ठिताः खर्व्वत्वादुद्ग्रीवा भवन्ति। कण्टकस्तारकादिः उद्ग्रीविका बहुव्रीहौ कप्॥ ५४॥

रोमेति। रोमाङ्कुरैर्दन्तुरित उन्नतः नतोन्नतोऽखिलाङ्गी यस्याः सा रोमाञ्चयुक्ता, तथा रम्भाधरा बिम्बोष्ठी सा भैमी स्मारे कामसम्बन्धिनी शरोपासनवेदिकेव बाणाभ्यासशाला सुतरां विरेजे। किम्भूता वेदिका। शरव्यदण्डैः वेध्यभूतैर्दण्डैः श्रिता मण्डनश्रीः चमत्कारशोभा यया सा। रोमाङ्कुरा शर-

330 A

चेष्टा व्यनेशन्निखिलास्तदास्याः
स्मरेषुवातैरिव ता विधूताः ।
अभ्यर्थ्य नीताः कलिना मुहूर्त्तं
लाभाय तस्या बहु चेष्टितुं वा ॥ ५६ ॥

यदण्डम्यानीयाः । भैम्यपि श्रितमण्डनश्रीः । रोमाञ्चितां तां दृष्ट्वा सर्व्वेऽपि कामपरवशा जाता इति भावः । सराभ्यास उपासनमित्यमरः । दन्तुरङ्कृतं दन्तुरितं ॥ ५५ ॥

चेष्टा इति । तदा तस्मिन् कालेऽस्या निखिलास्ताश्चेष्टा व्यनेशन् विनष्टाः । उत्प्रेक्षते । स्मरेषुवातैः कामबाणपुङ्खवायुभिः विधूता इव भ्रमणवशात् भीता इव । वाशब्द उत्प्रेक्षान्तरसमुच्चये, इवार्थे वा । तस्या लाभाय भैम्याः प्राप्तये बहुभिः प्रकारैश्चेष्टितुं अभ्यर्थ्य भैमीमेव याचित्वा मुहूर्त्तं घटिकाद्वयं क्षणमात्रं वा कलिना युगेन नीता इव । भैम्याः कामुकेन कलिना स्वस्यास्वविलासितया भैमीमलभमानेन बहुविलाससम्पत्तये भैमीविलासा एव याचितकमण्डनार्थं नीता इवेति भावः । याचितमपि क्षणमात्रमेव नीयते । सात्त्विकस्तम्भेन कटाक्षादिव्यापाररहिता सा जातेति भावः । व्यनेशन्निस्यत्र पुषादित्वात् श्नेरङि (पा० ३ । १ । ५५ ।) नशिमन्योरलिड्येत्वं वक्तव्यं (पा० ६ । ४ । १२० । वा० २) इत्येत्वं । भाष्यकारस्य कैयटस्य पदमञ्जरीकारस्यापि मते छन्दस्येवैत्वं नशिमन्योर्न भाषायां । अनेशन्नस्यपव आभुरस्येति श्रुत्युदाहरणान्नगेरणेत्वं

c 2

330-4

तन्व्यस्तमाल्यस्पृशि यन्नलस्य
स्वेदं करे पञ्चशरश्चकार।
भविष्यदुद्वाहमहोत्सवस्य
हस्तोदकं तज्जनयाम्बभूव ॥ ५७ ॥
तूलेन तस्यास्तुलना मृदोस्तत्
कम्प्रास्तु सा मन्मथबाणवातैः।

छन्दस्येवेत्यवधीयते। वृत्तिकृता तु नभिमन्योर्भाषाविषयत्वम-ङ्गीकृत्य अभिपचोः छन्दोविषयत्वमङ्गीकृत्यैवं समर्थितं। नभि-मन्योरलिट्येत्वं छन्दस्यमिपचोरपीत्यादि (पा० ६।४।१२०) (१) कारिका च ॥ ५६ ॥

इदानीं नलस्य सात्त्विकत्वं वर्णयति ॥ तदिति ॥ पञ्चशरः कामः तया भैम्या निचिप्तं माल्यं मालां अनुरागवशात् पुनः पुनः स्पृशतीति स्पृक् तस्मिन्नलस्य करे सात्विकं स्वेदं घर्मजलं चकार। तद्भविष्यतः उद्वाहरूपस्य महोत्सवस्य सम्बन्धि नियतफल-लोत्पादने हेतुभूतं हस्तोदकं कन्यादानजलमेव जनयाम्बभूव। नलस्यापि सात्विकस्वेदः प्रवृत्त इति भावः। स्वेदजलं न भवति किन्तु हस्तोदकमिति ॥ ५७ ॥

तूलेनेति। मृदोरतिसुकुमार्यास्तस्या भैम्यास्तूलेन कार्पा-सेन मृदुनया यस्मात्तुलना साम्यमस्तीति शेषः। तस्मात्सा मन्मथबाणवातैः कामशरपुङ्खवायुभिः कम्प्रा सकम्पा अस्तु भवतु। कार्पासो हि लघुत्वाद्वातेन सकम्पो भवति। सा इ

चित्रीयितं तत्तु नलो यदुच्चै-
रभूत् स भूभृत्पृथुवेपथुस्तैः ॥ ५८ ॥
दृशोरपि न्यस्तमिवास्त राज्ञां
रागाद्दृगम्बुप्रतिबिम्बि माल्यम्।

तत्तुल्या। अतस्तस्याः कामबाणवातैः सकम्पत्वं युक्तमेवेत्यर्थः। तत्तु पुनश्चित्रीयितं आश्चर्यं कृतं यदुच्चैर्भूभृन्महाराजो धीरोऽपि स नलस्तैः कामबाणवातैः कृत्वा पृथुर्भूयान् वेपथुः कम्पो यस्यैवंविधोऽभूत्, तत्तैः कामबाणैश्चित्रं कृतमाश्चर्यं कृतमित्यर्थः। तूलस्य तूलतुल्यस्य वा वातैः कम्पो युक्तः। अत्युच्चस्य पर्वतस्य तु वातैः कम्पोऽतितरामाश्चर्यकारीत्यर्थः। उभावपि तुल्यानुरागौ सात्विककम्पयुक्तौ जाताविति भावः। चित्रीयितं। नमोवरिवश्चित्रङः क्यजिति (पा० ३।१।१९) क्यजन्तात् क्तः। यस्य चेति (पा० ७।४।३३) इत्यकारस्य॥५८॥

दृशोरिति॥ दृशोरपि अम्बुनि क्रोधजनितेऽश्रुणि प्रतिबिम्बोऽस्यास्तीति एवंशीलं माल्यं सा मधूकमाला रागानलविषयात् क्रोधात् अथच तज्जनितान्नेत्रलौहित्याद्धेतोः सभासदां राज्ञां दृशोरपि न्यस्तमिव, येन केनचिद्बलान्निक्षिप्तमिवास्त अतिष्ठत। नेत्रलौहित्यदर्शनादेवं ज्ञातमभूदिति यावत्। तथा कश्चित् क्रुद्धः सन् कस्यचिन्नेत्रे बलादङ्गुल्यादिमाल्यं निक्षिपति तदीयनेत्रस्य च लौहित्यं भवति अश्रु च निर्गच्छति। तथा क्रोधाद्दर्शनमात्रेण तन्माल्यमेव तेषां द्वयोरपि नेत्रयोर्निक्षिप्तं माल्यमिवा-

नृपस्य तत्पीनवतोरिवाक्ष्णोः
प्रालम्ब्यमालम्बत युक्तमन्तः ॥ ५८ ॥

भवत्। अत एव तयोर्लौहित्यमश्रु च जातमित्यर्थः। अर्थादयुक्तमेतत्। न केवलमन्तःकरणे शल्यं निचितं किन्तु दृशोरपीत्यपिशब्दार्थः। अथ च रागात् नलमीत्या भैम्या माल्यं यथा नलकण्ठे न्यस्तं तथा रागात् क्रोधात् नलस्पर्द्धिनां समुखं पश्यतां राज्ञां नेत्रयोरपि शल्यमिव चिप्तमभूत्। यतो दृगन्तप्रतिबिम्बि। नलमसहमानाः सर्व्वेऽपि राजानो मालादर्शनमात्रेण क्रोधेर्ष्यावशाः सङ्कुचितनेत्राः पराङ्मुखाः सन्तस्तां न पश्यन्ति स्मेति भावः। नृपस्य नलस्य अक्ष्णोरन्तः मध्यः कर्तृभूतः प्रालम्ब्यं प्रालम्बं लम्बत्वं हर्षविस्फारितत्वं आलम्बत अङ्गीचकार एतद्युक्तं। हर्षवशाद्धि नेत्रयोर्विस्फारत्वं भवति। प्रालम्बमिति पाठे प्रालम्बनं प्रालम्बः स एवार्थः। उत्प्रेचते। किम्भूतयोरक्ष्णोः तत्पीतवतोरिव माल्यं सादरं विलोकमानयोरिव। हर्षजनितं विस्फारत्वं विलोकनजन्यत्वेन उत्प्रेचितं। यदा नलनेत्रमध्यलक्ष्यमेव प्रालम्बमृजुलम्बिनं हारविशेषं अङ्गीचकार। सादरविलोकनाक्षेनयोरन्तः प्रतिबिम्बितायाः मालाया ऋजुलम्बित्वं नेत्रयोर्विस्फारत्वमन्तरेण न घटत इति तदेवाचिपति। नलस्तां मालां विलोकयन् हर्षवशाद्विस्फारितनेत्रो जात इति भावः। तस्मात्स्य रागादृशोर्न्यस्तमिवास्त। नेत्रमध्ये निचिप्तं यच्छल्यादि तदिवाभूत्। युक्तमेतत्। क्रोधाद्धि दृश्यमात्रं वस्तु

स्तम्भस्तथालम्भितमां नलेन
भैमीकरस्पर्शमुदः प्रसादः।
कन्दर्पलक्षीकरणार्पितस्य
स्तम्भस्य दम्भं स चिरं ययाऽऽयत् ॥ ६० ॥

शस्यमिव भवति नेत्रयोश्च लौहित्यमश्रु च भवतीति युक्तमित्यर्थः। तन्माल्यं पीतवतोरिव नलनेत्रं वस्तु शस्यमिव भवति। नलनेत्रयोरन्तः रागात् प्रीतेर्हृद्यत्वं प्राप एतदपि युक्तं। प्रीतेर्हि हर्षो भवति इत्यपि युक्तमेवेत्यर्थ इति वा। आलम्ब्यं गुणवचनादित्वात् (पा०५।१।१२४) ष्यञ्। आलम्बमिति पाठे आलम्बो हारभेदे स्यादिति विश्वः। राज्ञेति पाठे, आनन्दाश्रुणि प्रतिबिम्बितं माल्यं राज्ञा नलेनानुरागाद्दृशोरपि न्यस्तमिवास्त। न केवलं हृदि किन्तु नेत्रयोरपि धृतमित्यर्थः। अत एव तन्माल्यं पिवतोर्नलनेत्रयोर्मध्यः प्रलम्बलमालम्बतेति युक्तं। दीर्घाया मालाया अन्तर्द्धारणार्थं नेत्रमध्येऽपि दीर्घो जात इवेति भावः ॥ ५९ ॥

स्तम्भ इति ॥ मालानिक्षेपसमयजातभैमीकरस्पर्शेन जाता मुत् हर्षस्तस्य प्रसादरूपः स्तम्भः सात्त्विकभावः नलेन तथा ऽलम्भितमां अतितरां प्राप्तः। यथा स नलः कन्दर्पस्य लक्षीकरणाय लक्ष्यार्थे अर्पितस्यारोपितस्य स्तम्भस्य दम्भं व्याजं कामवेध्यस्तम्भसादृश्यं चिरमायत्। कामवेध्यस्तम्भवद्भैम्याः करस्पर्शजातसात्त्विकस्तम्भवशादतितरां निर्व्यापारो जात इति भावः। अनितरां कामपीडा सूचिता ॥ ६० ॥

उत्सृज्य साम्राज्यमिवाथ भिक्षां
तारुण्यमुल्लङ्घ्य जरामिवारात्।
तं चारुमाकारमुपेत्य यान्तं
निजां तनूमाददिरे दिगिन्द्राः॥ ६१॥
मायानलत्वं त्यजतो निलीनैः
पूर्वैरपूर्विकया मघोनः।

इदानीमिन्द्रादिभिः स्वं रूपं धृतमित्याह। उत्सृज्येति॥ अथ नलवरणानन्तरं ते इन्द्रादयो दिगिन्द्रा दिक्पाला यान्तं गच्छन्तं चारुं सुन्दरं तं अलीकनलाकारं उपेत्योन्मुच्य निजां सहस्रनेत्रत्वादिलक्षणां स्वीयां तनूं आरान्नलसमीप एवाददिरेऽङ्गीचक्रुः। कः कामिव। कश्चिद्राजा साम्राज्यमुत्सृज्य क्षीणपुण्यतया चक्रवर्त्तिपदं त्यक्त्वा भिक्षामिव। तथा कालवशाद्यथा तारुण्यमुल्लङ्घ्यातिक्रम्य कश्चिज्जरामिव। उपमाद्वयेनेन्द्राद्याकाराणां नलाकारादतिहीनत्वं सूचितं। साम्राज्यादिपरित्यागेन भिक्षाद्यङ्गीकारे यावद्दुःखं भवति तावन्नलाकारपरित्यागेन स्वाकाराङ्गीकारे तेषां जातमिति भावः। तत्र निजत्वमेव हेतुः। अन्योऽपि विद्वानसमीचीनमपि निजमङ्गीकरोति न तु समीचीनं परकीयं। यान्तमिति पाठे स्वर्गमिति शेषः। आददिरे। आङो दोऽनास्येति (पा० १।३।२०) तङ्॥ ६१॥

यथाक्रमं तेषामाकारस्वीकारमाह। मायेति। मायानलमलीकनलत्वं त्यजतो मघोनः निलीनैः पूर्वैर्निजाङ्गैः गौरि

भीमोद्भवासात्त्विकभावशोभा-
द्दिदृक्षयेवाविरभावि नैचैः ॥ ६२ ॥
गोत्रानुकूलत्वभवे विवाहे
तत्प्रातिकूल्यादिव गोत्रशत्रुः।

तैः पूर्व्वैर्नैवैः नलाङ्गसङ्गजनिता भीमोद्भवायाः सात्त्विकभाव-शोभा रोमाञ्चादिलक्षणोल्लासा दिदृक्षयेव दर्शनेच्छयेवाहं पूर्व्व-महं पूर्व्वमिति यथा भवति तथा, यद्वाहं पूर्व्वमहं पूर्व्वमिति यस्यां क्रियायां सर्व्वे भुवते साहंपूर्व्विका स्पर्द्धोत्सुक्याभ्यां ञा-विरभावि वेगेन प्रकटीभूतं। श्लेषेण स्तनेषमहत्त्वं प्रकटितमिति भावः। अन्योऽपि दर्शनोत्सुकोऽहंपूर्व्विकया प्रकटो भवति। अहं पूर्व्वमहं पूर्व्वमित्यहंपूर्व्विका स्त्रतेत्यमरः। अहं पूर्व्विकया। स्वार्थेकः मत्वर्थीयष्टक् च॥ ६२ ॥

गोत्रेति॥ तथा स इन्द्रमघः प्रवरः ददृशे दृष्टः। स कः। गोत्रशत्रुरिन्द्रः यं वरं श्रेष्ठं प्रवरमेतन्नामानं सखायं पुरस्-कार पूजितवान् अथ चाथिमरमकरोत्। किं कुर्व्वन्। गोत्रयो-र्वसिष्ठकश्यपादिवंशादिपुरुषयोरनुकूलत्वेनासमानत्वेन विवाह्य-त्वेन वा भवे जायमाने अथच गोत्रयोर्जन्मकालीननाधोरानुकू-ल्येन तृतीयैकादशचतुर्थदशमादिज्योतिःशास्त्रोक्तमद्राशिकूट-सम्भवेन जायमाने विवाहे विषये विवाहार्थमिति यावत्। आयन् स्वर्गात् स्वयम्बरार्थं आयन् भुवमागच्छन्। एतावन्तं कालमदृष्टोऽभूत् इदानीन्तु प्रकटो जात इत्यर्थः। सखायमिन्द्र-

पुरस्कार प्रवरं वरं य-
मायन् सखायं ददृशे तया सः ॥ ६३ ॥
स्वकामसम्मोहमहान्धकार-
निर्वापमिङ्गिन्निव दीपिकाभिः।

मायन् प्राप्नुवन् स प्रवरस्तया दृष्ट इति वा। प्रवरशब्दछलेन प्रवरपुरस्कार उत्प्रेक्षते। तस्य गोत्रानुकूलविशिष्टस्य विवाहस्य प्रतिकूल्यादिवद्गुलादिव। यतोऽयं गोत्रशत्रुरिति ख्यातं। नल-भैमीगोत्रयोरनुकूलत्वेन जायमाने विवाहे स्वयमिन्द्रः प्राति-कूल्यं कृतवान्। ततश्च विशिष्टस्यापि प्रातिकूल्ये गोत्रयोरपि प्रातिकूल्यं जातं देवत्वाद्गोत्रराहित्याच्च स्वगोत्रभैमीगोत्रयोर-प्यनुकूलत्वाभावात् प्रातिकूल्यं। ततश्च गोत्रयोः प्रातिकूल्येऽपि श्रेष्ठप्रवराङ्गीकरणेनापि यथा कथञ्चिद्विवाहो घटिष्यत इति बुद्ध्या प्रवरमार्गेयं पुरस्कारेत्यर्थः। यद्वा गोत्रानुकूलत्वाभावे विवाहे तस्य प्रातिकूल्याद्धेतोः प्रवरं पुरस्कार समानप्रव-रत्वेनापि विवाहनिषेधादित्यर्थः। नाडीराशिवर्णयोरतिकूट-सुघटयोर्गणनायां षडष्टकाद्यसद्राशिकूटादिव गोत्रशत्रु-त्वादिन्द्रोऽतिःप्रातिकूल्यं। प्रवरं इन्द्रमिर्थं ॥ ६२ ॥

स्वकामेति ॥ वायुसखोऽग्निः निजं वपुः उज्ज्वलन्तीभिर्दी-प्तीभिः शिखाभिर्ज्वालाभिः कुरितं व्याप्तं विभेजे चकार। भैम्यभिप्रायं परित्यज्य पुनरपि व्यामाव्याप्तं शरीरमग्नीत्वा-मेत्यर्थः। किं कुर्वन्निव। दीपिकाभिर्वक्ष्यामिन्प्रसिताःदीपाणि

उद्गत्वरीभिश्छुरितं वितेने
निजं वपुर्वायुसखः शिखाभिः ॥ ६४ ॥
पत्यौ वृते भीमजया न वह्नौ
वह्नौ स्वमङ्गाय निजुह्नुवे यः ।
जनादपत्रप्य स हा सहाय-
स्तस्य प्रकाशोऽभवदप्रकाशः ॥ ६५ ॥
सदण्डमालक्तकनेत्रचण्डं
नमःकिरं कायमधत्त कालः ।

स्वस्य कामेन सम्मोहोऽविवेकरूपस्तमसघणो महान्धकारस्तस्य निर्वापं शान्तिमिच्छन्निव। उत्पूर्वकगमेः, गत्वरश्चेति (पा० ३।२।१६४) करबन्तात्। टिड्ढाणञिति (पा० ४।१।१५) ङीप् ॥ ६४ ॥

पत्याविति ॥ यः प्रकाशः पूर्वं वह्नेर्लोकनलत्वाङ्गीकारसमये स्वमात्मानं अङ्गाय शीघ्रं निजुह्नुवे गोपितवान् स तस्य वह्नेः सहायः सखा प्रकाशो दीप्तिः सद्योऽह्ना दिवसेन हेतुनाऽप्रकाशः अप्रकटोऽभवत्। प्रकटीभूतोऽपि सूर्यप्रभाच्छादितयाऽप्रकटो जात इत्यर्थः। हा कष्टं। पत्यौ स्वस्वामिनि वह्नौ भीमजया न वृते सति जनाल्लोकादपत्रप्य लज्जित्वेव प्रकटो नाभूत् इति सुश्लेषोत्प्रेक्षा। अन्योऽपि स्वस्वामिनोऽपकर्षे लज्जया निलीयते। ज्वालास्वङ्गीकृतास्वपि रात्रिवत् प्रकाशाभावादग्निर्निष्प्रभ एवाभूदिति भावः ॥ ६५ ॥

सदण्डमिति॥ कालो यमः सदण्डं लोहयष्ट्या सह वर्त्तमानं

भवन् सुद्युम्नः स्त्री नरपतिरभूद्यस्य जननी
तमूर्वश्याः प्राणानपि विजयमानस्तनुरुचा।
हरारब्धक्रोधेन्धनमदनसिंहासनमसा-
वलंकर्म्मीणश्रीरुदभवदलङ्कर्त्तुमधुना॥ ८३॥

भवन्निति। सूर्यनप्तुर्मनोः पुत्रः सुद्युम्नाख्यो नरपतीराजा पार्वतीवनप्रवेशनिमित्तेन शिवशापेन हेतुना इलाख्या स्त्री भवन् स्त्रीत्वं प्राप्तः सन् बुधाद्गर्भधारणेन यस्य जननी अभूत्। उर्वश्याः प्राणान् रूपातिशयात् उर्वश्यायाः प्राणभूतं प्राणप्रियमतिसुन्दरं तं पुरूरवसमपि तनुरुचा कायकान्त्या विजयमानः पराभावुकोऽसौ नलः अधुनेदानीं हरेणारब्धः कृतः क्रोधरूपे न्धनं दाहो मदनस्य सिंहासनं दग्धत्वात्कामेन शून्यमलङ्कर्त्तुं योग्यतया भूषयितुं अलङ्कर्म्मीणा कर्मसमाप्तिसमर्था स्वाभाविकी भूषणजनिता च श्रीः शोभा यस्यासौ एवम्भूत उदभवत् जात इति पुरस्त्विय चालेपुरित्यन्तिमश्लोकेन सम्बन्धः। शौर्यः कामो दग्धः पुरूरवास्तनेनैव जितः तस्मात् शून्यं कामसिंहासनं भूषितुमयं काम एवोत्पन्नः। अतिसुन्दरोऽयमिति भावः। इलायुगादौ तु इलो नाम राजा मृगयाप्रसङ्गाद्धरनिवारितकुमारवनमेकाकी प्रविष्टः स्त्री बभूव। तामेकाकिनीं सुन्दरीं दृष्ट्वा चन्द्रपुत्रो बुधः कामातुरः सन् स्वाश्रमं नीत्वा तस्यां पुरूरवा नामानं पुत्रमजीजनदिति भविष्योत्तरपुराणे कथा। शिखरिणी नामः। विपराभ्यामिति (पा॰१।३।१८) शानच्। कर्मण्यस्यामिति ईनञ्प्रत्ययः॥ ८३॥

मा जानीत विदर्भजामविदुषीं कीर्त्तिं मुदः श्रेयसीं
सेयं भद्रमचीकरन्मघवता न स्वं द्वितीयां शचीं।
कः शच्या रचयाञ्चकार चरितं काव्यं स नः कथ्यता-
मेतस्यास्तु करिष्यते रसधुनीपात्रे चरित्रे न कैः॥ ८६॥

मा जानीतेति। भोः सख्यो यूयं विदर्भजां मुदो हर्षात् सका-
शात् कीर्त्तिं श्रेयसीं श्रेष्ठतरामविदुषीमजानतीं मा जानीत किन्तु
हर्षापेक्षया कीर्त्तिः प्रशस्ततरेति भैमी वेत्त्येवेति जानीत। य-
स्मात् सेयं भैमी मघवता शचीश्लेषेन स्वमात्मानं द्वितीयां शचीं
भद्रं साधु नाचीकरत् न कारयामास। इन्द्रे वृते तत्पत्नीला-
भाच्छचीशब्दवाच्यत्वं भवेत् न तस्मै वृतस्तस्माद्द्वितीया शची ना-
भवदिति युक्तमेव अनया कृतमित्यर्थः। इन्द्रे वृतेऽपि कीर्त्तिर्भवि-
ष्यतीत्याशङ्क्य नेत्याह। शच्याश्चरितं कः कविः सर्गबन्धनादिरू-
पेण वर्णनात्मकं काव्यं प्रबन्धं रचयाञ्चकार स शचीवर्णनकारी नो
स्माकमपेऽस्मभ्यं च कथ्यतां यद्यस्ति, अपि तन्निरूपणान्नास्त्येव।
एतस्यास्तु भैम्याः पुनारसानां शृङ्गारादीनामेव रसानां जला-
नां धुनी नदी तस्याः पात्रे स्थानभूतेऽथ च रसनदीप्रवाहरूपे
लीलादिचरित्रे विषये कैः पराशरव्यासशुकादिभिः काव्यं न
करिष्यतेऽपि तु तैरपि भारतादौ तद्वर्णनकाव्यं करिष्यते किं
पुनः श्रीहर्षादिकविभिरित्यर्थः। इन्द्रवरणेन यद्यपि स्वर्गसुख-
प्राप्तिस्तथापि तत्पत्नीलाभाच्छचीत्वेऽपि तस्याः कुत्रचित् केनाप्यव-
र्णनतादिन्द्रापेक्षयाधिककीर्त्तेर्नलस्य वरणे पुण्यश्लोकत्वात् सर्व-

व्यावृत्योपनतेन हा शतमखेनाद्य प्रसाद्या कथं
भैम्या व्यर्थमनोरथेन च शची साचीकृतास्याम्बुजा ॥ ८५ ॥

साचिभिः प्रत्यचदर्शिभिर्द्दिग्धवैस्तुभिरिन्द्रादिभिर्दिक्पालैर्ल-ज्जाभावात् स्वयमस्फुटदविदीर्यमाणमपि स्वं वचः अमुष्य नलस्य शस्त्रादपि हेतोः किमिति न स्फोटितं विदारितं नलेन सार्द्धं भैम्यर्थं युद्धमपि कृत्वा किमिति न मृतं। शूराणां रणे मरणमपि यशसे भवति न तु लज्जापरित्याग इति भावः। छुरिकादि-प्रक्षेपेण स्वयमेव वा किमिति न स्फोटितमिति वा। अन्यादय-स्तावत्तिष्ठन्तु हा सोपहासं कष्टं अद्य भैम्यां विषये व्यर्थमनोरथेन सता व्यावृत्य परावृत्य उपनीतेन शचीसमीपे प्रणामव्याज-वेण शतमखेन शतयज्ञकरणाल्लब्धस्वर्गाधिपत्येन देवेन्द्रेणापि शचीन्द्राण्यपि च कथं प्रसाद्यानुनेतुं शक्या। यतः कोपवशादव-ज्ञावशाद्वा साचीकृतं वक्रीकृतमास्यमेवाम्बुजं यया। सम्मुखान-वलोकनात् प्रसादनार्थमनेन कृतमपि प्रणामाञ्जल्यादिकं न द्रक्ष्यति ततः कथं प्रसाद्या। भैमी न लब्धा शची च रुष्टेत्युभय-भ्रंशोऽपि जातमितीन्द्रस्य महत् कष्टं जातमिति भावः। दिग्-भटैः शूरैर्नृपैः स्वं वचः किमिति न स्फोटितं। नृपा मनुष्याः तिष्ठन्तु देवेन्द्रस्यापीदृशी दशा जातेति वा। उपगतेति पाठे शचीसमीपे गतेनेत्यर्थः ॥ ८५ ॥

मा जानीत विदर्भजामविदुषीं कीर्त्तिं मुदः श्रेयसीं
सेयं भद्रमचीकरन्मघवता न स्वं द्वितीयां शचीं ।
कः शच्या रचयाञ्चकार चरितं काव्यं स नः कथ्यता-
मेतस्यास्तु करिष्यते रसधुनीपात्रे चरित्रे न कैः ॥ ८६ ॥

मा जानीतेति। भोः सख्यो यूयं विदर्भजां मुदो हर्षात् सकाशात् कीर्त्तिं श्रेयसीं श्रेष्ठतरामविदुषीमजानतीं मा जानीत किन्तु हर्षापेक्षया कीर्त्तिः प्रशस्ततरेति भैमी वेत्त्येवेति जानीत। यस्मात् सेयं भैमी मघवता प्रयोज्येन स्वमात्मानं द्वितीयां शचीं भद्रं साधु नाचीकरत् न कारयामास। इन्द्रे वृते तत्पत्नीलाभ्यचीशब्दवाच्यत्वं भवेत् न तथा वृतस्तस्माद्वितीया शची नाभवदिति युक्तमेव अनया कृतमित्यर्थः। इन्द्रे वृतेऽपि कीर्त्तिर्भविष्यतीत्याशङ्क्य नेत्याह। शच्याश्चरितं कः कविः सर्गबन्धनादिरूपेण वर्णनात्मकं काव्यं प्रबन्धं रचयाञ्चकार स शचीवर्णनकारी नोऽस्माकमयेऽस्माभ्यं च कथ्यतां यद्यस्ति, अपि त्वनिरूपणान्नास्त्येव। एतस्यास्तु भैम्याः पुलारसानां शृङ्गारादीनामेव रसानां जलानां धुनी नदी तस्याः पात्रे स्थानभूतेऽथ च रसनदीमवाहरूपे शीलादिचरित्रे विषये कैः पराशरव्यासशुकादिभिः काव्यं न करिष्यतेऽपि तु तैरपि भारतादौ तद्वर्णनकाव्यं करिष्यते किं पुनः श्रीहर्षादिकविभिरित्यर्थः। इन्द्रवरणेन यद्यपि स्वर्गसुखप्राप्तिस्तथापि तत्पत्नीलाभ्यचीलेऽपि तस्याः कुत्रचित् केनाप्यवर्णनत्वादिन्द्रापेक्षयाधिककीर्त्तेर्नलस्य वरणे पुण्यश्लोकत्वात् सर्वै-

वैदर्भीबहुजन्मनिर्म्मिततपःशिल्पेन देहश्रिया
नेत्राभ्यां स्वदते युवायमवनीवासः प्रसूनायुधः।
गीर्व्वाणालयसार्व्वभौमसुकृतप्राग्भारदुःप्रापया
योगं भीमजयानुभूय भजतामद्वैतमद्य त्विषां॥ ८७॥

रपि वर्णनीयत्वात्तत्सम्बन्धात् स्वस्यापि वर्णनीयत्वान्महती कीर्त्ति-र्भविष्यति सा च स्वर्गसुखः सकाशाच्छ्रेयसीति विचार्य्यैश्वर्यपरित्यागद्वारा स्वर्गसुखमपि परित्यज्य भैम्या नलो वृत इति गुणकारित्वादेतादृशी कापि विदुषी नास्तीति भावः। दिव इति पाठे स्वर्गसुखादित्यर्थः। करिष्यते स्वदन्तत्वादिट्॥ ८६॥

वैदर्भीति। हे सख्यः अवन्यां वासः स्थितिर्यस्य स प्रसूनायुध इव कामरूपोऽयं नलनामा युवा तरुणो देहश्रिया शरीरकान्त्या कृत्वा पश्यन्तीनामस्माकं नेत्राभ्यां स्वदते रोचते। किंभूतया। वैदर्भ्या बहुजन्मभिरनेकजन्मसु वा निर्म्मितस्य कृच्छ्रचान्द्रायणादिजन्यस्य तपसः सुकृतस्य शिल्पेन फलभूतया। अतिसुन्दरममुं प्रीत्यास्माभिर्नेत्रे पश्यत इत्यर्थः। विशिष्टया देहश्रिया लक्षितो वा। अशरीरोऽपि भैमीपुण्यवशाऽऽत्म्यवशात् सशरीरोऽत्र इवेति भाव इति वा। सोऽयं नलः भीमजया सह योगमद्य दाम्पत्यसम्बन्धमनुभूय त्विषां कान्तिभराणामन्यत्रात्यन्ताभावेनाद्वैतं सामस्त्यं भजतां आश्रयतु। उभयोरेकत्र मेलनाद्दम्पत्योः कान्तीनामाश्रयः कान्तिस्वरूपो वा भवतु नान्य इत्यर्थः। किंभूतया। गीर्व्वाणालये स्वर्गलोके सार्व्वभौम इन्द्रस्तस्य सुकृतप्राग्

स्त्रीपुंसव्यतिषञ्जनं जनयतः पत्युः प्रजानामभू-
दभ्यासः परिपाकिमः किमनयोर्दाम्पत्यसम्पत्तये।
आसंसारपुरन्ध्रिपूरुषमिथःप्रेमार्पणक्रीडया-
प्येतन्नस्पतिगाढरागरचनात् प्राकर्षि चेतोभुवः॥८८॥

नारः पुण्यराशिस्तेनापि दुष्प्रापया अलभ्यया। शतमखजन्येन पुण्येन स्वर्गचक्रवर्त्तित्वं येन लब्धं तेनापि दुष्प्रापत्वाद्भैम्याः सौभाग्यातिशयो नलस्य चन्द्रापेक्षया सौभाग्यातिशयः पुण्यातिशयस्य गीर्व्वाणालयेत्यादिना सूचितः। अन्योऽप्यष्टाङ्गयोगमनुभूय महापुण्यदुष्प्रापयापि भीमात् परात्मातया ईश्वरप्रसादलभ्यया विद्ययाऽद्वैतं परमात्मस्वरूपं भजति। नैचाभ्यां। रुच्यर्थाना-मिति (पा॰१।४।३३) सम्प्रदानत्वं। प्राग्भारदुःप्रापया। द्वती-येति योगविभागात् समासः॥ ८७॥

स्त्रीति। स्त्रीपुंसयोः सर्व्वयोः व्यतिषञ्जनं विशेषेणातितरां सम्मेलनं जनयतः कुर्व्वतः प्रजानां पत्युर्ब्रह्मणः पुनरसंयोज-नमित्यभ्यासोऽभ्यासोऽनयोर्नलभैम्योर्दाम्पत्यसम्पत्तये जायाप-तिभावस्योत्कर्षाय परिपाकिमः परिपाकेन निर्वृत्तः सारत्वेन परिणततया कोऽभूत्किं, सर्व्वस्त्रीपुंसयोजनाभ्यासः अत्युत्तमानु-रूपतदुभयघटनेन फलितः किमित्यर्थः। तथा चेतोभुवः काम-स्यापि आसंसारं संसारं मर्य्यादीकृत्य सर्गादिमारभ्य प्रलयपर्य्यन्तं पुरन्ध्रिपूरुषयोः स्त्रीपुंसयोर्मिथः प्रेमान्योन्यमनुरागस्तस्यार्पण-मासञ्जनं तदेव सदा मनोविनोदरूपा क्रीडा लीला तयापि

ताभिर्दृश्यत एष यान् पथि महाज्यैष्ठीमहे मन्महे
यद्दृग्भिः पुरुषोत्तमः परिचितः प्राग्मञ्चमञ्चन् स्थितः।

एतच्चामत्योरनयोर्नलभैमीरूपयोर्गाढस्नेहेनाप्ययनेन यस्य मिथोऽनुरागस्य रचनाश्रमनाद्धेतोः प्राकर्षिं प्रकृष्टकाष्ठापक्षया जातं। अनुरागजननक्रीडाया प्रकर्षोऽत्रैव विश्रान्तः। उत्तरत्राप्येवमनुरागस्याभावादित्यर्थः। एतादृशौ सरूपौ समानानुरागौ चान्यौ स्त्रीपुंसौ कालत्रये न स्त इति भावः। व्यतिषक्तं। उपसर्गात् सुनोतीति (पा० ८।३।६५) षत्वं। परिपाकिमः। भावप्रत्ययान्तात्, पृथ्वादिभ्य (पा० ५।१।१२२) इति इमनिच्। जम्पती। जायाया जभावः॥ ८८॥

ताभिरिति। महत्या अतिप्रसिद्धाया ज्येष्ठानक्षत्रयुक्ताया ज्यैष्ठपूर्णिमायाः सम्बन्धिनि महे उत्सवे, महत्यतिप्रसिद्धे वा ज्यैष्ठीमहे यद्दृग्भिर्यासां नेत्रैः प्राग् जन्मान्तरेऽथवाप्यपेक्षया प्रथमं मञ्चं पर्यङ्कं अञ्चन् प्राप्तः मञ्चस्थो मार्गं गच्छन् पुरुषोत्तमः परिचितो बहुवारं दृष्टः तत्ताभिरेव स्त्रीभिः पथि वरयात्रायां यान् रथस्थ आगच्छन्नेष नलो दृश्यते। एतादृक्पुण्यं याभिरस्मादृशाभिरर्जितं ताभिरेवायं द्रष्टुं शक्यो न त्वन्याभिरित्यर्थः। अथ च याभिः पुरुषोत्तमो दृष्टस्ताभिस्तत्तुल्योऽयमपीति द्रष्टुं शक्यते न त्वन्याभिरित्यर्थः। ताभिस्ताभिरेवायं कटाक्षैर्दृश्यते याभिरेवं सुकृतं कृतं। अन्याभिस्तु ईक्षणेनापि वीक्षितुं न शक्यते किं पुनः सानुरागं कटाक्षैरिति।

सा क्षौराट् पतयालुभिः शितिसितैः स्यादस्य दक्चामरैः
स्नाने माघमघाभिघातियमुनागङ्गौघयोगे यथा ॥ ८९ ॥

ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा ।
पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठीति कीर्त्तितेति ॥

पुरुषोत्तमतुल्योऽयं मन्महे जानीमह इति भावः । वाक्यार्थः कर्म । उत्कलदेशे ज्यैष्ठपूर्णिमायां इन्द्रनीलगिरिनिवासिनः श्रीपुरुषोत्तमस्य महोत्सवः क्रियते । तत्र च श्रीकृष्णबलभद्रप्रमुखप्रतिमाधिष्ठिता विरचितसप्तभूमिका मञ्चाः पृथक् निर्गच्छन्तीति तस्य दर्शनं भूयसे श्रेयसे भवतीति पौराणिकाः । यदाहुः ।

दोलारूढं तु गोविन्दं मञ्चस्थं मधुसूदनं ।
रथस्थं केशवं दृष्ट्वा पुनर्जन्म न विद्यते इति ॥

यथा । यथा स्त्रिया अघाभिघातिनी पातकविनाशिनी यमुना गङ्गा च तयोरोघयोर्योगे सङ्गमे प्रयागाख्ये माघं मस्ने मकरस्थे रवौ माघे मासविच्छेदेन स्नानं कृतं मास्य नलस्य पतयालुभिरतिचञ्चलैः शितिसितैः कृष्णधवलैर्दक्चामरैर्नेत्रैरेव चामरैर्नेत्रव्यापाररूपैश्चामरैः क्षौराट् क्षौराजैव स्यात् भवेत् इति मन्महे । राजा हि कृष्णधवलैश्चामरैर्वीज्यते । प्रयागे माघस्नानजन्यसुकृतात् स्त्री राजत्वं प्राप्नोति तत्र स्नानेन ।

मितामिते तु यैः स्नानं माघमासे युधिष्ठिर ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपीति ।

वचनात् स्त्रीषु श्रेष्ठा सैव भवेदिति वचनादित्यर्थः। अथच कटाक्षैर्यं पश्यति सा सर्व्वाभ्योऽप्यधिका सा च भैम्येव नान्या।भैम्या च प्रयागे सकलमाघस्नानफलं लब्धं यतो भैमीसदृशी कापि कुत्रापि नास्तीति भावः।ज्यैष्ठीति।ज्येष्ठानक्षत्रयुक्ता पौर्णमासीति। नक्षत्रेण युक्तः कालः (पा० ४।२।३) इत्यणि वृद्धिः। तद्युक्तमासाभिधायित्वेऽपि मास्मिन् पौर्णमासीत्यादिना (पा० ४।२।२१) ज्यैष्ठी इत्येव भवति। ज्येष्ठीत्येव पाठे वृद्ध्यभावश्चिन्त्यः।सञ्ज्ञापूर्व्वस्य विधेरनित्यत्वाद् वृद्ध्यभावः कथञ्चित् समर्थनीयः। स्त्रीराडिति सम्बन्धषष्ठ्या निर्धारणषष्ठ्या वा समासः। स्त्री इति पृथग्वा पदं। अत एव सा स्त्री इत्यर्थः। अकर्मकधातुभिर्योगे देशकालो भावो गन्तव्योऽध्वेत्यादि (पा० १।४।५१ सि० कौ० कारकवार्त्तिकेन माघस्य कालवाचित्वात् कर्म्मकत्वे धातोः सकर्मकत्वात् कर्म्मणि विहितेन तङा तस्याभिहितत्वान्माघः सम इति प्राप्ते माघमिति द्वितीया चिन्त्या। अत्रार्थे हरदत्तमिश्रैर्गतिबुद्ध्यादिसूत्रे (पा० १।४।५२) अकर्म्मकाणामिति कालभावाध्वदेशव्यतिरिक्तकर्म्मरहितानामित्यर्थो ग्राह्य इति सिद्धान्तितं। एवं कर्म्मणि च (पा० २।४।६८) इत्यादावपि यथाकर्म्मकपदं तत्र सर्व्वत्र द्रष्टव्यं। तेनात्र माघस्य कर्म्मत्वेऽपि समे इति भावे लिट् सिद्धो भवति। यदा माघं यस्यां क्रियायां यथा तथा यात्राया मम सर्व्वपापक्षयपूर्व्वकसर्व्वमनोरथसिद्धिर्भवत् इति महत्स्योत्पर्थः। फलुषं हृजिमैमोपेत्यगरः। यमुनागङ्गेति पूर्व्वनिपातेऽनियमः पूर्व्ववत् परिहरणीयः॥ ८८॥

वैदर्भी विपुलानुरागकलनात् सौभाग्यमस्याखिल-
क्षौणीचक्रशतक्रतौ निजगदे तद्वृत्तवृत्तक्रमैः ।

वैदर्भीति । हे सख्यः तस्य नलस्य सम्बन्धीनि वृत्तान्यधीतानि यानि वृत्तानि पद्यानि तेषां क्रमैः नलविषये कविभिः कृतैः अस्मदादिभिश्च पठितैः काव्यैर्वृत्तैरतीतैः सकलद्वीपाधिपादिराजेन्द्रदेवेन्द्रादिदिक्पालपरित्यागरूपस्य चरित्रक्रमैः परिपाटीभिर्वा कृत्वा वैदर्भ्या भैम्या विपुलस्य नलविषयानुरागस्य कलनात् ज्ञानात् अखिलक्षौणीचक्रे शतक्रताविन्द्रेऽप्यस्मिन्नले स्त्रीसम्बन्धिसकलवरप्रेमास्पदत्वादिलक्षणं सौभाग्यं निजगदे स्पष्टं कथितं । निश्चितमस्माभिरिति यावत् । अतिसुन्दरीयमिन्द्रादीन् परित्यज्य यस्मादेनमवृत तस्मादयमेव सुभगतमो नान्य इति सर्व्वैर्निश्चितमित्यर्थः । भैमीकृतान्नलविषयविपुलानुरागस्याङ्गीकरणाद्धेतोस्तस्या एव वृत्तस्य भूतस्य चक्षुःप्रीत्यादिकामदशाः स्फुटं विरहव्यथानुरूपस्य वृत्तस्य चरित्रस्य क्रमेणेऽतिप्रसिद्धा ये वृत्ता वृत्तकमार्गैर्वा निगदितं । भैम्या अस्येतद्विषयमहानुरागजनितपूर्व्वविरहव्यथाभिरेवायं सकलसौभाग्यनिधानमिति सर्व्वेषां पुरस्तात् कथितमिति भाव इति मुख्योऽर्थः । वैदर्भ्या विपुलानुरागेण नलस्य वर्णनादिति वा । किञ्चान्यच्च अस्माकमयमास्माकः स चासौ नरेन्द्रश्च भीमस्तस्माद् भवतीति भूर्भैमी तस्याः सुभगता सौभाग्यं तस्याः सम्भूतये उत्पत्तये महामहत्त्वार्थं वा देवस्य इन्द्रस्यावरणेन त्यागेन सापत्न्याभा-

किञ्चास्माकनरेन्द्रभूसुभगतासम्भूतये लग्नकं
देवेन्द्रावरणप्रसादितशचीविश्राणिताशीःश्रुतिः ॥ ९० ॥
आसुत्राममपासनान्मखभुजां भैम्यैव राजव्रजे
नादर्थ्यागमनानुरोधपरया युक्तार्जि लज्जारजा।

देन प्रसादितया सन्तोषितया शच्या विश्राणितं दत्तं सुभगा पुत्रवत्यविधवा भवेत्यादिकमाशीर्वचनं लग्नकं प्रतिभूरभूत्। शचीदत्ताशीःसहस्रवलाद्भैम्यपि सुभगेति निश्चितमित्यर्थः। आशीःश्रुतिरिति पाठे आशिषां श्रवणं। अथवा आशिष एव सत्यत्वाच्छ्रुतिर्वेद इत्यर्थः। अयन्तु पाठः साधीयान्। अनयोरन्योन्यमनुरागोचितं सौभाग्यमपि भविष्यतीत्यनुमानम्। इतं। णेरध्ययने वृत्तमिति (पा० ७।२।२६) सिद्धं। आस्माकेति सम्बन्धेऽणि, तस्मिन्नणि चेति (पा० ४।३।२) आस्माकादेशः। लग्नकशब्दो नपुंसकोऽपि। तथा भैम्या वृत्तानां जातानां वृत्तानां हंसप्रेषणादिचरितानां क्रमाः परिपाट्यस्तैर्निजगदे इति वा ॥ ९० ॥

आसुत्राममिति। भैम्यैव आसुत्राममिन्द्रमभिव्याप्य मखभुजां देवानामपासनात्त्यागाद्धेतोः राजव्रजे विषये लज्जारजा परिमार्जनं युक्ता आर्जि कृता। यत्कृतं तद्युक्तमित्यर्थः। यतः नर्थी इदं तदर्थं तस्य भावस्तादर्थ्यं तेन भैमीनिमित्तेन राज्ञामागमनं यद्येभिस्तोऽनुरोधो दाक्षिण्यं तत्परया। दे हि यदर्थमागच्छति स तस्य दाक्षिण्यं कुर्यात् सन्ना माहेन्द्र

आत्मानं त्रिदशप्रसादफलतां पत्ये विधायानया
ह्रीरोपापयशःकथानवसरः स्पष्टः सुराणामपि ॥ ९१ ॥

घ्रतमेवेत्यर्थः। मदर्थमागतानामेषां मत्प्राप्तिर्नाभूत् लज्जा च गतेत्ययुक्तमेतदिति राजसु समरूपत्वेनेन्द्रादीनपि भैमी नावृणोत्। ततश्च यत्नेन्द्रादयोऽपि त्यक्तास्तत्र मानुषाणामस्माकं का कथेति तेषां लज्जामार्जनं भैम्यैव युक्तं कृतमिति भावः। स नलो ऽर्थः प्रयोजनं यस्य तस्य भावस्तादर्थ्यं तेन नलप्रयोजनत्वेन नलवरणार्थं यदागमनं तत्र यः पक्षपातस्तन्निष्ठया नलानुरक्तया अत एव इन्द्रादीनां त्यागः कृत इति वा। तर्हि इन्द्रादीनां लज्जा रोषोऽकीर्त्तिश्च कृतेति देवद्रोहादशुभाशङ्कां परिहरति। अनया भैम्या पत्ये नलायात्मानं त्रिदशप्रसादस्य फलतां वररूपत्वं विधाय सुराणामिन्द्रादीनामपि ह्रीरोषापयशसां कथायाः कथामात्रस्यापि अनवसरः अवकाशाभावः स्पष्टः कृतः। अस्मान्नावृणोदिति सजातीयान् क्षत्रियान् प्रति लज्जा अस्माकं पश्यतां नलसंवरणादिति रोषः। नलं स्वीकृत्य देवानपमानितवतीत्ययशः। दैवैश्च प्रसन्नीभूय वरत्वेन नलाय भैमी दत्ता। एतदर्थमेव ते पृथिव्यामागता न भैम्यभिलाषेणेति लोकप्रतीतेर्यया देवानामपि लज्जादिमार्ज्जनं कृतमिति सर्व्वानुरागादनयोः शुभपरम्परैव भविता नाशुभशङ्कालेशोऽपीति भावः। मत्ये नयत्येति पाठः समीचीनः। आत्मानं त्रिदशप्रसादफलतां नयत्या प्रापयन्त्येत्यर्थ.। आत्मचाम। अत्राभिविधावाङ्। अव्य-

इत्यालेपुरनुप्रतीकनिलयालङ्कारसारश्रिया
ऽद्धंकुर्व्वत्तनुरामणीयकममूरालोक्य पौरस्त्रियः।
सानन्दं कुरुविन्दसुन्दरकरस्यानन्दनं स्यन्दनं
तस्याध्यास्य यतः शतक्रतुहरित्क्रीडाद्रिमिन्दोरिव॥९२॥

यीभावे, अनश्चेति (पा०५।४।१०८) टच्। स्रजा। भिदादित्वादङ् (पा०३।३।१०४) ॥ ९१ ॥

इतीति। अमूः पौराणां स्त्रिय इति पूर्व्वोक्तप्रकारेण यथास्फूर्ति यथाभिप्रायमन्योन्यमालेपुः संवादं चक्रुः। किम्भूताः। कुरुविन्दवत् पद्मरागवत् सुन्दरौ रक्तौ करौ यस्य तस्य आनन्दनं वेगवत्त्वादिगुणयोगादानन्दकारिणं स्यन्दनं रथमध्यास्य यतो गच्छतस्तस्य नलस्य अनुप्रतीकं प्रत्यवयवं निलयं स्थानं येषां तेषामलङ्काराणां सारश्रिया श्रेष्ठशोभया हस्ता करसौन्दर्य्यादरमधिकमिति हस्तसौन्दर्य्यं वदति, हस्तसौन्दर्य्यादयमधिकमिति करसौन्दर्य्यमित्येवं प्रत्येकमर्द्धं कुर्व्वदर्द्धकारं कुर्व्वत् तनुरामणीयकं शरीरसौन्दर्य्यमालोक्य सानन्दा हर्षपराः। कस्येव। पद्मरागवद्रक्तकिरणस्य नन्दनवनमभिव्याप्य मर्य्यादीकृत्य वा स्थितं नन्दनसमीपे स्थितं। शतक्रतोर्हरिति दिक् प्राची दिक् तस्याः क्रीडाद्रिमुदयाचलमधिष्ठाय गच्छत उदितस्येन्दोरिव। तस्य यथा कान्तिं विलोक्य यथा सानन्दा भवन्ति तथेत्यर्थः। ऋद्धं कीर्णं हर्षः। स्यन्दनमध्यास्य। अधिशीङ् (पा०१।४।४६) स्थासाम्… कर्म्मं। यतः। इण् गतौ शतृ ॥ ९२ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं ।
यातः पञ्चदशः कृशेतररसस्वादाविहायं महा-
काव्ये तस्य हि वैरसेनिचरिते सर्गो निसर्गोज्ज्वलः ॥ १५ ॥

श्रीहर्षमिति । अर्द्धं पूर्ववत् । कृशेतरेणातिभूयसा रसेन स्वादावमृतरूपे नलीयचरित्रे पञ्चाधिकानां दशानां पूरणः पञ्चदशः । स्वादाविति भावितपुंस्कं ॥ ९३ ॥

इति श्रीवेदरकरोपनामकश्रीनरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे पञ्चदशः सर्गः ॥ १५ ॥

## षोडशः सर्गः ।

---

श्रीलक्ष्मीनृसिंहो जयतः ।

वृतः प्रतस्थे स रथैरथो रथी
गृहान् विदर्भाधिपतेर्धराधिपः ।
पुरोधसङ्गौतममात्मवित्तमं
द्विधा पुरस्कृत्य गृहीतमङ्गलः ॥ १ ॥
विभूषणांशुप्रतिबिम्बितैः स्फुटं
भृशावदातैः स्वनिवासिभिर्गुणैः ।

वृत इति । अथो रथारोहणानन्तरं रथैः कुन्ताः प्रविशन्तीतिवद्रथिभिर्वृतस्तथा रथी प्रशस्तरथोपेतः स धराधिपो नलः विदर्भाधिपतेर्गृहान् प्रति प्रतस्थे ययौ । किम्भूतः । आत्मवित्तमं ब्रह्मज्ञानिमध्ये श्रेष्ठं गौतमं गौतमगोत्रं एतन्नामानं च पुरोधसं द्विधा द्वाभ्यां प्रकाराभ्यां पुरस्कृत्याग्रे कृत्वा पूज्य च विवाहे कार्यभारं तस्मिन्नारोप्य वा गृहीतानि स्वीकृतानि दध्यक्षतपूर्णकलशादीनि मङ्गलानि येन । रथैः सह वर्तमानैः पुरुषैर्वा प्रतस्थे। समवप्रविभ्यः स्थः (पा० १।३।२२) इति तङ् ॥ १ ॥

विभूषयेति । स्वगेषणानां चामरधारिणीनां विधुप्रभेदम

मृगेक्षणानां समुपासि चामरै-
विधूयमानैः स विधुप्रभैः प्रभुः ॥ २ ॥
परार्ध्यवेशाभरणैः पुरःसरैः
समं जिहाने निषधावनीभुजि ।

धवलैः तथा विधूयमानैश्चाल्यमानैश्चामरैः स प्रभुर्नलः समुपासि वीज्यते स्म स्फुटमुत्प्रेक्षे । विभूषणानां रत्नखचितनिजमण्डनानामंशुषु किरणेषु प्रतिबिम्बितैः, तथा स्वभावदातैरत्युज्ज्वलैः, स्वस्मिन्निवमन्येवंशीलैः, श्रुतशीलसौन्दर्यादिभिर्गुणैरिव प्रत्यक्षीभूतैर्निर्मलगुणैरिव चामरैरुपासीत्यर्थः । चामराण्यपि विभूषणांशुप्रतिबिम्बितानि । स्फुटं निश्चितं । ईदृशैश्चामरैरेव गुणैरिति वा ॥ २ ॥

परार्ध्येति । निषधावनीभुजि नले परार्ध्यानि श्रेष्ठानि वेशाभरणानि रूपालङ्कारा येषां तैः पुरःसरैः समं सह जिहाने चलति सति स्वचराव इन्द्रः सुनासीर इति पदस्याभिधेयतां वाच्यतं यदि दधार तर्हि रूढिमात्रं दधार न तु शोभनं नासीरं सेनामुखं यस्येति यौगिकतया । शुद्धवृत्त्या मुख्यया वृत्त्या नले एव दृश्यते न लिम्पे । त्रिविधाः शब्दाः केवलयौगिकाः केवलरूढाः योगरूढिकाश्च । तत्र पाचकादयो यौगिकाः । तैलपायिकादयो रौढिकाः । आतपचादयो योगरौढिकाः । तदेवं तादृशायेसराभावादिन्द्रस्य सुनासीरपदवाच्यत्वं यद्यस्ति तर्हि रूढित्वात्तु व्युत्पत्त्या तु नल एवोचितमित्यर्थः ।

## षोडशः सर्गः ।

---

श्रीलक्ष्मीनृसिंहौ जयतः ।

वृतः प्रतस्थे स रथैरथो रथी
गृहान् विदर्भाधिपतेर्धराधिपः ।
पुरोधसं गौतममात्मवित्तमं
द्विधा पुरस्कृत्य गृहीतमङ्गलः ॥ १ ॥
विभूषणांशुप्रतिबिम्बितैः स्फुटं
भृशावदातैः स्वनिवासिभिर्गुणैः ।

वृत इति । अथो रथारोहणानन्तरं रथैः वृतः प्रशस्तीतिवद्रथिभिर्वृतस्तथा रथी प्रशस्तरथोपेतः स धराधिपो नलः विदर्भाधिपतेर्गृहान् प्रति प्रतस्थे ययौ । किम्भूतः । आत्मवित्तमं ब्रह्मज्ञानिमध्ये श्रेष्ठं गौतमं गौतमगोत्रं एतन्नामानं वा पुरोधसं द्विधा द्वाभ्यां प्रकाराभ्यां पुरस्कृत्याग्रे कृत्वा पूजयित्वा च विवाहे कार्यभारं तस्मिन्नारोप्य वा गृहीतानि स्वीकृतानि दध्यक्षतपूर्णकलशादीनि मङ्गलानि येन । रथैः सह वर्तमानैः पुरुषैर्वा प्रतस्थे। समवप्रविभ्यः स्थः (पा० १।३।२२) इति तङ् ॥ १ ॥

विभूषणेति । रत्नभूषणानां चामरधारिणीनां विभूषणैरङ्ग

म्गेचणानां समुपासि चामरै-
र्विधूयमानैः स विधुप्रभैः प्रभुः ॥ २ ॥
परार्ध्यवेशाभरणैः पुरःसरैः
समं जिहाने निषधावनीभुजि ।

धवलैः तथा विधूयमानैश्चाल्यमानैश्चामरैः स प्रभुर्नलः समुपासि वीज्यते स्म स्फुटमुत्प्रेक्षे । विभूषणानां रत्नखचितनिजमण्डनानामंशुषु किरणेषु प्रतिबिम्बितैः, तथा स्वभावदातैरत्युज्ज्वलैः, स्वमिश्रितवमन्द्यवंशीलैः, श्रुतशीलसौन्दर्यादिभिर्गुणैरिव प्रत्यक्षीभूतैर्नलगुणैरिव चामरैरुपासीत्यर्थः । चामराण्यपि विभूषणांशुप्रतिबिम्बितानि । स्फुटं निश्चितं । ईदृशैश्चामरैरेव गुणैरिति वा ॥ २ ॥

परार्ध्येति । निषधावनीभुजि नले परार्ध्यानि श्रेष्ठानि वेशाभरणानि रूपालङ्कारा येषां तैः पुरःसरैः समं सह जिहाने चलति सति वृत्रमाचष्ट इन्द्रः सुनासीर इति पदस्याभिधेयतां वाच्यत्वं यदि दधार तर्हि रूढिमात्रं दधार न तु शोभनं नासीरं सेनामुखं यस्येति यौगिकतया । शुद्धवृत्त्या मुख्यया वृत्त्या नले एव दृश्यते न त्विन्द्रे । त्रिविधाः शब्दाः केवलयौगिकाः केवलरूढाः योगरूढिकाश्च । तत्र पाचकादयो यौगिकाः । तैलपायिकादयो रौढिकाः । आतपत्रादयो योगरौढिकाः । तदेवं तादृशाग्रेसराभावादिन्द्रस्य सुनासीरपदवाच्यत्वं यद्यपि तर्हि रूढ्यैवास्तु व्युत्पत्त्या तु नल एवोचितमित्यर्थः ।

षोडशः सर्गः।

---

श्रीलक्ष्मीनृसिंहौ जयतः।

वृतः प्रतस्थे स रथैरथो रथी
गृहान् विदर्भाधिपतेर्धराधिपः।
पुरोधसङ्गौतममात्मवित्तमं
द्विधा पुरस्कृत्य गृहीतमङ्गलः॥१॥
विभूषणांशुप्रतिबिम्बितैः स्फुटं
मृशावदातैः स्वनिवासिभिर्गुणैः।

वृत इति। अथो रथारोहणानन्तरं रथैः कुन्ताः प्रविशन्तीतिवद्रथिभिर्वृतस्तथा रथी प्रशस्तरथोपेतः स धराधिपो नलः विदर्भाधिपतेर्गृहान् प्रति प्रतस्थे ययौ। किम्भूतः। आत्मवित्तमं ब्रह्मज्ञानिमध्ये श्रेष्ठं गौतमं गौतमसगोत्रं शतानन्दनामानं वा पुरोधसं द्विधा द्वाभ्यां प्रकाराभ्यां पुरस्कृत्याग्रे कृत्वा सम्पूज्य च विवाहे कार्यभारं तस्मिन्नारोप्य वा गृहीतानि स्वीकृतानि दध्यक्षतपूर्णकलशादीनि मङ्गलानि येन। रथैः सह वर्त्तमानैः पुरुषैर्वा प्रतस्थे। समवप्रविभ्यः स्थः (पा० १।३।२२) इति तङ्॥१॥

विभूषणेति। मृगेक्षणानां चामरधारिणीनां विधुप्रभेदच्छ-

मृगेक्षणानां समुपास्ति चामरै-
र्विधूयमानैः स विधुप्रभैः प्रभुः ॥ २ ॥
परार्ध्यवेशाभरणैः पुरःसरैः
समं जिहाने निषधावनीभुजि ।

धवलैः तथा विधूयमानैश्चाल्यमानैश्चामरैः स प्रभुर्नलः समुपास्ति वीज्यते स्म स्फुटमुत्प्रेक्षे । विभूषणानां रत्नखचितनिजमण्डनानामंशुषु किरणेषु प्रतिबिम्बितैः, तथा स्वभावदातैरत्युज्ज्वलैः, स्वस्मिन्निवसन्त्येवंशीलैः, श्रुतशीलसौन्दर्यादिभिर्गुणैरिव मत्यघोभूतैर्नलगुणैरिव चामरैरुपासीत्यर्थः । चामराण्यपि विभूषणांशुप्रतिबिम्बितानि । स्फुटं निश्चितं । ईदृशैश्चामरैरेव गुणैरिति वा ॥ २ ॥

परार्ध्येति । निषधावनीभुजि नले परार्ध्यानि श्रेष्ठानि वेशाभरणानि रूपालङ्कारा येषां तैः पुरःसरैः समं सह जिहाने चलति सति वृत्रशात्रव इन्द्रः सुनासीर इति पदस्याभिधेयतां वाच्यत्वं यदि दधार तर्हि रूढिमात्रं दधार न तु शोभनं नासीरं सेनामुखं यस्येति यौगिकतया । शुद्धवृत्त्या मुख्यया वृत्त्या नले एव दृश्यते न लिङ्गे । त्रिविधाः शब्दाः केवलयौगिकाः केवलरूढाः योगरूढिकाश्च । तत्र पाचकादयो यौगिकाः । तैलपायिकादयो रौढिकाः । आतपत्रादयो यौगरौढिकाः । तदेवं तादृशशोभनसेनाभावादिन्द्रस्य सुनासीरपदवाच्यत्वं यद्यस्ति तर्हि रूढ्यैवास्तु व्युत्पत्त्या तु नल एवोचितमित्यर्थः ।

दधे सुनासीरपदाभिधेयतां
स रूढिमात्राद्यदि वृत्रशात्रवः ॥ ३ ॥
नलस्य नासीरस्पृशां महीभुजां
किरीटरत्नैः पुनरुक्तदीपया ।
अदीपि रात्रौ वरयात्रया तया
चमूरजोमिश्रतमिस्रसम्पदा ॥ ४ ॥
विदर्भराजः क्षितिपाननुक्षणं
प्रभुर्गणाख्याततरत्वसत्वरः ।

इन्द्रादप्यधिको नलः । तत्पुरःसरास्तेन्द्रपुरःसरदेवेभ्योऽप्यधिका इति भावः । परार्द्धे भवानि परार्द्ध्यानि परावराधमोत्तमपूर्व्वाच्चेति (पा० ४।३।५) यत् । शत्रुरेव शात्रवः प्रज्ञादित्वात् स्वार्थे ऽण् । इन्द्रःश्रवाः सुनासीर इत्यमरः ॥ ३ ॥

नलस्येति । तया भैमीवरस्य नलस्य यात्रया रात्रौ अदीपि शुशुभे । किम्भूतया । नलस्य नासीरस्पृशां सेनायामग्रेसरीभूतानां महीभुजां राज्ञां किरीटरत्नैः स्वेनैवान्धकारनिराकरणात् पुनरुक्ता व्यर्थीकृता दीपा यस्यां तया । तथा चमूरजोभिर्मिश्रा सङ्कुला तमिस्रसम्पत्तिभिरसङ्घो यया । महान्धकारेऽपि रत्नदीपप्रकाशैर्भूयिष्ठप्रकाशत्वाददीपीत्यर्थः । महान्धकारे एव हि दीप्यः शोभन्त इत्यर्थः । राज्ञां सेनामुखायवर्त्तित्वेन नलस्य चक्रवर्त्तित्वं सूचितं । अदीपि । भावे लः ॥ ४ ॥

विदर्भेति । विदर्भराजो यान् क्षितिपानेव दूतान् अनुक्षणं

दिदेश दूतान् पथि यान् यथोत्तरं
चमूममुष्योपचिकाय तच्चयः ॥ ५ ॥
हरिद्विपद्वीपिभिरंशुकैर्नभो
नभस्वदाध्मापनपीनितैरभूत् ।

वारंवारं नलाकारणार्थं दिदेश प्राहिणोत्। तेषाञ्च यः पूर्व्वमेकः प्रेषितस्तदनन्तरश्चान्यः। एवमुत्तरोत्तरमनतिक्रम्य पथि अमुष्य नलस्य चमूमुपचिकाय भूयसीमकृत। किम्भूतः। शुभस्य चणस्य लग्नस्य समयस्यासन्नतरत्वेन नैकट्येन सत्वरो वेगवान्। भूयांसो नृपाः प्रेषिताः। दूता इत्यनेनादरातिशयः सूचितः ॥ ५ ॥

हरीति। तरस्वतां वेगवतां अश्वानां ध्वजिनी सेना, तरस्विनो ऽश्वा यस्यां सा वा, तस्य ध्वजभूतैरंशुकैर्वस्त्रनिमित्तैस्तथा नभस्वता वायुना कृतं यदाध्मापनं परिपूरणं तेन पीनितैः पुष्टीकृतैः सजीवसिंहादितुल्यैर्हरिभिः सिंहैर्द्विपैर्हस्तिभिर्द्वीपिभिर्व्याघ्रैः कृत्वा नत्तेनाधा उपरितनं नभश्चाकाशं वनं विपिनतुल्यमभूत् अजनि। किम्भूतं वनं। विचित्राणि नानावर्णानि चीनदेशोत्पन्नानि सूक्ष्माणि ध्वजसम्बन्धीनि चाम्बराणि वस्त्राणि तान्येव वल्लयो लतास्ताभिर्वेष्टितं वेष्टितं। वने सिंहाद्यो वृचा लताश्च सन्ति। ध्वजपदेन वृचा अपि लच्यन्ते। तरस्विनो ऽश्वा यस्य नलस्य तरस्वदश्वा वा या ध्वजिनी प्रकृतत्वात्तस्यैव सा ध्वजिनी नभसि नभस्वदाध्मापनपीनितैरंशुकै-

तरङ्गदश्वध्वजिनीध्वजैर्वनं
विचित्रचीनाम्बरवल्लिवेल्लितम् ॥ ६ ॥
भुवाऽऽह्वयन्तीं निजतोरणस्रजा
गजालिकर्णानिलखेलया ततः ।
ददर्श दूतीमिव भीमजन्मनः
स तत्प्रतीहारमहीं महीपतिः ॥ ७॥

ध्वजैः पताकाभिः कृत्वा वनमभूत्। किंभूता। ध्वजिनी हरिभिरश्वैर्हस्तिभिर्दीपिभिर्वा द्वीपान्तरवासिभिः सेनाचरीभूतैराजभिरुपलक्षिता। वनमपि सिंहादिभिरुपलक्षितं। विचित्रेति पूर्ववदिति वा। वनपक्षे चीनो मृगविशेषः। अर्द्धं विस्तृतलादम्बरगामिन्यो वल्लयः ॥ ६ ॥

भुवेति। ततः प्रस्थानानन्तरं स महीपतिर्नलस्तस्य भीमस्य प्रतीहारभूमिं भीमजन्मनो भैम्या दूतीमिव ददर्श। किंभूतां। द्वारे निबद्धा गजास्तेषामालिः पङ्क्तिस्तस्याः कर्णानिलेन कृत्वा खेलति चलतीति खेला तया निजया स्वीयया पुष्पदलरचितया तोरणस्रजा तल्लक्षणया भुवा अनुरागातिशयोत्सुकतया आह्वयन्तीं शीघ्रमागच्छेति भ्रूसंज्ञया आकारयन्तीं। दूत्यपि चलन्त्या भुवाह्वयति। राजगृहद्वारदर्शनेनातिमलरोऽभूदिति भावः। स्त्री द्वार्द्वारं प्रतीहार इत्यमरः। पचाद्यच्। प्रतीहारः। उपसर्गस्य घञीति (पा० ६।३।१२२) दीर्घः ॥ ७ ॥

श्लथैर्दलैस्तम्भयुगस्य रम्भयो-
श्चकास्ति चण्डातकमण्डिता स्म सा।
प्रिया सखीवास्य मनस्थितिस्फुरत्-
सुखागतप्रश्नितहर्षनिस्वना ॥ ८ ॥

श्लथैरिति। सा द्वारभूमिः रम्भयोः कदल्योर्द्वारमण्ड-नार्थं मङ्गलार्थञ्च रोपितस्तम्भयुगस्य छेदवशाद्वायुवशाद्वा श्लथैः शिथिलैर्दलैः पत्रैः छन्ना लम्बमानचण्डातकसम्बन्धेन वस्त्रेण मण्डिता भूषितास्य नलस्य प्रियाया भैम्याः सखीव चकास्ति स्म। किम्भूता सा। अनुरागवशान्मनसि अन्तःकरणे या न-लस्य स्थितिस्तया स्फुरन् सदा चित्तनिवासेनोल्लसन् यः सुखे-नागतस्यागमनस्य सम्बन्धी प्रश्नः सुखेनागत इत्येवंरूपः प्रश्नः स जातः प्रश्नितः सुखागतप्रश्नतां प्रापितस्तूर्यनिस्वनो यया सा। चिरप्रोषिते हि नायके समागच्छति सति प्रेयस्यां त्रपया तूष्णीं स्थितायां चण्डातकमण्डिता तत्सखी सुखागतप्रश्नं करोतीति स्थितिः। अत्र दलानि चण्डातकस्थाने। तूर्यनिस्वनाश्च सुखा-गतप्रश्नस्थाने। कदलीस्तम्भौ ऊरुस्थानीयौ। अर्द्धोरुकं वर-स्त्रीणां स्याच्चण्डातकमंशुकमित्यमरः। नृपाय मुक्तं पुरः पश्चाच्च प्रलम्बि वर्त्तुलभागद्वयं। कदलीसदृशं वस्त्रं नर्त्तकीभिरन्तःप-रिधीयमानं चण्डातकं। प्रश्नितेति। तत्करोतीति ण्यन्तान्निष्ठा न तारकादिः ॥ ८ ॥

तरखदश्वध्वजिनोध्वजैर्वनं
विचित्रचीनाम्बरवल्लिवेल्लितम् ॥ ६ ॥
भुवाऽऽह्वयन्तीं निजतोरणस्रजा
गजालिकर्णानिलखेलया ततः ।
ददर्श दूतीमिव भीमजन्मनः
स तत्प्रतीहारमहीं महीपतिः ॥ ७ ॥

ध्वजैः पताकाभिः कृत्वा वनमभूत्। किम्भूता। ध्वजिनी हरिभिरश्वैर्हस्तिभिर्द्वीपिभिर्वा द्वीपान्तरवासिभिः सेनाचरीभूतैराजभिरुपलक्षिता। वनमपि सिंहादिभिरुपलक्षितं। विचित्रेति पूर्व्ववदिति वा। वनपक्षे वनो मृगविशेषः। ऊर्द्धं विस्तृतत्वादम्बरगामिन्यो वल्लयः ॥ ६ ॥

भुवेति। ततः प्रस्थानानन्तरं स महीपतिर्नलस्तस्य भीमस्य प्रतीहारभूमिं भीमजन्मनो भैम्या दूतीमिव ददर्श। किम्भूतां। द्वारे निबद्धा गजास्तेषामालिः पङ्क्तिस्तस्याः कर्णानिलेन कृत्वा खेलति चलतीति खेला तया निजया स्वीयया पुष्पदलरचितया तोरणस्रजा तल्लक्षणया भुवा अनुरागातिशयोत्सुकतया आह्वयन्तीं शीघ्रमागच्छेति भ्रूसंज्ञया आकारयन्तीं। दूत्यपि चञ्चलया भ्रुवाह्वयति। राजद्वारदर्शनेनातिमनोरोऽभूदिति भावः। स्त्री द्वार्द्वारं प्रतीहार इत्यमरः। पचाद्यच्। प्रतीहारः। उपसर्गस्य घञीति (पा० ६।३।१२२) दीर्घः ॥ ७ ॥

श्लथैर्दलैस्तम्भयुगस्य रम्भयो-
श्चकास्ति चण्डातकमण्डिता स्म सा।
प्रिया सखीवास्य मनस्थितिस्फुरत्-
सुखागतप्रश्नितहर्यनिस्वना ॥ ८ ॥

श्लथैरिति। सा द्वारभूमिः रम्भयोः कदल्योर्द्वारमण्डनार्थं शकुनार्थञ्च रोपितस्तम्भयुगस्य छेदवशाद्वायुवशाद्वा श्लथैः शिथिलैर्दलैः पत्रैः कृत्वा लम्बमानचण्डातकसञ्ज्ञेन वस्त्रेण मण्डिता भूषितास्य नलस्य प्रियाया भैम्याः सखीव चकास्ति स्म। किम्भूता सा। अनुरागवशान्मनसि अन्तःकरणे या नलस्य स्थितिस्तया स्फुरन् सदा चित्तनिवासेनोल्लसन् यः सुखेनागतस्यागमनस्य सम्बन्धी प्रश्नः सुखेनागत इत्येवंरूपः प्रश्नः स कृतः प्रश्नितः सुखागतप्रश्नतां प्रापितस्तूर्यनिस्वनो यया सा। चिरप्रोषिते हि नायके समागच्छति सति प्रेयस्यां त्रपया तूष्णीं स्थितायां चण्डातकमण्डिता तत्सखी सुखागतप्रश्नं करोतीति स्थितिः। अत्र दलानि चण्डातकस्थाने। तूर्यनिस्वनाश्च सुखागतप्रश्नस्थाने। कदलीस्तम्भौ ऊरुस्थानीयौ। अर्द्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकमित्यमरः। नृपाय मुक्तं पुरः पश्चाच प्रलम्बि वर्त्तुलभागद्वयं। कदलीसदृशं वस्त्रं नर्त्तकीभिरन्तःपरिधीयमानं चण्डातकं। प्रश्नितेति। तत्करोतीति ण्यन्तान्निष्ठा न तारकादिः ॥ ८ ॥

विनेष्टभर्तृद्वयभीतिदान्तयोः
परस्परस्मादनवाप्तवैशसः।
अजायत द्वारि नरेन्द्रसेनयोः
समागमः स्फारमुखारवोद्गमः॥ ९॥
निर्दिश्य बन्धूनिति इत्युदीरितं
दमेन गत्वाङ्कपथे कृतार्हणं।
विनीतमाद्वारत एव पद्गतं
गतं तमैक्षिष्ट मुदा विदर्भराट्॥ १०॥

विनेष्टेति। नरेन्द्रौ भीमनलौ तयोः सेनयोः समागमो राजगृहद्वारि एवम्भूतोऽजायत जातः। किम्भूतयोः। विनेष्ट शासकं नलभीमलक्षणं भर्तृद्वयं तस्माद्भीतिस्तया दान्तयोः शान्तयोः। ताभ्यां नियमितत्वाद्दुःकलहादिसंरम्भयोः अत एव परस्परस्मादन्योन्यस्मादनवाप्तमलब्धं युद्धनिमित्तं वैशसं मारणं येन। सैन्यद्वयमेलने हि कलहो भवति परं सौहार्दान्नियमितत्वादनयोर्नाभूदित्यर्थः। तथा स्फारोऽतिमहान् मुखारवस्य स्फुटवर्णविशेषस्य मुखध्वनेरुद्गम उदयो यत्र॥ ९॥

निर्दिश्येति। विदर्भराड् भीमः मुदा उचितो जामातेति हर्षेण तमैक्षिष्ट नलमद्राक्षीत्। किम्भूतं। भीमेनैव सम्मुखं गत्वा बन्धून् सुहृदो भ्रातॄन् वा स्वमातापितृसम्बन्धिनो निर्दिश्य ज्ञाप्य प्रत्याप्य दमेन यथा आगम्यतामित्यादिप्रकारैरुदीरितमुक्तं। बन्धुमुखेन ज्ञापितमार्गं तथा दमाख्येन भैमीभ्राता

अथायमुत्थाय विसार्य्य दोर्युगं
मुदा प्रतीयेप तमात्मजन्मनः ।
सुरस्रवन्त्या इव पात्रमागतं
धृताभितोवीचिगतिः सरित्पतिः ॥ ११ ॥
यथावदस्मै पुरुषोत्तमाय तां
स साधुलक्ष्मीं वङ्गवादिनीश्वरः ।

ऽर्हंपथे कृताऽर्हणा ऽर्घ्यादिपूजा यस्मै । तयाऽनुद्धतवेगत्वादि-
नीतं । अत एव दारत आदारसीमामेवावधीकृत्य रथादुत्तीर्य
पद्गतां पादचारित्वं गतं प्राप्तं । दमेनैव बन्धून् पुरः प्रस्थाप्य इत
इत्युदीरितमिति वा । आदागतः पदद्वयं पद्गत इति, पादस्य
पदाऽऽज्यातिगोपहतेष्विति (पा० ६।३।५२) पादस्य पत् ॥ १० ॥

अथेति । अथ नलदर्शनानन्तरं अयं भीम उत्थाय प्रत्यु-
त्थानं कृत्वा आत्मजन्मनो भैम्याः पात्रं योग्यं आगतं तं नलं
दोर्युगं विसार्य्य प्रसार्य्य मुदा प्रतीयेप आलिलिङ्ग । कः कमिव ।
सरित्पतिः सुरस्रवन्त्या भागीरथ्या आगतं पात्रं प्रवाहमिव
नौकादिकं वा । किम्भूतः । धृतेऽभितः पार्श्वद्वये वीचीगती तरङ्ग-
परम्परे येन । वीचिततिरित्यपि पाठः ॥ ११ ॥

यथावदिति । अथालिङ्गनानन्तरं सद्योऽस्तां राज्ञां पति-
र्वङ्गवादिन्या ईश्वरः स्वामी स भीमः सर्व्वविदे सर्व्वविद्याविज्ञाय
शिवाय शुभश्रवणकीर्त्तनायात एव पुरुषोत्तमाय पुरुषश्रेष्ठा-
याऽस्मै नलाय साधुलक्ष्मीं समीचीनकायकान्तिं अत एव शिवां

शिवामथ स्वस्य शिवाय नन्दिनीं
ददे पतिः सर्व्वविदे महीभृताम्॥ १२॥
अखिलदद्यन्मधुपर्कमर्पितं
स तद्व्यधात्तर्कमुदर्कदर्शिनां।

शुभरूपां तां भैमीं स्वस्य नन्दिनीं कन्यां यथावद्वेदोक्तविधिना ददे। मधुपर्कात् पूर्व्वं कन्यादानमित्याचारः। मधुपर्कादिविधिपूर्व्वं ददे। दातुमारब्धवानिति वा। अथ वरुणदीश्वरः समुद्रः पुरुषोत्तमाय तां कन्यां लक्ष्मीं यथावद्देतत् साधु, तथा पर्व्वतराजो हिमालयः सर्व्वज्ञाय श्रीमहादेवाय स्वपुत्रीं पार्व्वतीं ददे तदपि साधु। यद्वा मैनाकादिपर्व्वतानां पालयिता समुद्रः शिवरूपाय विष्णवे शुभरूपां लक्ष्मीं ददे तत्साधु। अथ वा मन्ननदीयुक्तो हिमालयः पुरुषोत्तमरूपाय श्रीहराय पार्व्वतीरूपां लक्ष्मीं लक्ष्मीरूपां पार्व्वतीमिति वा। नलाय पुरुषोत्तमायेव शिवायेव भैमीं लक्ष्मीमिव शिवामिव भीमः समुद्र इव हिमवानिवेत्युपमालङ्कारो व्यज्यते। साधुलक्ष्मीमित्यत्र समासान्तविधेरनित्यत्वात् कबभावः॥ १२॥

इदानीं विवाहविधिमाह अखिलददिति। स नलः अर्पितं भीमेन दत्तं मधुमिश्रितं कांस्यपात्रस्थं दधिमधुघृतरूपं मधुपर्कं यदखिदन् आस्वादितवान् तदास्वादनं उदर्कदर्शिनां विपाकोत्तरफलपरिपाकभूताधरचुम्बनादिविचारिणां लोकानां हृति तर्कं ऊहं व्यधात् चक्रे। इति किं। यदस्मादेव नलो भीम-

यदेष पास्यन्मधु भीमजाधरं
मिषेण पुण्याहविधिं तदा कृतं ॥ १३ ॥
वरस्य पाणिः परघातकौतुकी
वधूकरः पङ्कजकान्तितस्करः।

जाधररूपं मधु पास्यन् पास्यति तस्मात् तदा मधुपर्कदानावसरे मधुपर्कास्वादनमिषेण पुण्याहविधिं शुभनक्षत्रादियुक्तपुण्यदिनकृत्यं मङ्गलपूर्व्वमुपक्रममकृत। अन्योऽपि शुभकार्य्यं करिष्यन् शुभविवाहदिनादौ तदीयमारम्भं करोति। तथा तेनापि भैम्यधरपाने मुहूर्त्तश्चक्र इति जनेन तर्कितमित्यर्थः। अधरस्यापि स्वादुत्वमुक्तम्। अमिषददिति। चैरादित्वात् स्वदेर्ण्यङ्। ये तमपि षोपदेशं मन्यन्ते तैः षत्वाभावश्चिन्त्यः। अमिषददिति पाठाभावादर्थस्य दुर्योज्यत्वाच्च चौरादिक एव। पास्यन्। लृटः सदिति (पा० ३।३।१२४) शता। पुण्यञ्च तदहश्चेति, राजाह इति(पा० ५।४।९१) टचि पुण्यसुदिनाभ्यामह्नःक्लीवतेति पुण्याहं तच्च विधिरिति विग्रहः ॥ १३ ॥

वरस्येति। वरस्य पाणिः परघातकौतुकी शत्रुमारणकुतूहली, वधूकरः पङ्कजकान्तितस्करः कमलश्रीचौरो यस्मात्तस्मात् कारणात् किमु सुराज्ञि राजन्वति तत्र तस्मिन्विदर्भमण्डले विदर्भराज्ये तौ वरवधूकरौ कर्कशैः कुशैः नितरां बद्धौ उभयहस्तयोः कुशबन्धनपूर्व्वकं पाणिग्रहणमभूत्। तत्र कुशबन्धने कारणोत्प्रेक्षा क्रियते। एको हिंस्रोऽपरश्चौर इति सापराधत्वात्

सुराज्ञि तौ तत्र विदर्भमण्डले
नतो निबद्धौ किमु कर्कशैः कुशैः ॥ १४ ॥
विदर्भजायाः करवारिजेन यन्
नलस्य पाणेरुपरि स्थितं किल ।
विशङ्क्य सूत्रं पुरुषायितस्य तद्
भविष्यतोऽस्मायि तदा तदालिभिः ॥ १५ ॥

किमु बद्धावित्यर्थः। अन्यत्रापि सौराज्ये अन्यघातकतस्करौ कठिनतरदोरकैर्बध्यते। पाणिग्रहणं जातमिति भावः। कुशैः पाणिबन्धनमाचारः, यथाक्रमं करयोः शौर्यं मार्दवञ्च सूचितं। सुराज्ञि। राजाहःसखिभ्यष्टच् (पा०५।४।९१) इत्यस्य नियततत्पुरुषविषयत्वादत्र बहुव्रीहिविषयत्वाट्टचः प्राप्त्यभावः ॥ १४ ॥

विदर्भेति। विदर्भजायाः करवारिजेन यत् तदा पाणिग्रहणसमये नलस्य पाणेरुपरि स्थितं तदुपरिस्थानं किल निश्चितं विपरीतरतेर्भविष्यतः पुरुषायितस्य पुरुषवदाचरितस्य विपरीतरतस्य इति यावत् सूत्रं सूचनाकारि विशङ्क्य विशेषेण सम्भाव्य कौतुकविलोकनार्थं निकटस्थिताभिस्तदालिभिरस्मायि ईषद्धसितं। विपरीतरते हि स्त्रीपाणिरुपरि भवति विवाहे वधूकरो वरकरस्योपरि भवति। सूत्रञ्च सूचनाग्रन्थ इति विश्वः ॥ १५ ॥

सखा यदस्मै किल भीमसंज्ञया
स यक्षसख्याधिगतं ददौ भवः।
ददे तदेष श्वशुरः सुरोचितं
नलाय चिन्तामणिदाम कामदं॥ १६॥
वहोर्दुरापस्य वराय वस्तुन-
श्चितस्य दातुं प्रतिविम्बकैतवात्।
वभौतरामन्तरवस्थितं दधद्
यदर्थमभ्यर्थितदेयमर्थिने॥ १७॥

इदानीमित आरभ्य न तेन वाहेष्विति यावद्विवाहोचितं यौतुकं प्रतिपादयति। सखेति। भीमसंज्ञया भीम इति नाममात्रेण सखा स्वस्यापि भीमनामत्वात् किलोत्प्रेक्षायां स भवो महेश्वरः अस्मै भीमाय यक्षेण कुवेरेण सह यत्सख्यं मैत्री तेनाधिगतं प्राप्तं यच्चिन्तामणीनां दाम मालां ददौ, एष श्वशुरो भीमः तत्कामदं सकलाभिलषितदायि सुराणामुचितं चिन्तामणिदाम नलाय ददे। उत्प्रेक्षायामेव तात्पर्य्यं। सुतोचितमिति पाठे भैम्युचितम्॥ १६॥

तदेव वर्णयति। वहोरिति। यच्चिन्तामणिदाम वभौतरां। किम्भूतं। वहोरपरिमितस्य तस्य तथा दुरापस्य दुर्लभस्य दिव्यस्य वराय जामात्रे दातुं चितस्य पुरः पुञ्जीकृतस्य रत्नहेमवसनादेर्वस्तुनः पदार्थसमूहस्य स्वस्मिन् प्रतिविम्बस्य कैतवाद्व्याजात् अन्तरवस्थितं स्वस्य मध्ये स्थितमर्थिने याचकायाभ्यर्थितं प्रार्थितं

असिं भवान्याः क्षतकासरासुरं
वराय भीमः स्म ददाति भासुरम्।
ददे हि तस्मै धवनामधारिणे
स शम्भुसम्भोगनिमग्नयाऽनया॥ १८॥

सत् तदानीमेव दातुमर्हं अर्थं वस्तुजातं दधत् धारयदिव। ददाविति पूर्वेण सम्बन्धः। यदा यदा यावद्याचिष्यते तदा तदस्तु तस्मै दातव्यमिति बुद्ध्यास्य नाम सार्थकीकर्तुं वस्तुजातं पुरःस्थापितमेवेत्यर्थः। भद्रेति भाषितपुंस्कं॥ १७॥

असिमिति। भीमः क्षतः कासराख्यो महिषाख्यो ऽसुरो येन तं भासुरं देदीप्यमानं भवान्या दुर्गाया असिं खड्गं वराय ददाति स्म। तस्याः खड्गस्तेन कथं प्राप्त इत्यत आह। हि यस्मात् स्फुटं वा शम्भुना सह सम्भोगस्तत्र निमग्नया सुरतरसासक्तया ऽनया दुर्गया वैरिदलनानन्तरं खड्गाः प्रयोजनाभावात् सुरतासक्तत्वे खड्गधारणस्य रसभङ्गकत्वाच्च धवनामधारिणे भीम इति शिवनामधारकाय शम्भुसेवकाय तस्मै भीमाय ददे। शम्भो सम्यगविच्छेदेन निरन्तरं भोगाय निमग्नया दक्षिणार्द्धेन प्रविष्टया या तदस्तु तया प्रसादो दत्तः। लुलायो महिषो वाहद्विषत्कासरसैरभा इत्यमरः। भासुरं। भञ्जभासेति (पा० ३।२।१६१) घुरच्॥ १८॥

अधारि यः प्राङ्महिषासुरद्विषा
कृपाणमस्मै नमदत्त कुकुदः ।
अदापि तस्या हि धवार्द्धसङ्गिना
स दक्षिणार्द्धेन पराङ्गदारणः ॥ १८ ॥
उवाह यः सान्द्रतराङ्गकाननः
स्वशौर्य्यसूर्य्योदयपर्व्वतव्रतम् ।

अधारीति। महिषासुरद्विषा दुर्गया प्राक् यः खड्गोऽधारि, कुकुदः कन्यादाता भीमः तं कृपाणं खड्गं सत्कारपूर्व्वं सालङ्कारमस्मै अदत्त। कथं तेन लब्ध इत्याशङ्क्याह। हि यस्माद्- र्धनारीश्वरत्वाद् धवस्य भर्त्तुः शिवस्य अर्द्धसङ्गिना अर्द्धप्रविष्टेन तस्याः पार्व्वत्या दक्षिणार्द्धेन दक्षिणशरीरभागेन पराङ्गदारणः स खड्गः अदापि त्यक्तः। सखड्गेन धववामार्द्धं विगता यदीयदक्षिणार्द्धेन तद्विदारिष्यते इति भिया त्यक्तः। अदा- यीति पाठेऽनर्थो न। तस्या दक्षिणार्द्धेन तस्मै यस्माद्दायी- त्यर्थः। अयं पाठः साधीयान्। सत्कृत्यालङ्कृतां कन्यां यो ददाति स कुकुद इत्यमरः॥ १८ ॥

उवाहेति। यः स्वस्य भीमस्य खड्गस्यैव वा शौर्य्यं प्रताप- रूपो यः सूर्य्यस्तस्योदयस्तत्सम्बन्धी पर्व्वत उदयाचलस्तस्य व्रतं नियमं सदा सूर्य्योदयकारित्वलक्षणं उवाहाधत्त। किम्भूतः। सान्द्रतराणि अत्यन्तानि सूक्ष्माणि अङ्गकानि अङ्गानि मुद्रामु- द्गरपत्रीवमौरूपाणि तेषां अननं जीवनं यत्र दधार इति

सनिर्झरः शाणनधौतधारया
समूढसन्ध्यः क्षतशत्रुजासृजा ॥ २० ॥
यमेन जिह्वा प्रहितेव या निजा
तमात्मजां याचितुमर्थिना भृशम्।

यावत्। सान्द्रतराणां वा पूर्वोक्तानामेवाङ्गानां काननं समूहो यत्र। उदयाचलपक्षे सान्द्रतराणि अङ्गेषु ऊर्ध्वाधोभागेषु वनानि यस्य। तथा शाणनेन, लोहकारचक्रघर्षणेन धौतया उज्ज्वलीकरणेन दत्तपानीयधारया कृत्वा सनिर्झरः सप्रवाहः। धारैव निर्झरीभूतेत्यर्थः। उदयाचलोऽपि सनिर्झरो भवति। तथा क्षतेभ्यः खण्डितेभ्यः शत्रुभ्यो जातेनासृजा रक्तेन कृत्वा सम्यक् ऊढा धृता प्रातःसन्ध्या येन। प्रातःसन्ध्यास्थाने रक्तमेव येन धृतमित्यर्थः। सम्यग्धृता सन्धात् सरूपः फलकसन्धिर्येन अतिदृढसन्धिरित्यर्थ इति वा। यद्वा क्षतशत्रुजासृजा समूढः प्राप्तः सन्धिर्यस्य त्सरुफलकसन्धिपर्यन्तं शत्रुशरीरे निमग्न इत्यर्थः। उदयाचलोऽप्यूढप्रातःसन्ध्य उदयाचलतुल्योऽभूदित्यर्थः। तमधत्तेति पूर्वेण सम्बन्धः। अङ्गकेतिपक्षे, अल्पे (पा० ५।३।८५) इति कः ॥ २० ॥

यमेनेति। स भीमः तामसिपुत्रिकां छुरिकामपि अशी ददे न केवलं खड्ग इत्यपरर्थः। न केवलं पुत्रीमपि तु छुरिकामपि। तां कां। भृशमर्थिना भैम्यनुरागिणा यमेन तं भीमं भैमीमह्यं देहीति आत्मजां याचितुं दूतीप्रेषणावसरे निजा स्वीया

स तां ददे ऽस्मै परिवारशोभिनीं
करग्रहार्हामसिपुत्रिकामपि ॥ २१ ॥
यदङ्कभूमौ बभतुः स्वयोषिता-
मुरोजपत्त्रावलिनेत्रकज्जले।
रणस्थलस्थण्डिलशायिलाव्रते
गृहीतदीक्षैरिव दक्षिणीकृते ॥ २२ ॥

श्रिता सेविता या जिह्वेव। नियतं प्राणहारित्वाद्यमजिह्वातुल्या अतितीक्ष्णा शौर्येण तुष्टो यमो तां भीमाय दत्तवान्। किंभूतां। परिवारशालिनीं चर्मकोशेन शोभमानां। अथ सखीलक्षणपरिजनशोभिनीं। करग्रहार्हां हस्तग्रहणयोग्यां साधुमुष्टिदेशां। पूर्वं यद्यपि भैमी दत्ता तथापि परिवारसाहित्येनेदानीं दत्तेत्यर्थः। छुरिकां सखीञ्च यौतकत्वेन ददाविति भावः। छुरिका चासिपुत्रिकेत्यमरः। याचिर्द्विकर्मा ॥ २१ ॥

यदिति। यस्याः असिपुत्र्या अङ्कभूमौ पट्टिकाया ऊर्द्ध्वाधोदेशौ स्वयोषितां स्वस्य स्त्रीणां उरोजपत्त्रावलिः कस्तूरिकालिखितस्तनपत्त्रवल्ली नेत्रकज्जलञ्च एते इव बभतुः शुशुभाते। किंभूते। रणस्थले या स्थण्डिलशायिता अलशायोर वेदिकायां शेते स स्थण्डिशायी तद्भाव एव व्रतं तत्र विषये गृहीता दीक्षा यैः स्त्रीकृतनियमविशेषेण भूपतितैः शत्रुभिः दक्षिणीकृते अतादक्षिणात्वेन प्रत्ते दत्ते। दीक्षायदेशिने हि स्त्रीणां रम्यमलङ्कारादि दक्षिणात्वेन दीयते छुरिकयैवं खकृतमारणद्वारा शत्रूणां रण-

पुरैव तस्मिन् समदेशि तत्सुता-
भिकेन यः सौहृदनाटिनाग्निना।
नलाय विश्राणयति स्म तं रथं
नृपः सुलंघ्याद्रिसमुद्रकापथं॥ २३॥

स्थलस्थण्डिलशायिताग्नमुपदिष्टं तस्मात्तस्यैते दक्षिणालेन दत्ते पत्रावलीनेत्रकज्जले इव। लोहमुद्गरश्यामवर्णैः स्तनपत्रावली-नेत्रकज्जललेनोन्मेचितैः इयं क्षुरिका निश्चितपरविदारणा वैरिनार्य्यस्य वैधव्यात्यक्तकज्जलपत्रावल्य इति। स्थण्डिलशायी-ति। स्थण्डिलाच्छयितरि व्रते (पा॰ ४।२।१५) इत्यण्॥ २२॥

पुरेति। तस्य भीमस्य सुतायां अभिकेनानुरागिणा यथा भैमी दातव्येति बुद्ध्या न प्रेषितः किन्तु शत्रुभराक्रान्तभूभा-रनिराकरणद्वारा त्वमस्माकं सुहृदिति प्रेषित इति सौहार्द-स्नेहं नाटयति, एवंशीलेनाग्निना पुरैव दूतीप्रेषणावसर एव यो रथः तस्मिन् भीमे समदेशि प्रेषितो दत्तः, नृपो नलाय तं रथ विश्राणयति स्म ददौ। किम्भूतं। सुलंघ्या अनायासेनाति-क्रमणीया अद्रयः अत्युच्चपर्व्वताः समुद्राः कापथा विषमनि-म्नगर्त्तादिरूपा मार्गाश्च यस्य। सर्व्वत्र सञ्चरणसमर्थं। कद्ध्वा का-पथः समा इत्यमरः। कापथ इति। कापथ्यक्षयोरिति (पा॰ ६।३।१०४) कादेशः। ऋगादिना (पा॰५।४।७४) समासा-न्तोऽप्॥ २३॥

प्रस्तवत्ता नलकूवरान्वय-
प्रकाशितास्यापि महारथस्य यत् ।

तमेव वर्णयति । प्रसूतेति । अस्यापि भीमेन नलाय दत्त-स्यापि महतो जवादिगुणयुक्तस्य रथस्य प्रकृष्टा सूतवत्ता सूतो विद्यते यस्य स सूतवान् तद्भावः सूतवत्ता सारथिमत्ता, प्रकृष्टस्वामी सूतस्य तदत्ता वा, यस्मान्नलस्य कूवरेण युगन्धरेण सहचोऽन्वयः सम्बन्धः, नलेन सह वा यः कूबरस्तस्यान्वयः, तेन प्रकाशिता प्रकटीकृता शोभिता च, तत्तस्माद्धेतोरेतस्य रथस्य पुष्पकवत्कामगामि धनदविमानवत् प्रकृष्टता उत्कृष्टगुणयुक्तता पुष्पकात् सकाशादा जवादिगुणैरधिकत्वात् कुवेरस्य दृष्टान्त उदाहरणं तस्य बलेन तत्सामर्थ्येनानुमीयते अनुमानजन्यज्ञानस्य विषयीक्रियते। न केवलं कुवेरस्य महारथस्य किन्त्वस्यापीति समुच्चयेन व्याप्तिदर्शनपुरःसरं उपनयन्निगमे सूचयत्यपिशब्दः। कुवेरस्यापि महारयस्यायुतसंख्यायुधसंयुक्तपुष्पकविमानेन कृत्वा प्रकृष्टता प्रकृष्टवस्तुमत्ता प्रकृष्टेन कृता तेनोह्यमानता वा भवति। एवं कुबेरदृष्टान्तबलेनाग्रे एतस्य पुष्पकप्रकृष्टता भविष्यतीत्यनुमीयते। यतोऽस्यापि कुवेरस्य नलकूवराख्येनान्वयेन सन्तानेन पुत्रेण प्रकाशिता प्रकटिता शोभिता प्रसूतवत्ता जनयितृता इति साधर्म्यदृष्टान्तः। शेषबलेनानुमानन्त्वेवं। विमतो महारथः पुष्पकः प्रकृष्टो भवितुमर्हति नलकूवरान्वयप्रकाशितप्रसूतवत्त्वात्। यो यो नलकूवरान्वयप्रकाशितप्रसूतवत्तावान् स पुष्पकः प्रकृष्टः। तथा कुवेर इत्यनुमानवशादेतत् सर्व्वमुच्यते

कुबेरदृष्टान्तबलेन पुष्पक-
प्रकृष्टतैतस्य ततोऽनुमीयते ॥ २४ ॥
महेन्द्रमुच्चैःश्रवसा प्रतार्य्य य-
न्निजेन पत्या कृतसिन्धुरन्वितम्।
स तद्ददेऽस्मै हयरत्नमर्पितं
पुरानुबद्धुं वरुणेन बन्धुताम् ॥ २५ ॥
जवादवारीकृतदूरदृक्पथ-
स्तथाक्षियुग्माय ददे मुदं नयः।

इति यथा कथञ्चित् श्लोको व्याख्येयः। किन्तु प्रकृष्टः सूतः पुत्र इति वा। पुष्पकस्य नलः सारथिर्नास्ति तेन तत्तुल्यता नास्ति। किन्तु तत्पतिना कुबेरेणेति, अस्य तु नलः सारथिरित्ययं रथो रमणीय इति भावः। कुबेरस्तु युगन्धर इत्यमरः ॥ २४ ॥

महेन्द्रमिति। सिन्धुः समुद्रो नाम्ना उच्चैःश्रवसा अस्य चोन्नतकर्णेन सलक्षणेनाथ च दीर्घकर्णेन दुर्लङ्घनेनाश्वेन महेन्द्रं प्रतार्य्य यद्धयरत्नं निजेन पत्या स्वस्वामिना वरुणेन अन्वितं युक्तमकृत वरुणायादत्तेत्यर्थः। स भीमस्तद्धयरत्नं अस्मै नलाय ददे। अनेन कथं तल्लब्धमित्यत आह। किम्भूतं। वरुणेन बन्धुताम-भीकमैत्रीं अनुबद्धुं वर्द्धयितुं पुरा दूतीप्रेषणावसरे ऽर्पितं भीमाय दत्तं। उच्चैःश्रवसोऽप्यधिकमश्वं तस्मै ददाविति भावः ॥ २५ ॥

जवादिति। योऽश्वो लोकानामक्षियुग्माय नेत्रयुग्माय दिदृक्षायाः स्वीयरूपदर्शनेच्छाया आदरस्य दासतां दासत्वं

ददद्दिदृक्षादरदासतां यथा
तथैव तत्पांशुलकण्ठनालताम् ॥ २६ ॥

ददानः पारवश्यं कुर्वन् जवाद्धेतोः अवारीकृतः अर्वाक्तिरोकृतो दूरो यस्य योजनो दृक्पथो नेत्रपथो येन दूरं गतत्वान्नेत्रयोरविषयः सन् यथा नेत्रयुग्माय मुदं प्रीतिं न ददे, दर्शनाभावात्प्रीतिं नोत्पादितवानित्यर्थः, तथा पुनरागमनसमयेऽपि तथैव दिदृक्षादरदासतया तस्य नेत्रयुगस्य पांशुलं रेणुयुक्तं कण्ठनालं यस्य तस्य भावस्तत्ता तां लक्षणयोत्कण्ठितत्वं ददन्मुदं न ददे। तमश्वं दद इति पूर्वेण सम्बन्धः। यथातथाशब्दौ व्यस्तौ योज्यौ। रूपादिविलोकनकौतुकिभिर्यावदश्वो द्रष्टुमारब्धस्तावद्वेगवशाद् दूरं गतत्वान्न दृष्टः। इदानीं यद्यपि न दृष्टस्तथापि व्याघुट्यागमनेऽवश्यं द्रक्ष्याम इति बुद्ध्या व्यापारान्तरपरित्यागपुरःसरं तद्रूपादिविशेषदर्शनादरात्तेत्रे प्रसार्य तथैव यावत् स्थितास्तावत् पुनरागमनसमयेऽपि खुरपुटक्षतक्षोणीरेणुसम्बन्धान्न दृष्टः। तथा चोभयथापि दर्शनाभावादुत्कण्ठाया अपरिपूर्णत्वान्नेत्रयुगस्य हर्षो नाभूदित्यर्थः। अतिजवनोऽश्व इति भावः। जवादप्रतिषिद्धो दूरो दृक्पथो येनातिदूरं नेत्राभ्यामनुगतमार्ग इति यावदेवंभूतो योऽक्षियुगाय दर्शनहर्षं तथाऽनादृत्य यथा दिदृक्षादरदासतां ददानः संस्तथैव तस्य नेत्रयुगस्य द्रष्टुर्वा शुष्ककण्ठत्वं ददे। निरन्तरदर्शनाभावात्तादृशी प्रीतिर्न जाता, किन्तु पूर्वोक्तप्रकारेण नेत्रयोर्द्रष्टुर्वा भूरेणुसम्बन्धात् शुष्ककण्ठ-

युग्मम्
दिवसतेरादरदर्शिनादरा-
द्ढौकि यस्तम्प्रति विश्वकर्म्मणा ।

त्वमेव जातमित्यर्थः। द्रष्टव्यदर्शनाद्धि दृष्टमार्गस्य प्रतिषेधो भवति अत्र तु वेगातिशयाद्दर्शनाभावात् प्रतिषेधस्तस्येति वा। अथ च जलरहितः कृतो दूरो दृष्टिगोचरो यो मार्गः स पिपासोर्नैवसुखाय हर्षं ददाति किन्तु जलावलोकने पारवश्यं तथापि पिपासोः शुष्ककण्ठत्वं वेत्युक्तिरिति वा। दासतामिति पाठे दिदृक्षादरस्य दानपात्रं ददावित्यर्थः। दाण् दाने, दाण्गोघ्नी सम्प्रदाने इति (पा॰ ३।४।७४) निपातनाद्दयतेऽस्मै इति दानपात्रं। पारावारे परार्वाचीतीरे पात्रमित्यमरः। पक्षे नास्ति वारि यस्मिन्सोऽवारिः। पक्षे वारणं वारः ण्यन्तात् घञ् स नास्त्यस्यासौ। अवारशब्दादवारिशब्दाच्च खिः ॥ २६ ॥

दिवसतेरिति। दिवसतेरिन्द्रस्य भैम्यनुरागवशाद्भीमं आदरदर्शिना विश्वकर्मणा यः तं भीमं प्रत्युद्दिश्य आदराद्ढौकि उपदारूपेण प्रेषितः स भीमस्तमेकं महापरिमाणं मापिक्यं तन्मयं तद्रूपं तन्निर्मितं वा महोऽस्तमत्युच्चं पतत् यावत् पतन् गण्डूषजलताम्बूलोद्गारादि गृह्णातीति ग्रहः तं नलेन प्रयोजन याचितवान् अङ्गीकारितवान् नलाय ददावित्यर्थः। प्रभोर्थश्रियादरः तं तदनुजीविनः स्वस्वभिन्येन सेवन्त इति लोकरीतिः। पतद्ग्राहः पतद्ग्रह इत्यमरः। दिवस्पतेः। तत्पुरुषे कृतीति (पा॰ ६।३।१४) याऽऽत्मकात् षष्ठ्या अलुकि कस्कादि-

तमेकमाणिक्यमयं महोन्नतं
पतद्ग्रहं ग्राहितवान्नलेन सः॥ २७॥
नलेन ताम्बूलविलासिनोज्झितै-
र्मुखस्य यः पूगकणैर्भृतो न वा।
इति व्यवेचि स्मयूखमण्डला-
दुदञ्चदुच्चारुणचारुणश्चिरात्॥ २८॥

त्वादिसर्जनीयस्य (पा० ८।३।४३) षः। षष्ठ्याः पतिपुत्रेति (पा० ८।३।५३) छन्दोविषयत्वात् लोके गत्यर्थसकर्मकत्वात् कर्मणि णिच्। पतत् गृह्णातीति पतद्ग्रहः। पचाद्यचि (पा० ३।१।१३४) पतता ग्रह इति (पा० ३।३।५८) अप्॥ २७॥

नलेनेति। उदञ्चदुच्चारुणचारुण उदित्वरोन्नतसूर्यवद्वा सुन्दरादतिरक्तात् ऊर्द्धप्रसरत्किरणोऽतिशयितो यः स्वीयो रूपगुणस्तेन चारोर्वा रक्ततरात् स्वमयूखस्य मण्डलात् सन्ना-द्धेतोः ताम्बूलविलासिना ताम्बूलरसमास्वादिना पूगनागवल्लीदलखण्डत्यागिना नलेन गृहीतरसत्वात् उज्झितैस्त्यक्तैर्माणिक्यशकलसदृशैरङ्गाररूपैः पूगकणैः क्रमुकाल्पशकलैः अयं भृतः पूरितो न वा पूरित इति यः पतद्ग्रहः चिराद्भूयसा कालेन सूक्ष्मेक्षिकया क्रमेण मुक्तसंशयैर्लोकैर्व्यवेचि निश्चितस्तं ग्राहितवानिति पूर्व्वेण सम्बन्धः। समीपं गत्वा सूक्ष्मेक्षिकयाऽयमिदानीं पूगकणैः भृत इति निश्चितः कदाचित् कदाचिच्च इदानीं न भृत इत्यपि निश्चित इत्यर्थः। भृताभृतत्वसन्देहे रक्तमयू-

मयेन भीमं भगवन्तमर्चता
नृपेऽपि पूजा प्रभुनाम्नि या कृता।
अदत्त भीमोऽपि स नैषधाय तां
हरिन्मणिर्भोजनभाजनं मयत्॥ २९ ॥
छदे सदैव च्छविमस्य बिभ्रतां
न केकिनां सर्पविषं प्रसर्पति।

खमण्डलं हेतुः। माणिक्यमयत्वादतिरक्त इत्यर्थः। इदानीं ग्राम्लस्थानवशराह्नाविन्युपचारे भूतवदित्युपचारः। यद्वा तस्यैवारक्तताञ्जनश्चोद्गारत्यागभ्रमः। अमी पूगकणाः किंवा किरणसमूहा इति सन्देहस्थिरान्निर्णीत इति वा ॥ २८ ॥

मयेनेति। भगवन्तं षड्गुणैश्वर्य्यसम्पन्नं भीमं शिवमर्घादिभिरुपचारैरर्चता पूजयता शैवेन मयनाम्ना ऽसुरेण प्रभुनाम्नि शिवनामधारके नृपेऽपि भीमेऽपि या पूजा कृता उपदा अकारि स भीमोऽपि तां पूजां पूजारूपहरिन्मणेर्गारुडमणिसम्बन्धि विपापहारसमर्थं अतिविकृतं भोजनार्थं भाजनं नैषधायादत्त मयेन तस्मै दत्तं सोऽपि नलायादत्तेति। अपिशब्दः समुच्चयार्थः। अर्थपतिर्भावादिकः॥ २९ ॥

छद इति। अस्य भोजनपात्रस्य छविं नीलां द्युतिं सदैव छदेऽपि बिभ्रतां केकिनां मयूराणां सर्पविषं न प्रसर्पति तच्छरीरं नाक्रामतीत्यर्थः। स भगवान् शिवोऽस्य पात्रे एतदाधारत्वेन कालकूटभेदभोग्यम् तर्हि नीलकण्ठत्वं साधारणम्। अथ

न नीलकण्ठत्वमधास्यदत्र चेत्
स कालकूटं भगवानभोच्यत् ॥ ३० ॥
विरोध्य दुर्वाससमस्खलद्दिवः
स्रजं त्यजन्नस्य किमिन्द्रसिन्धुरः।
अदत्त तस्मै स मदच्छलात् सदा
यमभ्रमातङ्गतयेव वर्षुकं ॥ ३१ ॥

पात्रे विषभक्षणे कृते सति तज्जीर्णतया नीलकण्ठत्वं न स्यादित्यर्थः। लिङ् निमित्ते लृङ् क्रियातिपत्तौ (पा०३।३।१३८) इति लृङ्। भुजोऽनवन इति (पा०१।३।६६) तङ् ॥ ३० ॥

विरोध्येति। स भीमस्तस्मै नलाय मदच्छलाद् दानजलव्याजात् सदा वर्षुकं वर्षणशीलं यं हस्तिनं अदत्त स दुर्वाससं विरोध्य रोषयित्वा तच्छापादिन्द्रसिन्धुर ऐरावतो दिवः सकाशादस्खलत् पतितः किं। भुवमागत ऐरावणः किमित्यर्थः। विरोधे हेतुः। अस्य दुर्वाससः स्रजं मालां त्यजन् भुवि क्षिपन्। अत्र पौराणिकी कथा। कदाचिदैरावतमारुह्य गच्छते इन्द्राय दुर्वाससा प्रसादेन मन्दारपुष्पमाला दत्ता सा चेन्द्रेण करीन्द्रकुम्भे स्थापिता स तां शुण्डादण्डेनाधश्चिक्षेप ततः कुपितेन मुनिना त्वमपि मालावदधः पतेति शप्तः तन्मूलेयमुत्प्रेक्षा। वर्षुकत्वे पुनरुत्प्रेक्षते। अभ्रमातङ्गतया ऐरावतत्वेनैव। ऐरावतो हि सदा मदजलं स्रवति अयमपि तावत् स्वर्गाद्भ्रष्टः स एवेति सदा दानजलं मुञ्चतीत्यर्थः। अभ्रवन्मातङ्गस्तत्तया वा श्यामलात् सजलघनतुल्य

मदान्मदर्थे भवताथवा भिया
परं दिगन्तादपि यात जीवत।
इति स्म यो दिक्करिणः स्वकर्णयो-
र्विनाद वर्णस्रजमागतैर्गतैः ॥ २२ ॥
बभार बीजं निजकीर्त्तये रदौ
द्विपामकीर्त्यै खलु दानविप्रुषः।

इत्यर्थः। अस्य भीमस्य सम्बन्धिलेनास्खलत्किमिति वा। वर्पुकं लपपते (पा० ३।२।१५४) त्युकञ् ॥ २१ ॥

मदादिति। यो गजः स्वकर्णयोरागतैर्गतैरागमनैर्गमनैश्च क्वला वर्णस्रजं वर्णमालां विनैव दिक्करिणो दिग्गजान् प्रति इत्याह स्मेव। इति किं। भो दिग्गजाः भवतां बलाभिमानर्थे-दस्ति तर्हि मदाद् युद्धं कर्त्तुं यूयं मदर्थे भवत मम पुरस्तात्ति-ष्ठत। अथवा चेन्मदो नास्ति तर्हि भिया दिगन्तस्था यूयं दिग-न्तादपि परं यात गच्छत। पलायिताश्च सन्तः तत्रैव सुखेन जीवत स्वप्राणान् रक्षत। इयं लुप्तोत्प्रेक्षा ॥ २२ ॥

बभारेति। यो गजो निजकीर्त्तये रदौ दन्तौ बीजं कारणं ब-भार, द्विपामकीर्त्यै दानविप्रुषो दानोदबिन्दूनेव कारणं बभार। उत्प्रेक्षायां। दन्ताभ्यां परविदारणात् स्वस्य यशःसमुत्पत्तेस्त-योः कीर्त्तिकारणत्वम्। अथ च कीर्त्तिलक्षणस्य शुभ्रत्वात् कारणे-नापि तादृशेनैव भवितुं युक्तमिति। दन्तौ कीर्त्तिबीजभूतकन्दा-विव मदजलगन्धाघ्राणमात्रेण परगजानां भङ्गात् दानबिन्दूनां

अवःश्रमैः कुम्भकुचां शिरःश्रियं
मुदे मदस्वेदवतीमुपास्त यः ॥ ३३ ॥
न तेन वाहेषु विवाहदक्षिणी-
कृतेषु सङ्ख्यानुभवेऽभवत् क्षमः ।
न शातकुम्भेषु न मत्तकुम्भिषु
प्रयत्नवान् कोऽपि न रत्नराशिषु ॥ ३४ ॥

तदकीर्त्तिलक्षणत्वं । कार्यस्य श्यामत्वात् कारणेनापि तादृशेनैव भवितुं युक्तमिति श्यामदानबिन्दव एवाकीर्त्तेर्बीजमिवेत्युत्प्रेक्षा। तथा मुहुर्मुहुर्गतागतैः अवःश्रमैः कर्णप्रयासैरेव व्यजनचालनैः कृत्वा कुम्भाविव कुचौ यस्यास्तां मदस्वेदवतीं दानरूपघर्मोदकयुक्तां शिरःश्रियं घर्मजलापहरणद्वारा तस्या एव मुदे हर्षाय उपास्त सिषेवे। एवम्भूतं शिरो दधानः प्रीतिमुदपादयदित्यर्थः। कामकेलिखिन्नाङ्कुम्भकुचां कामिनीं स्वेदमपनयन् कामी तालवृन्तचालनेन वीजयतीति मदस्य स्वेदरूपेण शिरःश्रियः स्त्रीत्वरूपणम्। अधत्तेत्यपि पाठः ॥ ३३ ॥

नेति। तेन भीमेन नलाय विवाहे दक्षिणीकृतेषु कन्यादानदक्षिणात्वेन दत्तेषु वाहेषु रथादिषु तुरङ्गेषु वा सङ्ख्यानुभवे सङ्ख्याज्ञाने प्रयत्नवानपि कोऽपि कश्चिदपि न क्षमः दायन्तो वा दत्ता इत्येवं सङ्ख्यापरिच्छेदे समर्थो नाभवत्, तथा शातकुम्भेष्वनेकभूषणभूतघटिताघटितकाञ्चनेषु न, तथा मत्तकुम्भिषु गलन्मदमातङ्गेषु न, तथा रत्नराशिषु न क्षमोऽभवदिति। सर्वत्र विवाहद-

करग्रहे वाम्यमधत्त यस्तयोः
प्रसाद्य भैम्या नु च दक्षिणीकृतः।
कृतः पुरस्कृत्य ततो नलेन स
प्रदक्षिणस्तत्क्षणमाशुशुक्षणिः ॥ ३५ ॥

क्षिणीकृतेष्विति च। बहुतरं यौतुकं दत्तवानीति भावः ॥ ३४ ॥

करेति। य आशुशुक्षणिरग्निस्तयोः करग्रहे विवाहे विषये वाम्यं वक्रत्वं अधत्त भेजे। भैम्यभिलाषान्नलाकारधारणादिद्वारा पूर्वं विरुद्धोऽभूदनु च पश्चान्नलवरणावसरे भैम्या स्तुतिध्यानादिना प्रसाद्य सन्तोष्य दक्षिणीकृतः आनुकूल्यं नीतः सोऽग्निः। ततः पाणिग्रहानन्तरं नलेन पुरस्कृत्योल्लेखनादिसंस्कारपूर्वमग्रे प्रतिष्ठाप्य तत्क्षणं तस्मिन्विवाहसमये प्रदक्षिणः प्रकर्षेणापसव्यः कृतः प्रदक्षिणभागेन वलयाकारेण वेष्टितः। अथ च यः पूर्वं यौतकदानकाले वामभागेऽभूत् पश्चाद्भैम्या फूत्कारादिना प्रसेध्यानुकूलः कृतः। अथ च दक्षिणभागे कृतः सोऽर्चनादिभिः सम्पूज्य नलेन सुतरामनुकूलः कृतः। अथ च प्रकर्षेण दक्षिणभागे कृतः। अन्योऽपि महान् पूर्वं विरोध्यते स विवादादौ प्रसाद्यानुकूल्यः क्रियते इत्युक्तिः। अत्र कश्चित् कश्चिद्विधिक्रमभङ्गो देशाचाराच्छाखाभेदात् कुलाचारविशेषाद्वा ज्ञेयः। न पुनः श्रीहर्षकवेरज्ञानमित्योऽपि। अत एव पूर्वं यथाविधीति साधुरुक्तः। आशुशुक्षणिः। आशाशुमिच्छति आङ्पूर्वात् शुषेः सन्नन्तात् अनिः साधुः। निरुपयुक्तत्वाद्भाषायामपि साधुत्वं ज्ञेयम् ॥ ३५ ॥

स्थिरा त्वमश्मेव भवेति मन्त्रवा-
गनेशदाशास्य किमाशु तां क्रिया।
शिला चलेत् प्रेरणया नृणामपि
स्थितेस्तु नाचालि विडौजसापि सा॥ ३६ ॥
प्रियांशुकग्रन्थिनिबद्धवाससं
तदा पुरोधा विदधे विदर्भजां।

स्थिरेति। हे भैमि इममश्मानमारोहेत्युच्चार्य्य त्वं अश्मेव स्थिरा भवेति नलेनोच्चारिता मन्त्ररूपा वाक् तां भैमीमाशास्य शिलावन्निश्चला भवेति तस्यै आशिषं दत्वा आशु अनेशत् अनाशत्। उच्चारिता वर्णा अध्वस्ता भवन्ति। तयोच्यते क्रिया किं। किमिति तस्या लब्जेत्यत आह। शिला अल्पतेजसां नृणामपि प्रेरणया करचरणव्यापारमात्रेण चलेत् स्वस्थानादन्यत्र गच्छेत् सा तु भैमी पुनः अतिप्रभाविणा विडौजसा इन्द्रेणापि स्थितेः मनोव्यापारमात्रस्वीकृतनलपतित्वरूपाया मर्यादायाः सकाशान्नाचालि। पतिव्रताशीमा न त्याजितेति स्थिरतरत्वेनाधिकाया भैम्या अहं हीनेति सदोषं विचिन्त्य लज्जैव नष्टेत्यर्थः। वैधमश्मारोहणं तेन कारितमिति भावः। नश अदर्शने अस्माल्लुङि पुषादित्वादङि नशिमन्योरलिट्येत्वमिति (पा०६। ४।१२०।वा०२) एत्वे रूपं॥ ३६॥

प्रियेति। तदा वह्निसन्निधिकाले पुरोधा गौतमो विदर्भजां प्रियस्य नलस्यांशुकेन सह ग्रन्थिना निबद्धं वासो यस्यास्तामेवं-

जगाद विच्छिद्य पटं प्रयास्यतो
नलादविश्वासमिवैष विश्ववित्॥ ३७ ॥
ध्रुवावलोकाय तदुन्मुखभ्रुवा
निर्दिश्य पत्याभिदधे विदर्भजा।

विधां विदधे चकार। उत्प्रेक्षते। पटं विच्छिद्य कर्त्तित्वाऽरण्ये भैमीं विहाय प्रयास्यतो गमिष्यतो नलात् सकाशादेष पुरोधा अविश्रामं विश्रामाभावं जगादेव। वस्त्रं छित्त्वा त्वां हित्वाऽयं गमिष्यतोऽस्यैतस्य विश्रामो न कार्यं इत्यस्य वस्त्रेण सह स्ववस्त्रस्य ग्रन्थिं दत्त्वैवानेन सह विचरणीयमित्युवाचेत्यर्थः। कथमेतज्ज्ञातमत आह। यतो विश्वं सर्व्वं वेत्तीति कालत्रयज्ञ इत्यर्थः। तस्माद्भविष्यदपि तेन ज्ञातमित्यर्थः। कलिना पराभूतो नलो द्यूतदारा हारितसर्व्वस्वः स्वीयैस्त्यक्तो द्वापरेण कलिना पक्षिरूपेण तद्वारणार्थं विक्षिप्तस्य स्ववस्त्रस्यापहाराद्वस्त्रान्तराभावाद्भैमीवस्त्रार्द्धधारी सन् निद्राणायास्तस्या वस्त्रार्द्धं विच्छिद्य तां महारण्ये तत्याजेति भारते कथा। वैधमुभयवस्त्रग्रन्थिबन्धनं तेन कृतमिति भावः। विदधदिति पाठे कुर्व्वन् सन्निति योजना॥ ३७॥

ध्रुवेति। तस्य ध्रुवस्य दर्शनार्थमुन्मुखी भ्रूर्यस्य तेन पत्या समेन विदर्भजा निर्दिश्याज्ञाप्य ध्रुवस्यावलोकनार्थं अभिदधे उक्ता। तदुन्मुख्या भ्रुवा कृत्वा संज्ञाप्येति वा। न तु स्थूलस्य ध्रुवस्य स्वयंदर्शनयोग्यत्वात् सा स्वयमेव तं पश्येत्। तेन किमिति

किमस्य न स्यादणिमाक्षिसाक्षिक-
स्तथापि तथ्यो महिमाऽऽगमोदित ॥ ३८ ॥
धवेन सादर्शि वधूररुन्धतीं
सतीमिमां पश्य गतामिवाणुताम्।

दर्शनं कारितमित्यत आह। अस्य ध्रुवस्य अणिमा सूक्ष्मप्रमाणत्वं अक्षिसाक्षिको नेत्रगोचरः किं न स्यादपि तु स्यादेव यद्यपि तथापि स्वयदर्शनयोग्यत्वेऽपि आगमोदितो महिमा वेदोक्तं गौरवं सत्योऽस्त्विति शेषः। श्रुत्युक्तं हि प्रमाणमित्यर्थः। श्रुतिर्हि ततो वधूं ध्रुवमीक्षयतीति ध्रुवे दर्शिते ध्रुवं पश्यामि प्रजां विन्देय इति सा ब्रूयात् तस्मात् स्वयं द्रष्टुमशक्यत्वेऽपि नल एवादर्शयदिति युक्तमित्यर्थः। वैध ध्रुवदर्शनं कारितमिति भावः। एतत् सर्व्वं कविवचः। अथ च यद्यस्याणुत्वं सत्यं तथापि ज्योतिःशास्त्रोक्तं ध्रुवमण्डलस्य महापरिमाणत्वं सत्यमेव ॥ ३८ ॥

धवेनेति। सा वधूर्धवेन नलेन अणुतामतिसूक्ष्मत्वं गतामिमां सतीं पतिव्रतामरुन्धतीं त्वं पश्येत्युक्त्वा अदर्शि दर्शिता। तत्राणुत्वे उत्प्रेक्षते। वरणात् पूर्वमेव हृदि कृतस्य मनोरथमात्रेण हृदये कृतस्य भूपतेः कृते तृणीकृतस्वर्गपतेः तृणवलाघवेन त्यक्त इन्द्रो येनैवम्भूतान्नलादिव लज्जयेति शेषः। अहं हि परिणीता सतीन्द्रं तृणप्रायमकरवं भैमी तु हृदि धारणमात्रादेवेति। सत्त्वाऽपीयमेवाधिका सतीति भैम्या सकाशादल्पत्वेन कृशामित्यर्थः। स्वतः कृशत्वमेव उत्प्रेक्षितं। भूपतेर्नलादिति

कृतस्य पूर्वं हृदि भूपतेः कृते
तृणीकृतस्वर्गपतेर्जनादिति ॥ ३९ ॥
प्रसूनता तत्करपल्लवस्थितै-
रुडुच्छविर्व्योम्नि विहारिभिः पथि ।
मुखेऽमराणामनले रदावले-
रभाजि लाजैरनयोज्झितैर्द्युतिः ॥ ४० ॥
तया प्रतिष्ठाङ्गनिधूमपद्धति-
र्गता कपोले मृगनाभिशोभिताम् ।

शब्दद्वयसामान्यवाच्यपि नलभैमीलक्षणे विशेषे पर्यवस्यति। वैधमरुन्धतीदर्शनं कारितमिति भावः। अदर्शि। ण्यन्ताच्चिण्। अभिवादिदृशोरिति (पा० १।४।५३ वा० १) अणौ कर्त्तुर्णौ कर्मत्वं। तस्य चाभिहितत्वाद् द्वितीयाभावः ॥ ३९ ॥

प्रसूनतेति। तस्याः भैम्याः करयोरेव पल्लवयोः स्थितैर्वर्त्तमानैर्लाजैः प्रसूनता पुष्पत्वं अभाजि प्राप्ता। पल्लवेषु च पुष्पाणि युक्तानि तथा अनया भैम्या उज्झितैः करान्मुक्तैर्व्योम्नि विहरणशीलैः सद्भिः पथि करादग्न्यन्तरालरूपे मार्गे उडुच्छविर्नक्षत्रशोभा भेजे। व्योम्नि नक्षत्राणि युक्तानि। तयाऽमराणां मुखे ऽनले ऽनया उज्झितैः रदावलेः दन्तपंक्तेर्द्युतिः शोभा भेजे। मुखे दन्तपंक्तिर्युक्ता। वैधो लाजहोमस्तया कृत इति भावः ॥ ४० ॥

तयेति। तया भैम्या प्रतिष्ठा करकुड्मलाभ्यां स्तोकता आङ्गनिधूमपद्धतिः हूयमानलाजादिद्रव्यसम्बन्धिनी धूमपरम्परा

यथौ दृशोरञ्जनतां श्रुतौ श्रिता
तमाललीलामलिकेऽलकायिता ॥ ४१ ॥
अपह्नुतः स्वेदभरः करे तयो-
स्तपाजुषोर्दानजलैर्मिलन्मुहुः ।
दृशोरपि प्रस्तुतमस्रु सात्त्विकं
घनैः समाधीयत धूमलङ्घनैः ॥ ४२ ॥

कपोले मृगनाभिशोभिता कस्तूरीशोभा जाता प्राप्ता । तत ऊर्द्ध्वं गच्छन्ती दृशोश्चक्षुषोरञ्जनतां ययौ प्राप । ततोऽप्यूर्द्ध्वं गच्छन्ती श्रुतौ कर्णयोस्तमाललीलावतंसभूते तमालदलमाहात्म्ये श्रिता । ततोऽप्यूर्द्ध्वतरं गच्छन्ती अलिके ललाटे ऽलकायिता चूर्णकुन्तलवदाचरिता तत्तुल्या जातेत्यर्थः । कपोले कस्तूरी दृशोरञ्जनं श्रुतौ तमालं ललाटे चालका इति युक्तम् । वैधधूमग्रहणं छलमिति भावः । मृगनाभिशोभीति । कर्तर्युपमान इति (पा० ३।२।७८) णिनौ मृगनाभिशोभिनी तस्या भावस्तत्ता, त्वतलोरिति (पा० ६।३।३५ वा० २) पुंवत् ॥ ४१ ॥

अपह्नुत इति । तपाजुषोर्लज्जावतोस्तयोः करे वर्त्तमानः स्वेदभरः सात्त्विकघर्मजलसङ्घो दानजलैर्ब्राह्मणेभ्यो दक्षिणादानार्थं उत्सृष्टैः सङ्कल्पजलैः सह मुहुर्वारं वारं मिलन् सम्बन्धं प्राप्नुवन् सन् अपह्नुतः दानजलयोगात् सात्त्विकः स्वेदोऽयमिति लोकेन न ज्ञात इत्यर्थः । करे मुहुर्मिलन् पुनः पुनरुद्भवन् दानजलैरपह्नुत इति वा । तत्रापि कामविकारवशात् स्वेदं लोको

वह्नि भीमस्य वसूनि दक्षिणां
प्रयच्छतः सत्त्वमवेक्ष्य तत्क्षणं।
जनेषु रोमाञ्चमितेषु मिश्रतां
ययुस्तयोः कण्टककोरकश्रियः ॥ ४३ ॥
बभूव न स्तम्भविजित्वरी तयोः
श्रुतिक्रियारम्भपरम्परात्वरा।

ज्ञास्यतीति भिया वा। द्वयोरपि सम्बन्धि प्रसृतं गलितं सात्त्विकं कामविकारजमम्बु घनैः सान्द्रैर्धूमखड्गैर्धूमाक्रमणैः छला समाधीयत परिहृतं ताभ्यामित्यर्थात् तैरेव कर्त्तृभिरपलपितं वा। परस्परस्पर्शात्तयोः स्वेदादयः सात्त्विकाः प्रवृत्ता इति भावः॥४२॥

वह्नीति। वह्नि वसूनि दक्षिणां प्रयच्छतो दक्षिणात्वेन ददतो भीमस्य सत्त्वं दानशौण्डत्वमवेक्ष्य तत्क्षणं तस्मिन्नेव क्षणे आश्चर्यातिशयेन रोमाञ्चमितेषु प्राप्तेषु जनेषु मध्ये तयोर्भैमीनलयोरपि कण्टककोरकश्रियः कण्टककलिकाशोभा मिश्रिताम् ऐक्यं प्रापुः। सात्त्विकोऽपि रोमाञ्चो ऽन्यजनवदाश्चर्यादयं जात इत्युपलक्षित इति भावः ॥ ४३ ॥

बभूवेति। श्रुतिक्रियाया वेदविहितलाजाहोमाग्निपरिभ्रमणादिकाया आरम्भस्य परम्परा एकस्मादनन्तरमन्यस्यारम्भस्तस्मादनन्तरमन्यस्यैवमव्यवहितो य उत्तरोत्तरभावस्तद्विषयकत्वरा वेगिता, तयोरवश्यापेक्षितायामपि कर्मवेगितायां सात्त्विकजनितत्वाद्रवमनात्मकस्य स्तम्भस्य विजित्वरी जयनशीला

न कम्पसम्पत्तिमलुम्पदग्रतः
स्थितोऽपि वह्निः समिधा समेधितः ॥ ४४ ॥
दमस्वसुः पाणिममुष्य गृह्णतः
पुरोधसा संविदधेतरां विधेः ।
महर्षिणेवाङ्गिरसेन साङ्गता
पुलोमजामुद्वहतः शतक्रतोः ॥ ४५ ॥

न बभूव तन्नापललाप। स्तम्भवशात्तौ किमपि कर्म शीघ्रं कर्त्तुं समर्थौ नाभूतामिति भावः। तथा समिधा यज्ञकाष्ठेन समेधितः संवर्द्धितो वह्निरपि अग्रतः स्थितः सन् तयोः कम्पसम्पत्तिं सात्त्विककम्पवाहुल्यं नालुम्पत् न शमयति स्म। शीतजं हि कम्पमग्निः शमयति न तु सात्त्विकं तस्य तथासमर्थत्वादित्यर्थः। तयोरन्यःसात्त्विकापलापेऽपि स्तम्भकम्पौ लोकैर्ज्ञाताविति भावः। अवर्त्ततास्यपीति पाठे न स्तम्भविजितरीति नञ्समासः। अलुम्पत्। शे मुचादीनामिति (पा०७।१।५९) नुम् ॥ ४४ ॥

दमेति। दमस्वसुः पाणिं गृह्णतोऽमुष्य नलस्य सम्बन्धिनो वैवाहिकस्य श्रौतस्य विधेः साङ्गता ऽङ्गसाहित्यं पुरोधसा संविदधेतरां नितरां साकल्येन चक्रे। प्रधानमात्रं नलेन कृतं अङ्गानि तु पुरोधसा कृतानीति भावः। कस्य केनेव। पुलोमजामुद्वहतः शतक्रतोः सम्बन्धिनो विधेः साङ्गता आङ्गिरसेन महर्षिणा वृहस्पतिनेव ॥ ४५ ॥

स कौतुकागारमगात् पुरन्ध्रिभिः
सहस्ररन्ध्रीकृतमोचितुं ततः।
अधात् सहस्राक्षतनुत्रमित्रता-
मधिष्ठितं यत् खलु जिष्णुनामुना॥ ४६॥
तयाशनाया निरशेपि नो ह्रिया
न सम्यगालोकि परस्परक्रिया।

स इति। ततः वैवाहिकविधेरनन्तरं स नलः पुरन्ध्रिभिरन्तःपुरनारीभिरीक्षितुं वधूवरचेष्टादिदर्शनार्थं सहस्ररन्ध्रीकृतं छणकाष्ठादिरचितं सच्छिद्रगवाक्षं वधूवरसंवेशार्थं रचितशृङ्गारवेदिकं कौतुकागारं वृद्धहलावहं दूर्वायवाङ्कुरादिनवमङ्गलद्रव्यसहितं गृहमगात् ययौ। यद्गृहं जिष्णुना जयशीलेनामुना नलेनाधिष्ठितं सत् विलोकितुं नेत्रसहस्रावकाशदायिरन्ध्रसहस्रधारिणा सहस्राक्षस्य कवचेन सह मित्रतां साम्यं अधात् दधार तदपि जिष्णुनेन्द्रेणाधिष्ठीयते खलु उत्प्रेक्षायां निश्चये वा॥ ४६॥

तयेति। वरेण वध्वा चाशनाया बुभुक्षा ह्रिया लज्जया तथा पूर्ववत् नो निरशेपि निःशेपिता आहृतमपि न भुक्तमित्यर्थः। तथा परस्परक्रियाऽन्योन्यं चेष्टादिव्यापारोऽपि ह्रियैव सम्यक् सम्मुखदर्शनेन नालोकि न विलोकिता किन्तु दृङ्गितमात्रेणेत्यर्थः। तया त्वयं दिनत्रयं यथाविधि मुक्तसम्भोगं त्यक्तसुरतं सत्पर्व गरीष्यामरिम यथा तयाऽगायि ग्रथितं। अद्दमिति सर्व्वत्र

विमुक्तसम्भोगमशायि सस्पृहं
वरेण वध्वा च यथाविधि त्र्यहम् ॥ ४७ ॥
कटाक्षणाज्जन्यजनैर्निजप्रजाः
क्वचित् परीहासमचीकरत्तराम्।

योज्यं। विध्यतिक्रमभयात् दिनचयं ताभ्यां सह भुक्तं अन्योन्यं विलोकितं सहनिद्रितञ्च। परं लज्जयाऽनया च नावश्रि भुक्तम् नायेषाङ्गं दृष्टं न च चुम्बनालिङ्गनादिपूर्व्वं शयितमित्यर्थः। एकत्र शयनं त्रिरात्रं ब्रह्मचर्य्यं चेति विधिः। अशनायया। अशना-योदन्यधनाया (पा०७।४।३४) इति साधुः। त्र्यहं। समाहारे द्विगौ राजादिना (पा०५।४।९१) इति टच्,न सङ्ख्यादेः समा-हार इति (पा०५।४।८९) अह्नादेशाभावः। रात्राह्नाहाः (पा० २।४।२९) इति पुंस्त्वं। अत्यन्तसंयोगे द्वितीया (पा०२।३।२९। त्र्यहं विमुक्तसम्भोगमिति योजना ॥ ४७ ॥

कटाक्षेति। भोजकुलस्य भीमपूर्व्वंजाख्यचित्रवंशस्याङ्कुरो बालो दमः क्वचिच्छ्रीमद्दृक्पथागोचरे कस्मिंश्चिद्देशे जन्यजनै-र्वरयात्रिकैर्वरपक्षीयैः सह निजप्रजाः परिहासपात्रभूतपौरवार-स्त्रीमुख्याः ताभिः प्रयोज्याभिरित्यर्थः, कटाक्षणाक्षेत्रप्रेरणया परिहासं श्लेषवक्रोक्त्यादिना अर्थान्तरोपदर्शनरूपं उपहासमची-करत्तरां अतितरां कारयामास। तथा क्वचिच्च वरयात्रया निमित्तेनागतान्नलपक्षीयानन्यान् राजलोकान् धरापरोभिः दासीस्वैरिणीभिरभीमस्तविभिः पुरसुन्दरीभिर्वाराङ्गनाभिर-

धराभरोभिर्वरयात्रयागता-
नभोजयद्भोजकुलाङ्कुरः क्वचित्॥ ४८॥
स कश्चिदूचे रचयन्तु तेमनो-
पहारमत्राङ्ग रुचेर्यथोचितं।

भोजयत् भोजनमकारयत्। परिवेषणार्थं काश्चित् सहभोजनार्थं काश्चिदादिष्टवानित्यर्थः। विवाहे कनीयसामेवोपहासकरणयोग्यत्वादङ्कुरपदप्रयोगो युक्तः। कटाचशब्दात् तत्करोतीति (पा० ३।१।२६ वा० १) एयन्तात् लुट्। निजप्रजाः। ह्रक्रोरिति (पा० १।४।५३) कर्मत्वं। आगतान्। भुजेः प्रत्यवसानार्थत्वात्, गतिबुद्धीति (पा० १।४।५२) कर्मत्वं। अभोजयत्। निगरणचलनार्थेभ्यश्चेति (पा० १।३।८७) परस्मैपदं ॥ ४८॥

तमेव प्रकारमाह। स इति। स दमः कश्चिन्नलपक्षीयं एवमूचे स्वजनमुखेनेति शेषः। अङ्ग हे वरयाचिक अत्र पात्रे आसु परिवेषिकासु मध्ये वा काश्चन स्त्रियः तव रुचेरभिलाषस्य यथोचितं उचितमनतिक्रमेण तेमनाख्यस्य व्यञ्जनस्य उपहारं आनयनं रचयन्तु कुर्वन्तु यावदभिलाषं तेमनमानयन्तु किमिति प्रश्नः काकुः। एता एवं कुर्वन्तु त्वं भुङ्क्ष्वेति भोजनोपदेशो वा। एवमुत्तरत्रापि। तथा पिपासतः तृषार्त्तस्य तव पानार्थं सर्वतोमुखं जलमपि अर्पयन्तां ददतु। तथा ओदनमपि कामं यथेष्टमर्पयन्तां॥ परिहासस्तु अत्र आसु मध्ये विविक्ते स्थाने वा यथारुचि: मनमथमादद्भागां रुचेर्यथायभिलापस्योचितं

पिपासतः कास्य न सर्व्वतो मुखं
तवार्पयन्तामपि काममोदनं ॥ ४९ ॥
मुखेन तेऽत्रोपविशत्वसाविति
प्रयाच्य स्पृष्टानुमतिं खलाहसत्।

यथा भवति तथा तव मनसः अपहारं अपहरणं रचयन्तु स्तनादिदर्शनादिनान्तःकरणहरणं कुर्व्वन्तु इत्यर्थः। काय-कान्तैरेताः सौन्दर्य्यातिशयान्मनोहरणं कुर्व्वन्त्वित्यर्थः। तथा पिपासतश्चुम्बनेच्छोस्तव सर्व्वतो नेत्रादिचुम्बनस्थाने दर्शनमात्रेण कामस्य हर्षकरं मुखमर्पयन्ताम्। बहूनां चुम्बनस्थानानामेकत्र मुखे वर्त्तमानत्वान्मुखमेव तव ददत्वित्यर्थः। अथ च कामस्य मोदनं हर्षकरं वराङ्गमपि चुम्बनार्थमर्पयन्ताम्। अथ च मुखं पिपासतस्तव सर्व्वदा वराङ्गमेव ददतु। स्यात्तेमनं तु निष्ठानमित्यमरः। पूर्व्वव्याख्याने तवेत्युभयत्र योज्यं। मुखं सर्व्वत इति, उभसर्व्वतसोरिति द्वितीया (सि॰कौ॰२६।२।५०)। तव ते इति च सम्बन्धसामान्ये षष्ठी ॥ ४९ ॥

मुखेनेति। काचित् खला वक्रोक्त्यादिभाषिणी हे वरयात्रिक असौ मत्सखी पुरुषो वाऽत्र स्थाने ते तव मुखेनोपलक्षिता सम्मुखमिति यावत् त्वदुपायेन वा त्वदाज्ञयेति यावत् त्वया सह भोजनार्थं तव पुरस्ताद्वा भोजनार्थं उपविशतु इति प्रयाच्य सम्प्रार्थ्य मुखेनोपविशत्विति स्पृष्टा दत्ताऽनुमतिरनुज्ञा येन तं वरयात्रिकं पश्चादहसत्। हासे कारणमाह। हि यस्माद्येन साधनेन

वराङ्गभागः स्वमुखं मतोऽमुना
स हि स्फुटं येन किलोपविश्यते ॥ ५० ॥
युवामिमे मे स्थितमे इतीरिणो
गले तयोक्ता निजगुच्छमेकिका।

किलोपविश्यते स हि वराङ्गभागो गुह्यदेशः अमुना अनेन स्वस्यात्मनो मुखं स्फुटं निश्चितं अतो मुखेन करणेनोपविशत्विव्येवमर्थपरं तद्वचनमज्ञात्वा तेनानुज्ञायां दत्तायां कटिदेशाधःप्रदेशेन किलोपविश्यत इत्येवं वदता अनेन स्वमुखं वराङ्गत्वेन मतं यस्मात्तस्माद्व्राम्यं युक्तमित्यर्थः। सर्व्वजनबोधपुरःसरं भ्रष्टामेति वा। अथ च ते मुखेनोपविशतु अपि तु पुरीषोत्सर्गार्थमुपविशत्विति प्रयाच्य तदीयं जुगुप्सितमर्थं गृहीत्वा दृष्टानुमतिं तमहसत्। मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपीति विश्वः ॥५०॥

युवामिति। इमे पुरवर्त्तिन्यौ युवां मे मम स्थितमे उत्तमस्त्रियौ भवादृशे स्त्रीरत्ने न दृष्टे इतीरिणो वदतः स्तुवतः, अथ च मत्सम्बन्धिन्यौ प्रियतमे भवेतां इति परिहासाद्वदतः कस्यचिज्जनस्य वरपक्षीयस्य गले यथा तयोश्चते तयेत्युक्ता तयोर्द्वयोर्मध्ये एकिका एकैव निजगुच्छं रज्जुस्थाने हारविशेषमेव इत्युक्ता न्यधत्त। इमेति किं। हे जन्य त्वं अदः पूर्व्वोक्तं इमे मे इति शब्दं वदन् तु पुनः छगमः छागो न भासि अपि त्वेवंशब्दं कुर्व्वन् छाग एव स्फुरसि। अथ च तुच्छःछगगल्नो गलः कण्ठो यस्यैवंभूतो न भासि। अजस्य गले स्तनौ तिष्ठ-

न भास्यदस्तु च्छगलो वदन्निति
न्यधत्त जन्यस्य ततः पराऽऽलपत् ॥ ५१ ॥
नलाय वालव्यजनं विधुन्वती
दमस्य दास्या निभृतं पदेऽर्पितात् ।

तस्मात्तु तादृक्शब्दोऽपि स्तनशून्य इति कारणान्न शोभसे। अथ च रज्जुरहितकण्ठो न भासीति रज्जुस्थाने हारं धत्ते स्मेति। उभयतो लम्बमानो हार एव गलस्तनस्थाने भवत्वित्यर्थः। ततः अनन्तरं परा द्वितीया रज्जुवद्धारमेव धृत्वा अजमिव तमाकृष्य कण्ठे बद्धा दूरं निनाय। अजो हि मेमे शब्दं करोति रज्ज्वा कण्ठे बद्धा आकृष्यत इति परिहासः। अथ च रिक्तकण्ठो ग्रासरहितो न भासीति निजगुच्छं स्वहस्तस्थितपुष्पपत्रस्तबकं गले मुखान्तः न्यधत्त नितरां बलाच्चिक्षेप, द्वितीया च हस्तपल्लवपुष्पग्रासं छागमिव चकर्षेति परिहासः। अथवैवमस्मान् स्तुतिं कुर्वन् तुच्छगलो हाररहितकण्ठो न भासीति वदन्ती गले हारं परितोषवशाच्चिक्षेपेति वा। यद्वा अस्मत्प्रेरणा भवत्यो मे प्रियतमे इति वदंस्त्वं शून्यकण्ठो न भासि मयापि त्वं वरणीय इति मालास्थाने हारमेव चिक्षेप। परा च तत्रैव धृत्वा परिहासमिषेण भोगार्थं चकर्षेति भावः। मि मे मे इति परिहासपक्षे युवानिति विन्दुच्युतकेन एवं वदन् युवा तरुणः छाग इति वा योज्यं। अकृष्यत् लुङ्॥ ५१ ॥

नलायेति। नलाय नलार्थं वालव्यजनं मयूरपिच्छतालवृन्तं

अहासि लोकैः सरटात् पटोज्झिनी
भयेन जङ्घायतिलङ्घिरंहसः ॥ ५२ ॥
पुरस्थलाङ्गूलमदात् खला वृसी-
मुपाविशत् तत्र ऋजुर्वरद्विजः ।

चामरं वा विधुनती कम्पयन्ती नलसेवापरा काचित् सुन्दरी दमस्य दास्या निभृतं गुप्तं यथा तथा पश्चादागत्य पदे चरणसमीपे अर्पितान्मुक्तात् सरटात् ककलासात् भयेन पटमुत्सृज्योझन्तीति पटोज्झिनी। वंशीला त्यक्तवस्त्रा दिगम्बरी भूता सती लोकैरहासि हसिता जनहासे हेतुरभूदित्यर्थः। किम्भूतात् सरटात्। जङ्घाया आयतिर्दैर्घ्यं तल्लङ्घयत्येवंशीलं रंहो वेगो यस्य तस्मात्। अत एव भयहेतोः सरटस्योर्ध्वारोहणं जातिस्वभावः॥ ५२ ॥

पुर इति। काचित् खला धूर्त्ता समागताय कस्मैचिद्द्विजाय पुरस्थं अग्रे स्थितं लाङ्गूलं पुच्छं यस्यां क्रियायां तद्यथा तथा कूर्माकारां वृसीं व्रतीणामासनं अदात् दत्तवती। वरः श्रेष्ठः वरस्य नलस्य वा द्विजः तत्र तस्यां पुरस्थलाङ्गूलतायामेव वृस्यामुपाविशदुपविष्टः। यतो ऋजुः तस्याः कौटिल्यमजानानः। सा च खला निजामतेः स्वीयाज्ञानस्य आसनं मया भामया अन्यथा स्थापितमिति वदा वदती स्वाज्ञानं नाटयन्तीत्यर्थः। तं पुनरुत्थाप्य पश्चात्स्थितं पुच्छं यस्याः सा एवम्भूता यासौ सा च वृसी तत्प्रदा तां प्रददाति प्रददती एवम्भूता सती अरमत्। उपविष्टोऽद्दयमूनान्तरे स्थितमासनपुच्छं शिश्नमिव

पुनस्तमुत्थाप्य निजामतेर्वदा
ऽहसच्च पश्चात्क्षतपुच्छतत्परा ॥ ५३ ॥
स्वयं कथाभिर्वरपक्षसुभ्रुवः
स्थिरीकृतायाः पदयुग्ममन्तरा ।
परेण पश्चान्निभृतं न्यधापयत्
ददर्श चादर्शतलं हसन् खलः ॥ ५४ ॥

भविष्यतीति बुद्ध्या मया पुरोलाङ्गूलमासनं चिन्नं । मदभिप्राय-मजानानोऽचतुरः पशुतुल्यः पशोश्च पश्चादेव पुच्छेन भवित-व्यमिति ज्ञापयितुं परिहासबुद्ध्यैव तां हर्षां पश्चात्पुच्छं ददाना ऽहसदिति भावः । अज्ञया मया उपहासानर्हस्योपहासाय महत्तमिति निजनिन्दां कुर्वन्तीति केचित् । आसनस्थापना-नभिज्ञाया निजायाः स्वसख्या अमतेर्वदेति वा । कृर्पीणमा-सनं कृषीत्यमरः ॥ ५३ ॥

स्वयमिति। कश्चित् खलः परिहासचतुरः स्वयं स्वेनैव कथा-भिर्हंसदीत्यादिवार्ताभिः स्थिरीकृतायाः कथाश्रवणप्रवणीकृता-या वरपक्षसुभ्रुवो नलपक्षीयायाः सुन्दर्या वरस्य पक्षे पार्श्वे स्थितायाः पादयुग्मं अन्तरा चरणद्वयमध्ये परेण स्वसखेन प्रयो-ज्येन निभृतं गुप्तं यथा तथा पश्चाद्भागेनादर्शतलं दर्पणं न्यधाप-यत् अस्थापयत्। हसन् प्रतिविम्बितानुजघनकामसदनदर्पणं दद-र्श च। भगादिदर्शनाद्धषाः। पश्चादनन्तरं ददर्शेति वा। पद-युग्मं। अन्तरान्तरेण युक्तेति (पा०२।३।४) द्वितीया ॥ ५४ ॥

अथोपचारोद्धुरचारुलोचना
विलासनिर्वासितधैर्य्यसम्पदः।
स्मरस्य शिल्पं वरवर्गविक्रिया
विलोककं लोकमहासयन्मुहुः ॥ ५५ ॥

अथेति। अथ कामरहितकेवलपरिहासानन्तरं वरवर्गाणां नलपक्षीयराजसङ्घानां विक्रिया मनोविकारो याभ्यस्तथा यासां सन्दर्शनेन नलपक्षीयाणां कामविकारो भवति ता वराङ्गना विलोककं द्रष्टारं लोकं मुहुरहासयन्। तद्रूपादिदर्शनसमुत्पन्नकामविकारं वरलोकं दृष्ट्वा लोकोऽहसदिति भावः। कीदृश्यः। उपचारेण कटाक्षक्षेपादिना स्वानुरागज्ञापिके प्रीतिविलोकने विषये उद्धुराण्युत्सुकानि चारूण्यतिविशालानि चक्षूंषि विलोचनानि यासां ताः। तथा विलासैः कटाक्षविक्षेपादिभिः हावा निर्वासिता त्याजिता धीराणां विलासिनां धैर्य्यसम्पद् याभिस्ताः। तथा स्मरस्य शिल्पं कृतिरतिसुन्दरं। उपचारे परिवेषणादावुद्धुराश्च ताश्चारुनेत्राश्चेति वा। उपचारोद्धुरचारुलोचनानां विलासैः त्याजिता धैर्यसम्पदेन तस्य स्मरस्य शिल्पं विलसितं कर्त्तृ वरवर्गविकारदर्शिनं लोकं मुहुरहासयदिति वा। स्वाशयज्ञापनोत्सुकानि चारूणि नेत्राणि यासु। तथा विलासैः पूर्व्वोक्तैरेव त्याजिता धैर्यसम्पदाभिर्यासु वा। तथा कामजनिता वरवर्गस्य विक्रिया विकाराः कर्त्र्यो विलोककं लोकं मुहुरहासयन्निति वा। इदानीं कामचेष्टापुरःसरं परिहासः प्रवृत्त इति भावः ॥५५॥

तिरोवलद्वक्त्रसरोजनालया
स्मिते स्मितं यत् खलु यूनि बालया ।
तया तदीये हृदये निखाय तद्-
व्यधीयतासम्मुखलक्ष्यवेधिता ॥ ५६ ॥
कृतं यदन्यत्करणोचितत्यजा
दिदृक्षुचक्षुर्यदवारि बालया ।

तदेवाह तिर इति । कस्मिंश्चिद्यूनि तद्दृष्टे स्मिते सानुरागं हसिते सति कयाचिद्बालया तिरो वक्रं वलद्वक्त्रसरोजनालया वलतो मुखकमलस्य दण्डो ग्रीवा यया एवम्भूतया सत्या यत् स्मितं ईषद्धासि तया बालया तदीये हृदये हासितुर्वक्षसि तत् स्मितमेव निखाय खनित्वा आरोप्य असम्मुखस्य लक्ष्यस्य वेध्यस्य वेधिता वेधकता व्यधीयत कृता खलूत्प्रेक्षायां । पराङ्मुखलक्ष्यवेधकत्वं धनुर्विद्यायां निपुणस्य भवति । यः पराङ्मुखः सन् लक्ष्यं विध्यति । पराङ्मुख्यापि तस्मिन्नात्मानुरागो निवेशित इत्यर्थः । स्मितं लज्जा चानुरागसूचिका । तया स्वानुरागद्योतनार्थं हास्ये कृते अनया हास्यपूर्वं लज्जितं चेत्तर्हि इयमप्यनुरक्तेति निश्चितवन्तं तत् स्मितमेव कामवाणीभूय अपीडयदिति भावः । बालत्वादेव वलितग्रीवत्वं । प्रौढा तु सम्मुखमेव हसति । स्मिते स्मितमिति कर्त्तरि भावे क्तः । वेधिता विधेस्तौदादिकात्ताच्छील्ये णिनिः ॥ ५६ ॥

कृतमिति । करणस्य कर्त्तव्यस्य उचितं परिवेषणादि तत्य-

ह्रदस्तदीयस्य तदेव कामुके
जगाद वार्त्तामखिलां खलं खलु ॥ ५७ ॥
जलं ददत्याः कलितानतेर्मुखं
व्यवस्यता साहसिकेन चुम्बितुम्।

जति तया बालया यदन्यदप्रस्तुतं व्यापारान्तरं कृतं। तया पुनः पुनर्दिदृक्षुः दर्शनेच्छुः किञ्चिद्दृगन्तमात्रेण द्रष्टुं प्रवृत्तमपि चक्षुर्यदवारि अर्द्धपथात् परावर्त्तितं तदेवान्यत्करणं चक्षुर्वारणरूपं द्वयमेव कामुके विषये तदीयस्य ह्रदः बालासम्बन्धिनो मनसः अखिलां वार्त्तामाशयं जगाद। यतः खलं सूचकं खलू-त्प्रेक्षितं निश्चितं वा। दुर्ज्जनो ह्यन्यदीयमनोगतमन्यस्मै निवेदयति। लज्जानुभववशादियमय्यनुरक्तेति सोऽज्ञासीदिति भावः। खले इति पाठे स्वाशयद्योतनपरेङ्गितज्ञानचतुरे इति कामुक विशेषणं ॥ ५७ ॥

जलमिति। कश्चित् पिपासुं जलं पाययमानायाः पादप्रक्षालनार्थं वा कस्मैचिज्जलं ददत्याः अत एव कलितानतेः नम्रीभूतायाः कस्याश्चित् सुन्दर्य्याः समीपवर्त्ति मुखं जनमध्ये चुम्बितुं व्यवस्यता इत्युद्यमेनात एव साहसिकेनाविचार्य्यकारिणा केनचित् कामुकेन घटदारिणि पदे मन्दपाणिना विलम्बार्थं विरलाङ्गुलिमङ्गलज्जनपाणिना सता पादप्रक्षालनसलिलपाणिना वा सता अन्यस्यां चुम्बनसामग्र्यां सत्यां एकपङ्क्तिनिविष्टानामन्येषां तत्र विचरतां वा ईक्षणस्य दर्शनस्य ईक्षणानां नेत्राणां वा वञ्चनार्थं प्रतारणार्थमनीक्षणार्थं क्षणोऽवसरः प्रती-

पदे पतद्दारिणि मन्दपाणिना
प्रतीक्षितोऽन्ये क्षणवञ्चनक्षणः ॥ ५८ ॥
युवानमालोक्य विदग्धशीलया
स्वपाणिपाथोरुहनालनिर्मितः ।
श्लथोऽपि सख्यां परिधिः कलानिधौ
दधावहो तं प्रति गाढबन्धताम् ॥ ५९ ॥

क्षितो विलम्बेन गवेषितः । पानपक्षे पानक्षणे पदे चरणे विरलाङ्गुलिभ्यः पतद्दारि यस्मिन्नेवम्भूते । पादप्रक्षालनपक्षे पतद्दारिणि पदे मन्दपाणिनेति योज्यं । अन्यनिरीक्षणावसरं सम्प्रतीक्ष्य तन्मुखं चुचुम्बेति भावः ॥ ५८ ॥

युवानमिति । विदग्धशीलया चतुरया कयाचित् सुन्दर्या युवानं कञ्चित्तरुणमालोक्य कलानां सकलविद्याचातुर्याणां निधौ स्थानभूतायां स्वाश्रयज्ञायां प्रियसख्यां अथ च सखीरूपे चन्द्रे स्वपाणिभ्यामेव पाथोरुहनालाभ्यां कमलाभ्यां निर्मितो रचितः कण्ठाश्लेषरूपः परिधिः श्लथोऽपि शिथिलसम्बन्धोऽपि तं नेत्रलक्ष्यं युवानं प्रति लक्षीकृत्य गाढबन्धतां दृढबन्धनत्वं दधौ बभार । अहो आश्चर्यं । कलानिधौ च परिवेषो युक्तः श्लथस्य गाढत्वविरोधात् । सख्यां चन्द्रे वा कृतस्यालिङ्गनस्य परिधेश्चन्द्रबन्धनरूपत्वादाश्चर्यं । मदालिङ्गनेच्छुरियं स्वाशयज्ञापनाय सखीं आलिङ्गितवती मामेवालिलिङ्गेति तदाशयमज्ञासीदिति भावः ॥ ५९ ॥

नतभ्रुवः स्वच्छनखानुबिम्बन-
छलेन कोऽपि स्फुटकम्पकण्टकः।
पयो ददत्याश्चरणे भृशं क्षतः
स्मरस्य बाणैः शरणे न्यविक्षत ॥ ६० ॥
मुखं यदस्थायि विभज्य सुभ्रुवा
ह्रियं यदालम्ब्य नतास्यमासितम्।

नतेति। स्मरस्य बाणैर्भृशं क्षतः नितरां पीडितोऽत एव स्फुटो जातः सात्त्विकः कम्पः कण्टको रोमाञ्चश्च यस्य स कोऽपि कामी स्वच्छनखेषु तदीयेषु अनुबिम्बनछलेन प्रतिबिम्बनछलेन प्रतिबिम्बव्याजेन पयो दुग्धं जलं वा परिवेषयन्त्याः पाययमानायाः कस्याश्चिन्नतभ्रुवः चरणे एव शरणे रक्षित्र्यौ न्यविक्षत प्राविशत्। कामपीडाशान्त्यर्थं चिरं चरणावलोकनव्याजेन प्रार्थनाप्रणतिमङ्गीकार्यीदिति भावः। भीतः सकम्पो बाणैः सशल्यः सन् कश्चिच्छरणं विशति क्षत इवेति लुप्तोत्प्रेक्षा। चरणौ ऽस्त्रियामित्यमरोक्तेश्चरणे इति द्वितीया द्विवचनान्तं। चरणाविति च पाठः। शरणमिति पाठे चरणरूपद्वयं रक्षितारमिति व्याख्येयं। न्यविक्षत। नेर्विश इति (पा० १।३।१७) तङ् ॥ ६० ॥

मुखमिति। तयैवान्यया वा सुभ्रुवा मुखं विभज्य वक्रीकृत्य यदस्थायि स्थितमासि तथापि ह्रियं अवलम्ब्य लज्जामाश्रित्य नतास्यमानम्रमुखं यथा तथा यत् आसितं स्थितं मृदु मञ्जुलं गद्गदमप्यव्यक्तं यथा तथा च वाक्यार्थः। अवादि युवा तदेव

अवादि वा यन्मृदु गद्गदं युवा
तदेव जग्राह तदाप्तिलग्नकम्॥ ६१॥
विलोक्य यूना व्यजनं विधुन्वती-
मवाप्तसत्त्वेन भृशं प्रसिष्विदे।
उदस्तकण्ठेन नृपोष्मनाटिना
विजित्य लज्जां ददृशे तदाननम्॥ ६२॥
स तत्कुचस्पृक्कचेष्टिदोर्लता-
चलद्दलाभव्यजनानिलाकुलः।

वयं तस्या आप्तिलग्ना लग्नकं प्राप्तिनिश्चायकमिति जग्राह ज्ञातवानित्यर्थः। स्मिताद्यनुभाववशादियं मया लब्धैवेति निश्चिकायेति भावः। वा समुच्चये॥ ६१॥

विलोक्येति। यूना व्यजनं विधुन्वतीं चालयन्तीं सुन्दरीं अकस्माद्विलोक्य तद्दर्शनादेवाप्तसत्त्वेन आप्तसात्त्विकभावेन सता भृशं प्रसिष्विदे सात्त्विकः स्वेदः प्राप्त इत्यर्थः। आनन्दोद्रिक्तो मनोविकारः सत्त्वं तमेव प्रस्वेदं निह्नोतुं नाशितुं नृपा अलीकं ऊष्माणं प्रस्वेदनिमित्तं सन्तापं नाटयत्येवंशीलेनाभिनयता स्वेदापाकरणव्याजेनोदस्तकण्ठेनोर्द्धीकृतमुखेन सता लज्जां विजित्य तदाननं तस्या आननं ददृशे, स्वकामपीडाज्ञापनार्थं तया अपश्यदिति भावः। प्रसिष्विदे। षोपदेशत्वात् षत्वं। प्रसिस्विद इति पाठश्चिन्त्यः॥ ६२॥

स इति। स पूर्वोक्तो युवा व्यजनं चालयन्त्यास्तस्याः पूर्वो-

अवाप नानानलनालशृङ्खला-
निबद्धनीडोद्भवविभ्रमं युवा ॥ ६३ ॥

छायाः स्त्रियः कुचयोः स्पृष्टकाख्यमालिङ्गनं चेष्टते करोत्ये-
वंशीला दोर्लता बाहुवल्ली तस्याः सम्बन्धि चलच्चलाभं चपल-
पर्णतुल्यं व्यजनं तालवृन्तं तस्यानिलेन कम्पनसञ्जातवायुना
आकुलो विवशीकृतः। स्तनस्पर्शिभुजचालितव्यजनविलोकनमात्र
सञ्जातानुरागतरलः सन् नानानलानां अनेकशरकाण्डानां
नालस्य सद्वस्य नलनालानां नलदण्डानां वा या शृङ्खला नि-
बन्धनहेतुलाक्षेयां परस्परग्रथननिर्मितः पञ्जरस्तथा नितरां
बद्धःसङ्कुचितप्रचारीकृतः नीडोद्भवः पक्षी तस्य विभ्रमं पञ्जर-
मध्य एव यदिनिष्टं भ्रमणं अथ च तस्य विलासं साम्यं अवा-
प जनसम्मर्देऽप्यनुरागातिशयाद् व्यजनचालनचलद्भुजान्तर्वर्त्ति
तत्कुचयोः परम्परयापि संस्पर्शे सांसर्गिकप्रीत्या साक्षादिव
तत्कुचस्पृष्टकालिङ्गनमनुभवन् अनशङ्कया यथेष्ट चेष्टितुमशक्तः
कामातुरः पञ्जरबद्धपक्षिनिर्वन्धमिवानुभवदिति भावः।
लतायाश्च चलद्दलत्वं युक्तं। व्यजनचालनव्याजाच्चलतो भुज-
स्यापि स्तनस्पर्शे स्पृष्टकालिङ्गनत्वं युक्तम्। नलजालेति पाठः
समीचीनः। नलनालेति पाठे नानाविधाः कण्टकानां नल-
सम्बन्धिन्यः कण्टबन्धनकारिण्यः शृङ्खला इत्यर्थः ॥ ६३ ॥

आवक्रटा कापि कटाक्षणस्य सा
तथैव भङ्गी वचनस्य काचन।
यया युवभ्यामनुनाथने मिथः
क्षणोऽपि दूतस्य न शेषितः श्रमः॥ ६४॥
पपौ न कश्चित् क्षणमास्यमेलितं
जलस्य गण्डूषमुदीतसम्मदः।

आवेति। सा कापि वर्णयितुमशक्या भावोद्यमनचतुरा कटाक्षणस्य नेत्रप्रान्तवक्रवीक्षणस्यावक्रटा भङ्गिः परम्परा वा तथैव तदुचितैव सा काचन कापि वक्रोक्त्यादिरूपा वचनभङ्गी रचनापि अभूदिति शेषः। सा का। यया कटाक्षावक्रटया वचनभङ्ग्या च कर्त्र्या युवभ्यां मिथः परस्परं अनुनाथने अन्योन्यप्रार्थने विषये क्षणोऽप्यल्पोऽपि दूतस्य श्रमः प्रयासो न शेषितोऽविफलीकृतः। यया कृत्वा युवभ्यां न शेषित इति वा। आत्मनैव चेष्टाविशेषरचनाद्वारा त्वं किमेष्यसि अहं वा गच्छामीत्यादिप्रश्ननिश्चयाद्दूतस्यानवसर इति भावः। यूनोर्वैदग्ध्यं सूचितं। युवतीच युवा चेत्यत्र, पुमान् स्त्रियेत्येकशेषः (पा० १।२।६७) कर्त्तरि तृतीया चतुर्थी वा। शेषितः। तत्करोतीति ण्यन्तान्निष्ठा॥ ६४॥

पपाविति। कश्चित्कोऽपि युवा आस्येन मुखेन मेलितं योजितं करपुटे पानार्थं धृतं जलस्य गण्डूषं पेयं जलं क्षणमात्रं न पपौ। यत उदीतसम्मदः उत्पन्नानुरागः। तथापि किमिति न पपावित्यत आह। तत्राधरसम्पृक्ते करपुटधृते जले प्रतिबिम्बितं

चुचुम्ब तत्र प्रतिबिम्बितं मुखं
पुरः स्फुरन्त्याः स्मरकार्मुकभ्रुवः ॥ ६५ ॥
हरिन्मणेर्भोजनभाजनेऽर्पिते
गताः प्रकोपं किल वारयात्रिकाः ।
स्मृतं न शाकैः प्रवितीर्णमस्ति व-
स्त्विषेदमेवं हरितेति बोधिताः ॥ ६६ ॥

पुरः स्फुरन्त्या विलसन्त्याः स्मरकार्मुकवद्भ्रुवौ यस्यास्तस्या मुखं चुचुम्ब । उद्दीपमन्मदः सन् वा चुम्बितवान् । जले पीते प्रतिविम्बासम्भवात् पानार्थं गृहीते जले तस्या मुखप्रतिबिम्बे प्रतिबिम्बजनितमुखचुम्बनदर्शनकौतूहलवशात्तस्या यावदवस्थानं तावन्न पपौ । गतायां तु प्रतिबिम्बाभावात् पपाविति भावः । पुरः स्फुरन्त्या जले दृश्यमाना एव मुखमिति वा ॥ ६५ ॥

हरिदिति । हरिन्मणेर्भोजनार्थं भाजने पात्रेऽर्पिते पुरः स्थापिते सति पत्रावलीभ्रान्त्या शाकपूर्णत्वभ्रान्त्या वा किल स्फुटं प्रकोपं नितरां रोषं प्राप्ता वारयात्रिका वरपक्षीया राजानो भीमसम्बन्धिभिर्लोकैरिति बोधिताः । इति किं । इदं वो युष्मभ्यं प्रवितीर्णं पात्रं शाकैः पलाशादिहरितपलाशैर्वा मुका-दिश्यामवर्णैरेव वा न स्मृतं तद्रचितं पूर्णं वा किन्त्वोदनादि-युक्तमपि हरितमणिमया लिप्ता स्मृतं न पत्रावली नापि शाका इत्थेवं ज्ञापिताश्शान्तरुष्टा इत्यर्थः । वारयात्रिकाः । वरयात्रा प्रयोजनमेषां इत्यर्थे, प्रयोजनमिति (पा० ५।१।१०८) ठक् ॥ ६६ ॥

ध्रुवं विनीतः स्मितपूर्व्ववाग् युवा
किमप्यपृच्छन्न विलोकयन्मुखं।
स्थितां पुरस्फाटिककुट्टिमे वधूं
तदङ्घ्रियुग्मावनिमध्यबद्धदृक्॥ ६७॥
अमी लसद्वाष्पमखण्डिताखिलं
वियुक्तमन्योन्यममुक्तमार्द्दवं।
रसोत्तरं गौरमपीवरं रसा-
दभुञ्जतामोदनमोदनं जनाः॥ ६८॥

ध्रुवमिति। विनीतः ध्रुवमाचारवानिव स्मितपूर्व्ववाक् मुखं न विलोकयन् अपश्यन् युवा तस्या अङ्घ्रियुग्मस्यावनिमध्ये भूमिभागे बद्धदृग्योजितनेत्रः सन् पुरः स्फटिकनिबद्धभूमौ स्थितां वधूं किमप्यपृच्छत्। अधे स्फटिककुट्टिमप्रतिविम्बिततद्वगदर्शनार्थमेव गोष्ठीमिषेण तां स्थिरीचकारेति भावः। अधोदर्शनार्थमेव मुखं न विलोकितं। अयं श्लोकः क्वचित्॥ ६७॥

अमी इति। अमी जनाः रसात् स्वादुविशेषानुरागादोदनं अभुञ्जत। किम्भूतं। लसद्वाष्पं विद्यमानोष्माणं ईषत्कदुष्णं। तथा अखण्डितस्तथासावखिलः सम्पूर्णश्च पाकेऽपि अविच्छिन्नं तण्डुलमिति यावत्। अभग्नमखिलं स्वरूपं यस्येति वा। तथा पाकसमये नवनीतक्षेपात् अन्योन्यं वियुक्तमसंलग्नमिवयवकं। तथा अमुक्तं अत्यक्तं मार्द्दवं येन सुजातिशालिवीजत्वादतिकोमलं। तथा रसोत्तरं स्वादुबहुलं। तथा गौरं चन्द्रधवलं। तथा अपीवरं जीरकादिसुजातिशालिवीजत्वात् सूक्ष्मं दीर्घतण्डुलं अत एवा-

वयोवशस्तोकविकस्वरस्तनीं
तिरस्तिरश्चुम्बति सुन्दरे दृशा।
स्वयं किल स्रस्तमुरस्यमम्बरं
गुरुस्तनी ह्रीणतराऽपराऽऽददे॥ ६९॥

मोदनं हर्षहेतुं। परिमलबाहुल्याद्वा आमोदनं। अधस्तले गलद्बाष्पत्वं। मार्द्दवात्यागे अन्योन्यवियुक्तत्वं। अतःकारणान्माहैवैः परस्परविरोधाभासः॥ ६८॥

वय इति। सुन्दरे जन्यजने दृशा वयोवशेन निर्गच्छदागच्छच्छैशवतारुण्यपारतन्त्र्येण स्तोकमीषद्विकस्वरौ उल्लसितमण्डलौ स्तनौ यस्यास्तां वयःसन्धौ वर्त्तमानां मुग्धां तिरस्तिरो वक्रं वक्रं यथा चुम्बति पश्यति सति सानुरागकटाक्षमात्रेणापि चुम्बनजन्यं सुखमनुभवति गुरुस्तनी तारुण्यभरपीवरदृढतरकुचाऽपराऽन्या स्त्री तदनुरागाद्ध्रीणतरा अतिसलज्जा सती यथास्थानस्थितमपि स्वयमात्मनैव स्रस्तं किल स्थानच्युतं जातमिवोरस्यमम्बरं हृदयावरणं बलाद्विगलितं कृत्वा पुनस्तदाच्छादनाय आददे अङ्गीचकार। मुग्धां प्रत्यनच्छं हृदयावरणमच्छादनं चकार। विदग्धस्त्रीरीतिरीदृशी। अथ च त्वमिमामल्पस्तनीं मुग्धां त्वत्सम्भोगासहनाक्षमां किं पश्यसि यथमास्थूरममामस्तनीं त्वत्सम्भोगक्षमां मां पश्येति स्वाशयज्ञापनायादृष्टमपि पीनघनस्तनयुग्ममदर्शयदिति भावः। ह्रीणतरा। तसिलादिष्विति (पा० ६।३।३५) पुंवद्भावः॥ ६९॥

यदादिहेतुः सुरभिः समुद्भवे
भवेत्तदाज्यं सुरभि ध्रुवं ततः।
वधूभिरेभ्यः प्रवितीर्य पायसं
तदोघकुल्यातटसैकतं कृतम् ॥ ७० ॥
यदप्यपीता वसुधालयैः सुधा
तदप्यदः स्वादु ततोऽनुमीयते।

यदिति। सुरभिः कामधेनुर्गौर्वा। अथ च सौरभ्ययुक्तः पदार्थः समुद्भवे उत्पत्तिविषये यस्यादिहेतुः दुग्धादिद्वारा परम्परया मूलकारणं ततो ध्रुवं तस्मादिव सौरभ्यधर्मयुक्तकारणादिव यदाज्यं सुरभि भवेत् तस्मात् कारणगुणा हि कार्ये समवयन्तोऽतिसुरभीभवितुमर्हन्ति, तदाज्यमेभ्यो जनेभ्यो वधूभिः प्रवितीर्य परिवेष्य पायसं क्षीरपक्वतण्डुलमन्नं तदोघकुल्यानां घृतप्रवाहरूपाणां कृत्रिमाल्पसरितां तटयोः सैकतं कृतम्। पूर्वं पायसं परिवेष्य तस्योपरि धाराप्रवाहरूपे घृते क्षिप्ते द्विधा भूय घृतमभितः स्थितं पायसं शुभ्रत्वात् घृतकुल्यासैकतमिव शोभते स्मेति भावः। आत्मसौरभ्यपाकत्वमुक्तम्। यदाज्यमित्येव पाठः ॥ ७० ॥

यदपीति। यदपि वसुधालयैर्मनुष्यैः सुधा अमृतं न पीता तदपि तथापि सुधास्वादाज्ञानेऽपि अदः आज्यं ततोऽमृतादपि सकाशात् स्वादु मिष्टमित्यनुमीयते। यस्मात् सुधान्धसः अमृतान्धा देवा अपि क्रतौ उषर्बुधेन अग्निना दग्धगन्धिने विनाग्नि-

अपि कद्रूपर्बुधदग्धगन्धिने
स्पृहां यदस्मै दधते सुधान्धसः ॥ ७१ ॥
अबोधि नो ह्रीनिभृतं मदिङ्गितं
प्रतीत्य वा नादृतवत्यसाविति।

तमीरभाय यस्मै घृताय स्पृहां इच्छां दधते। यागे हि हुतं घृतं देवा भुञ्जते। यद्यमृतादधिकरसं नाभविष्यत्तस्मादमृतादा अपि देवा यागानलविकृतगन्धमप्येतत्सानुरागं कथमभ्यवहरिष्यन् अभ्यवहरन्ति तावत्तस्मादमृतादपि विकृतगन्धमपि घृतमधिकरसं। किमुत स्वदमीरभमिति भावः। मनुष्यैरपि सुधा यस्मान्न पीता सुधान्धसोऽपि विशिष्टायास्मै यस्मात् स्पृहयन्ति तस्मादपि च हेतोरदो घृतं सुधायाः स्वादुतरमनुमीयते। एकोऽल्परसत्वाद्बुद्धिपूर्वमसृतं नास्वादयत्येव। अन्ये च नित्यं प्राप्तामृता अपि यस्माद्घृताय स्पृहयन्ति तस्माद्धेतुद्वयादमृतादप्यधिकमेतदनुमीयते इति वा। कद्रूपर्बुधेन दग्धस्यासौ गन्धस्य सोऽस्यास्तीति कर्मधारयादिनिः। स्पृहेरीप्सित (पा० १।४।३६) इति सम्प्रदानत्वम् ॥ ७१ ॥

अबोधीति। असौ बाला ह्रीनिभृतं बाललज्जावशाद्विषयं इति च हेतोर्भावसूचकं मदिङ्गितं भ्रूविक्षेपादि मम चेष्टितं नो अबोधि अज्ञासीत् किंवा। अथवा प्रतीत्य ज्ञात्वा ननु रागाद्यद्भवती अज्ञासवतीत्येवंरूपा पुनः पुनर्जायमानां यूनो धियं संशयबुद्धिं कियन्तं मार्गं गतापि बाला निरस्य परास्य

लुनाति यूनः स्म धियं कियद्गता
निवृत्य वाऽऽदरदर्शनैपुणा ॥ ७२ ॥
न राजिकाराद्धमभोजि तत्र कै-
र्मुखेन सीत्कारकृता दधद्दधि ।
धुतोत्तमाङ्गैः कटुभावपाटवा-
दकाण्डकण्डूयितमूर्द्धतालुभिः ॥ ७३ ॥
वियोगिदाहाय कटूभवत्विष-
स्तुषारभानोरिव खण्डमाहृतम् ।

आदरदर्शनं सादरकटाक्षविलोकनं तद्रूपेणैपुणा लुनाति स्म चिच्छेद । तदिङ्गितज्ञानपुरःसरं स्वानुरागं प्रकटीचकारेत्यर्थः । तादृग्विलोकनात् मदिङ्गितं ज्ञात्वा इयमप्यनुरक्तेति युवा निश्चिकायेति भावः । कियद्गता। द्वितीयाश्रितेति (पा॰ २।१। २४) समासः । कियद्यथातथागतेति क्रियाविशेषणं वा ॥ ७२ ॥

नेति । युग्मं । तत्र भीमगेहे भोजनावसरे वा राजिकाभीराद्धं साधितं दधि दधत् दधिमिश्रितं व्यञ्जनं तैक्ष्ण्यातिशयात् सीत्कारकृता मुखेन कैर्जन्यजनैर्नाभोजि अपि तु सर्व्वैरपि भुक्तं। किम्भूतैः। कटुभावपाटवात् कटुत्वातिशयात् धुतोत्तमाङ्गैः कम्पितशिरोभिः । तथा भोजनकाले शिरःकण्डूयनस्य स्मार्त्त-त्वनैर्निषिद्धत्वादकाण्डे अकाले कण्डूयिते मूर्द्धतालुनी यैः तैः । मुखस्यैव भोजनसाधनत्वे सिद्धेऽपि सीत्कारादिविशिष्टत्वद्योतनार्थं मुखेनेत्युक्तं । राजिकाराद्धभोजिनामियं जातिः ॥ ७३ ॥

वियोगीति । वियोगिनां स्त्रीपुंसां दाहाय पीडार्थं कटू-

सितं मृदु प्रागथ दाहदायि तत्
खलः सुहृत्पूर्व्वमिवाहितस्ततः ॥ ७४ ॥
नवौ युवानौ निजभावगोपिना-
वभूमिषु प्राग्विहितभ्रमिक्रमम् ।
दृशोर्विधत्तः स्म यदृच्छया किल
त्रिभागमन्योन्यमुखे पुनः पुनः ॥ ७५ ॥

भवन्त्यस्त्विषो दीप्तयो यस्यामह्वादीप्तेस्तुषारभानोश्चन्द्रस्याहृतं खण्डमिव सितं श्वेतं तथा प्राक् प्रथमं मृदु प्रथमस्पर्शसमये कोमलं अथ पश्चान्मुखप्रक्षेपानन्तरं तालुजिह्वादेस्तैक्ष्ण्यातिशयाद्दाहदायि दाहकारि आहृतं आनीतं तद्राजिकाराद्धमभोजीति पूर्व्वेणान्वयः । तुषारभानोः सकाशादाहृतमिति वा । क इव । खल इव । किम्भूतः । पूर्व्वं सुहृदापातरमणीयस्ततोऽनन्तरमहितो वैरी । रायी इति कान्यकुब्जभाषायां । मोहरया इति दाक्षिणात्यभाषया राजिकानां नाम ॥ ७४ ॥

नवाविति । वयःसन्धौ वर्त्तमानौ नवावप्रगल्भौ अत एव निजभावगोपिनौ स्वानुरागापह्नवपरौ कौचिद् युवानौ अभूमिषु लोकव्यवहारायोग्येषु स्वयोग्येषु वा अनुद्देशेषु वा वस्तुषु प्राक् पूर्व्वं विहितः कृतः भ्रमेर्निरर्थकभ्रमणस्य क्रमः परम्परा यत्र येन वा एवम्भूतं दृशोर्नेत्रयोस्त्रिभागं तृतीयांशरूपं कटाक्षं अन्योन्यमुखे पुनः पुनः विधत्तः स्म चक्रतुः यदृच्छया किल । अन्यविलोकनवत् स्वेच्छामात्रेण क्रमसम्भ्रान्तमन्योन्यमुखविलोकनं

व्यधुस्तमां ते मृगमांससाधितं
रसादशित्वा मृदु तेमनं मनः ।
निशाधवोत्सङ्गकुरङ्गजैरदः
पलैः सपीयूषजलैः किमप्यपि ॥ ७६ ॥
परस्पराकूतजदूतकृत्ययो-
रनङ्गमाराद्धुमपि क्षणं प्रति ।

कुरुतः न त्वनुरागेणेति लोकप्रतीतिर्यथा स्यादेवं वस्त्वन्तरवि-
लोकनव्याजेनान्योन्यमुखं कटाक्षैर्वीचांचक्राते इति भावः । त्रि-
भागमिति पूर्व्ववत् समर्थनीयम् ॥ ७५ ॥

व्यधुरिति । ते जन्यजना मृगमांसैः साधितं राद्धं संस्कृतं
मृदु तेमनाख्यं व्यञ्जनविशेषं रसात् प्रीत्याऽशित्वा भुक्त्वा इति
मनो व्यधुस्तमां नितरां चक्रुः । इति किं । अदः तेमनं निशा-
धवश्चन्द्रः तस्योत्सङ्गे वर्त्तमानः कुरङ्गो हरिणस्तस्माज्जातैः
सपीयूषजलैः अमृतरूपैः जलैः सह वर्त्तमानैः पलैर्मांसैरपि
किं अपाचि किं । रसातिशयात्मनसा एवं तर्कितवन्तस्ते इत्यर्थः ।
तेमनस्यातितरां स्वादुत्वमुक्तम् । अअपि । अा पाके इत्यस्मात्
कर्म्मणि चिणि घटादित्वान्मिलाद्ध्रस्वः ॥ ७६ ॥

परस्परेति । परस्परस्याकूतात् चेष्टाविशेषादेव जातं दूत-
कृत्यं सम्भोगसम्मतिर्ययोः कयोश्चिद्यूनोः स्त्रीपुंसयोरनङ्गमाराद्धुं
सुरतं कर्त्तुं यः क्षणः समयस्तं प्रति उद्दिश्य सदा क्रियमाण-
नियमापेक्षया कियच्चिरायुषा कियच्चिरं किञ्चिदधिककाल-

निमेषणेनैव कियच्चिरायुषा
जनेषु यूनोरुदपादि निर्णयः ॥ ७७ ॥
अहर्निशा वेति रताय पृच्छति
क्रमोष्णशीतान्नकरार्पणाद्विटे ।
ह्रिया विदग्धा किल तन्निषेधिनी
न्यधत्त सन्ध्यामधुरेऽधरेऽङ्गुलीम् ॥ ७८ ॥

मायुर्वर्त्तमानता यस्यैवंभूतेन कियच्चिरकालस्थायिना निमेषेणैवाक्षिपक्ष्मसङ्कोचेनैव कर्त्रा करणेन वा जनेषु मध्ये बहुजनेषु वर्त्तमानेषु सत्सु अपि निर्णयः निश्चय उदपादि कृतः जातो वा। कदा सम्भोग इति इङ्गितेन पृष्टे सति नेत्रे निमील्य किञ्चित्कालं स्थित्वा जने निद्राणे सति आगन्तव्यमिति रात्रिः सङ्केतसमय इति निरणायीति भावः। उदपादि। चिण्तेपद इति (पा० ३।१।६०) कर्त्तरि कर्मणि वा चिण् ॥ ७७ ॥

अहरिति। विटे कामुके रताय आवयोः सम्भोगं कर्त्तुं अहर्निशा वेति उष्णकरधर्मोपलक्षितं दिनं वा शीतांशुकरधर्मोपलक्षिता रात्रिर्वा समय इति क्रमेणोष्णशीतयोरन्नयोरुपरि करार्पणादेव चेष्टितात् कामपि पृच्छति सति विदग्धा चतुरा तत्प्रश्नाशयज्ञा ह्रियोपलक्षिता अनन्तरमिङ्गितेनैव तन्निषेधिनी तयोर्दिननिशयोर्निषेधं कुर्वाणा सन्ध्यावन्मधुरे रमणीयेऽधरे स्वीयोष्ठे ऽङ्गुलीं न्यधत्तास्थापयत्। अनभिमतमर्थं निषेधन्तः स्त्रियो मातः किमेवं ज्ञातमित्याद्यभिधायाधरे ऽङ्गुलीं स्थाप-

क्रमेण कूरं स्पृशतोऽस्य गः पदं
सिताञ्च शीतां चतुरेण वीक्षिता।
दधौ विदग्धारुणितेऽधरेऽङ्गुली-
मनौचितीचिन्तनविस्मितं किल ॥ ७९ ॥
कियत् त्यजन्नोदनमानयन् कियत्
करस्य पप्रच्छ गतागतेन यां।

यन्तीति जातिः। किल प्रसिद्धं। लोकस्य चैवमेव प्रतीतिर्जाता। सा तु तन्निषेधव्याजेन दिने रात्रौ वा अनवसरः सन्ध्यैव रतसमय इत्यकथयदिति भावः। यदा दिने सूर्यालोकात् रात्रौ चन्द्रालोकात् द्वयमप्यनुचितं। किन्तु महान्धकारमलिना सन्ध्यैव रन्तुं योग्येति भावः ॥ ७८ ॥

क्रमेणेति। अयं श्लोकः क्षेपकः। कूरं भक्तं सितां शर्करां। किमिदमनेनानुचितं क्रियत इत्यनौचितीचिन्तनेन विस्मितं किल विस्मितेव। अरुणिते यावकेनेत्यर्थः। भावः स एव॥ ७९ ॥

कियदिति। कृतसुरतकालनिर्णयः स एव युवा कियदन्नं ओदनं पुरःस्थितां वीक्ष्य त्यजन् पात्रे स्थापयन् कियदोदनं च सम्प्रति पुनरानयन् सन् करस्य भक्तपुरस्त्यागवशात् पुरोगमनेन सम्प्रति भक्तानयनवशादागमनेन च क्रमेण त्वां प्रत्यहं किमेष्यामि त्वं वा मां प्रति किमेष्यसीति यां पप्रच्छ सा आननं नम्रं व्यधत्त लज्जया किल। किलेत्यलीके। लोकप्रतीतौ अनया लज्जया मुखं नम्रीकृतं इति। तत्त्वतस्तु मुखनम्रीकरणेनाहमा-

अहं किमेष्यामि किमेष्यसीति सा
व्यधत्त नम्रं किल लज्जयाननं ॥ ८० ॥
यथामिषे जग्मुरनामिषभ्रमं
निरामिषे चामिषमोहमूहिरे।
तथा विदग्धैः परिकर्म्मनिर्म्मितं
विचित्रमेते परिहस्य भोजिताः ॥ ८१ ॥
नखेन कृत्वाधरसन्निभां निभाद्
युवा मृदुव्यञ्जनमांसफालिकां।

गमिष्यामीति सन्दर्शितवतीति भावः। तं वीक्ष्य मुखं नम्रीकृत्य स्वचरणौ पश्यन्ती त्वमेवागत्य मच्चरणयोर्निपतेति वा भावः। भोजनसमये भोक्ता कियन्तं ओदनं विभज्य स्थापयति कियन्तं दध्यादिना सह भोक्तुं गृह्णातीति जातिः। कियन्तं त्यजन् बलात् पुनर्ददानः कियन्तञ्च पुनः पात्रं प्रत्यानयन्निति वा ॥ ८० ॥

यथेति। वारयात्रिका यथा येन प्रकारेणामिषे मांसे अनामिषस्यामिषाभावस्य भ्रमं जग्मुः, यथा येन प्रकारेण निरामिषे मांसलेशवर्जितेऽपि तेमनादौ रूपस्वादादिभिः आमिषमोहं मांसभ्रमं ऊहिरे तर्कितवन्तः तथा तेन प्रकारेण विदग्धैर्नितरां कुशलैःसूपकारैः कर्तृभिः एते वारयात्रिकाः परिकर्म्मभिः साधनद्रव्यैर्निर्म्मितं चित्रमन्नं परिहस्य पूर्व्वोक्तं भ्रमनिमित्तं परिहासं भोजिताः ॥ ८१ ॥

नखेनेति। कश्चिद् युवा मृदीं व्यञ्जनमांसस्य फालिकां खण्डं

ददंश दन्तैः प्रशशंस तद्रसं
विहस्य पश्यन् परिवेषिकाधरं ॥ ८२ ॥
अनेकसंयोजनया तथा कृतै-
र्निकृत्य निष्पिष्य च तादृगर्जनात् ।
अमी कृताकालिकवस्तुविस्मयं
जना बहु व्यञ्जनमभ्यवाहरन् ॥ ८३ ॥

नखेन कृत्वा निभात् व्याजात् अधरसन्निभां ओष्ठाकारां द्विधा कृत्वा पूर्व्वमधरसदृशीमपि नखेन द्विधा कृत्वा, मध्ये नखेन रेखाकरणान्नितरां मध्यस्थितरेखाधरसदृशीं वा कृत्वा दन्तैर्ददंश परिवेषिकाधरं मांसव्यञ्जनदायिन्याः अधरं पश्यन् विहसैतादृशी स्वादुतरा मांसफालिका कदापि नोपभुक्तेत्यादिप्रकारैस्तस्याः फालिकायाः सुस्वादुतां प्रशशंसास्तावीच । स्वादुतरं त्वदीयाधरमेव दशामीति तस्यास्तन्मांसखण्डे तदधरतामारोपयन् स्वाशयं तामज्ञापयदिति भावः ॥ ८२ ॥

अनेकेति । अमी जना वारयात्रिका बहु मूलकन्दपुष्पपत्रफलादिरूपं शाकादिव्यञ्जनमभ्यवाहरन् बुभुजिरे । किं विधं । अनेकेषां *नानाविधमरीचादिद्रव्याणां संयोजनया सम्बन्धेन* तथा कृतैः वस्त्वन्तरस्येव गन्धरसादिकरणात् तादृग्रसादिनिर्माणात् तथया निकृत्य नितरां कर्त्तित्वा निष्पिष्य चूर्णीकृत्य त्वाकारमाम्यादिना तादृगर्जनात् वस्त्वन्तरसादृश्यस्य सम्पादनात् रूपान्तरेण गन्धादिकारणाद्धेतोः कृतः आकालिकेऽसम-

पिपासुरस्मीति विबोधिता मुखं
निरीक्ष्य बाला सुहितेन वारिणा ॥
पुनः करे कर्त्तुमना गलन्तिकां
हसात् सखीनां सहसा न्यवर्त्तत ॥ ८४ ॥

यप्रभवे वस्तुनि विस्मय आश्चर्यं येन इति क्रियाविशेषणं वा। तथा आहतेः आकारादिति वा। फलादि कर्त्तिता राजिकाद्या-दिसंयोगाद्रसान्तरोत्पत्तिस्तथा रूपान्तरापत्तिश्च। गोधूमादि पिष्टां शर्करासम्बन्धाद्रसान्तरोत्पत्तिरित्यादिवैदग्ध्याद् भो-क्तृणां विस्मयोऽधिवासनविशेषाचाकालिकभ्रमो युक्तः ॥ ८३ ॥

पिपासुरिति। वारिणा अमुना सुहितेन हृप्तेन विटेन मुखं निरीक्ष्याहं पिपासुः पातुमिच्छुरस्मि इति विबोधिता विज्ञापिता बालाऽबुद्धवक्रोक्त्याद्यभिप्रायविशेषा अप्रौढा पुन-रपि करे गलन्तिकां पात्रं सुवर्णभाजनं कर्त्तुमनाः सती तदा-शयज्ञानामतिचतुराणां सखीनां हसाद्धासाद्धेतोः सहसा झटि-ति सुप्तप्रबुद्ध इव जलपायनारम्भसम्भ्रमान्न्यवर्त्तत पराहृत्ता। सहसा सस्मिता सतीति वा। कर्मान्तरपरित्यागेन सामान्येन पिपासुरस्मीति वदन्नयमेतदीयाधरं पिपासुरस्तीत्येतदाशय-मियं न जानातीति सखीभिः कृताद्धासादियमपि तदाशयं ज्ञात्वा गलन्तिकां पुनर्नीत्यापयदिति भावः। पूरणगुणेत्यादि-ना (पा० २।२।११) सुहितार्थयोगे षष्ठीसमासनिषेधादेव वा-रिणेति तृतीया ॥ ८४ ॥

युवा समादित्सुरमत्रगं घृतं
विलोक्य तन्त्रैणदृशोऽनुबिम्बनं।
चकार तन्नीविनिवेशितं करं
बभूव तच्च स्फुटकण्टकोत्करम्॥ ८५॥
प्रलेहजस्नेहकृतानुबिम्बनां
चुचुम्ब कोऽपि स्मितभोजनस्थलः।

युवेति। अमत्रगं पात्रस्थं घृतं समादित्सुर्ग्रहीतुकामः कश्चित् युवा तत्र घृते एणदृशः पुरस्थाया मृगाक्ष्याः परिवेशिकाया अनुबिम्बनं प्रतिबिम्बं विलोक्य करं स्वहस्तं तस्य बिम्बस्य नीविषु भङ्गीनिबद्धनाभिचुम्बितवस्त्रविच्छित्तिषु निवेशनशीलं चकार तत्रान्यापयदित्यर्थः। तच्च तस्याः प्रतिबिम्बं स्फुटाः कण्टकोत्करा यस्मिन् सरोमाञ्चमभूदित्यर्थः। स्वप्रतिबिम्बनीविग्रन्थिमोचनार्थं नाभिनीविशविधे सर्वकारिणस्तत्करस्य चेष्टां दृष्ट्वा तस्य स्वसम्भोगवासनां ज्ञात्वा तदानीमेतस्मिन्ननुरागाद्रोमाञ्चिताभूत् तादृश्याश्च प्रतिबिम्बितत्वात् प्रतिबिम्बमपि रोमाञ्चितमभूदिति भावः। द्वयोरप्यनुरागस्तुल्यो जात इति भावः॥ ८५॥

प्रलेहेति। कोऽपि विटः लिह्यत इति लेहः प्रकृष्टो लेहः प्रलेहः सरणादिद्रव्ययुक्तः आर्द्रकादिसंस्कृततक्रादिनिर्मितो द्रवद्रव्यविशेषः तस्माज्जाते स्नेहे तैलादौ कृतमनुबिम्बनं यया कृतं स्मितमनुबिम्बनं यया वा एवंविधां पुरस्थां सुन्दरीं, स्मितं

मुङ्क्तः परिस्पृश्य कराङ्गुलीमुखै-
स्ततोऽनुरक्तैः स्वमवापितैर्मुखं ॥ ८६ ॥
अराधि यन्मीनमृगाजपत्त्रिजैः
पलैर्मृदु स्वादु सुगन्धि तेमनम्।
अशाकि लोकैः कुत एव जेमितुं
न तत्तु सङ्घ्रातुमपि स्म शक्यते ॥ ८७ ॥

भोजनस्थलं येन एवंविधः सन् प्रतिविम्बितां तामेव कराङ्गुली-मुखैः कराङ्गुल्यग्रैर्मुङ्क्तः परिस्पृश्य स्पृष्ट्वा चुचुम्ब। कीदृशैः। स्वमुखं समवापितैस्तया रक्तैः स्वभावात् उष्णस्य तस्य स्पर्शाद्वा ततो-ऽनु तस्मादनुरागात् किं। अङ्गुल्यग्रैः रक्तत्वादनुरागाच्चुम्बिता। किमुक्षेपा। रिक्तैरिति पाठे मुङ्क्तः परिस्पृश्य ततोऽनु तदनन्त-रमेव रिक्तैः प्रलेपशून्यैरेव स्वमुखं मापितैः कराङ्गुलीमुखैश्चु-चुम्बेत्यर्थः। प्रलेपेति। वटकादिनिक्षेपात् तैलादिविन्दवस्सरन्ति तत्र जातं प्रतिमुखं प्रतिविम्बमङ्गुल्या स्पृशति तत्र प्रलेपचल-नात् प्रतिविम्बभङ्गभयात् अङ्गुल्यग्रैर्लेहनकलात् परम्परया चुम्बितवानिति भावः। तां प्रति स्वानुरागमदर्शयदिति भावः ॥ ८६ ॥

अराधीति। मीनेभ्यः मत्स्येभ्यः चित्रकादिमृगेभ्यः अजेभ्यः छागेभ्यः पत्त्रिभिश्चित्तिरलावकादिभक्ष्यपक्षिभिश्च जातैः पलै-र्मांसैर्मृदु स्वादु सुगन्धि पाकेन परिमलविशेषयुक्तञ्च यत्तेम-नाख्य व्यञ्जनं सूपकारैरराधि साधितं तद्वाऽऽस्तालोकैः सङ्घ्रा-

कृतार्थनश्चाटुभिरिङ्गितैः परा
परास्ति यः किञ्चनकुञ्चितभ्रुवा ।
क्षिपन्मुखे भोजनलीलयाङ्गुलीः
पुनः प्रसन्नाननयाऽन्वकम्पि सः ॥ ८८ ॥
अकारि नीहारनिभं प्रभञ्जना-
दधूपि यच्चागरुसारदारुभिः ।
निपीय भृङ्गारकसङ्गि तच्च तै-
रवर्णि वारि प्रतिवारमीदृशम् ॥ ८९ ॥

तुमपि न शक्यते स्म । जेमितुं तु पुनः कुत एव शशाकि, अपि तु भोक्तुं शक्यं नाभूदेव । जेमितुं । जिमु अदने ॥ ८७ ॥

कृतेति । किञ्चन किञ्चित्कुञ्चिते वक्रीकृत्योत्क्षिप्ते भ्रुवौ यया कयाचित्तदिङ्गितैरञ्जलिबन्धादिचेष्टितैः चाटुभिः प्रियवचनैश्च कृताऽर्थना सम्भोगप्रार्थना येन तथाविधो यो विटः पुरा पूर्वं परास्ति निरस्तः प्रसन्नाननया सरसदृष्टिव्यञ्जितप्रसादमुख्या तया भोजनलीलया ग्रासमिषेण मुखेऽङ्गुलीः प्रक्षिपन् अङ्गुली-संस्पर्शेन तां प्रतिदीनत्वं सूचयन् स पुनरन्वकम्पि अनुगृहीतः तद्दैन्यं दृष्ट्वा सम्भोगस्तयाऽनुमत इति भावः ॥ ८८ ॥

अकारीति । यद्वारि प्रभञ्जनात् व्यजनादिवायुसङ्गाद्धेतोः नीहारनिभं तुषारतुल्यमकारि यच्च अगरुसारस्य कृष्णागरो-र्दारुभिरधूपि धूपितम्भृङ्गारके सुवर्णपानपात्रे सङ्गः स्थितिर्यस्या-स्तीति तद्वारि । तत्र भोजनावसरे भीमगृहे वा निपीय नितरां

त्वया विधातर्यदकारि चामृतं
कृतञ्च यज्जीवनमम्बु साधु तत्।
वृथेदमारम्भि तु सर्व्वतोमुखं
तथोचितः कर्त्तुमिदंपिबस्तव ॥ ९० ॥

पीत्वा तैर्जलैः प्रतिवारं पुनः पुनरीदृशं वक्ष्यमाणप्रकारेणावर्णि अस्तावि। प्रतिवारं निपीयेति वा। अमरुरित्येव पाठः। भृङ्गारः कनकालुकेत्यमरः। अल्पत्वे कन् ॥ ८९ ॥

जलवर्णनमेवाह। त्वयेति। हे विधातः त्वया च अम्बु उदकं यदमृतमभ्यं अकारि यच्च जीवनमभ्यमकारि तदयमपि साधु उचितमेव कृतम्। अमृततुल्यरसत्वात्प्राणधारणहेतुत्वाच्चाभ्यर्थत्वायुक्तमेवैतत् तस्य मञ्ज्ञाद्वयमित्यर्थः। तु पुनरिदं सर्व्वतोमुखमञ्ज्ञं त्वयाऽऽरम्भि कृतं अनर्थत्वाभावान्निरर्थकमेतत् कृतं। यस्मादिदं जलं पिबति इद पिबोऽस्मदादिपुरुषस्तस्य सर्व्वतः सर्व्वदिक्षु मुखानि यस्यैवविधस्तव कर्त्तुमुचितः अस्मदादेर्वह्ननि मुखानि सर्व्वेष्ववयवेषु त्व चेदकरिष्यत् तर्हि अस्मादादिरिदमा श्वनिं पातुमशक्ष्यत् न त्वेकेन मुखेनेति। नितरां शैत्यमाधुर्य्यादिगुणयुक्तमेतदिति भावः। तौ तुल्ययोगत्वद्योतकौ। पयःकीलालममृतं जीवनं भुवनं वनं। पुष्करं सर्व्वतोमुखमित्यमरः। इदंपिबः। "पाघ्राध्मा" इत्यादिना (पा॰ ३।१।१३७) शः ॥ ९० ॥

सरोजकोशाभिनयेन पाणिना
स्थितेऽपि कूरे मुहुरेव याचते।
सखि त्वमस्मै वितर-त्वमित्युभे
मिथो न वादाददतुः किलौदनम्॥ ८१॥
इयं कियच्चारुकुचेति पश्यते
पयःप्रदाया हृदयं समावृतम्।

सरोजेति। उभे सख्यौ इति मिथो वादाद् द्वैमत्यात् किलौदनं न ददतुः किलेति व्याजे। इति किं। हे सखि त्वं पात्रमध्ये कूरे ओदने स्थितेऽपि सरोजकोशवदभिनयः आकारो यस्य स्तनवराङ्गप्रार्थनासूचकेन पाणिना कूरं याचतेऽस्मै कामुकाय कूरं वितर देहि। द्वितीया वदति त्वं वितरेति। विवदमाने कूरदापनव्याजेन तत्प्रार्थितस्तनवराङ्गदानेऽन्योन्यं प्रवर्त्तयन्त्योर्मध्ये ऽन्योन्यं लज्जावशादेकतरा रिरंसुरपि नाङ्गीचकारेति भावः। अनुवादादिति पाठे उक्तरूपादनुवादादुभे ऽपि स्वल्पमोदनं किल न ददतुरित्यर्थः। ओदनदानव्याजेन तत्प्रार्थितदानमङ्गीचक्रुरिति भावः॥ ८१॥

इयमिति। पयःप्रदायाः समावृतं वस्त्राच्छन्नमपि हृदयं इति विचार्य पश्यते पृच्छते कामुकाय ध्रुवं निश्चितं मनोज्ञा अथ च पराशयज्ञेव तस्याः करद्वयी सङ्गारस्य धृतेर्धारणस्य मिषेण पद्मप्रात्तदुत्तरं-तदीयप्रश्नस्य प्रतिवचनं व्यतरत् ददौ। इति किं। इयं स्त्री कियन्तौ किम्प्रमाणौ चारू सुन्दरौ च

ध्रुवं मनोज्ञा व्यतरद्यदुत्तरं
मिषेण भृङ्गारधृतेः कुरद्वयी ॥ ९२ ॥
अमीभिराकण्ठमभोजि तद्गृहे
तुषारधाराम्रदितेव शर्करा।
इयं द्विपद्यष्कयणीपयःसुतं
सुधाह्रदात् पङ्कमिवोद्धृतं दधि ॥ ९३ ॥

कुचौ यस्याः सेति। सुवर्णकलशीपरिमाणौ सुवर्णवर्णौ चैतस्याः कुचाविति तं प्रत्यसूचयदिति भावः। उभावपि मिथोऽनुरागादन्योन्यविलोकनपरावेव तस्थतुरिति भावः। अन्योन्यमभिप्रायज्ञः केनचिन्मिषेण प्रश्नोत्तरं ददाति ॥ ९२ ॥

अमीभिरिति। अमीभिर्जन्यजनैस्तद्गृहे भीमगृहे आकण्ठं अतिबहु यथा शर्कराभोजि भुक्ता। तुषारधारया हिमोदकेन म्रदितेव मिश्रितेव। तथा इयं द्विपन्या अश्ववैरिण्या महिष्या बष्कयिण्याः चिरप्रसूतायाः पयो दुग्धं तस्मात् सुतं जातदुग्धपरिणामभूतं दध्यप्यभोजि। सुधाह्रदादमृतस्यागाधजलाशयादुद्धृतं पङ्कमिवेत्युत्प्रेक्षा। शर्कराऽतिमोता शुभ्रा च दध्यप्यमृतवत् स्वादु शुभ्रं घनं चेति भावः। तद्गृहे ऽमीभिर्विशिष्टं दध्यभोजि। तुषारधारया म्रदिता अल्पकरणत्वं प्रापिता शर्करेव सुधाह्रदादुद्धृतं पङ्कमिवेति दधिविषयमेवोत्प्रेक्षा द्वयं वा। दध्नः शैत्यं शौक्ल्यं स्वादुत्वं घनत्वं च सूचितं। एतेन पयः शृतमिति पाठे शर्करा अभोजि। शृतं पक्वं तप्तं महिषीपयश्चाभोजि दधि

तदन्तरन्तः सुषिरस्य बिन्दुभिः
करम्बितं कल्पयता जगत्कृता।
इतस्ततः स्पष्टमचोरि मायिना
निरीक्ष्य तृष्णाचलजिह्वतां भृता॥ ९४॥

चाभोजि इति सम्बन्धः। चिरप्रसूता बष्कयिणीत्यमरः। महिष्या दधि स्वादुतरं भवति। द्विपःप्रसुर्वेति वचनात् इयं द्विपन्तीति द्वितीयया द्वितीयाश्रितेति (पा०२।१।२४) योगविभागात् समासः। द्विपद्वष्कयिणी। पुंवत्कर्मेत्यादिना (पा०६।३।४२) पुंवद्भावः। शृतं। शृतं पाके (पा०६।१।२७) इति साधुः॥ ९३॥

तदन्तरिति। तद्दधि निरीक्ष्य मातिशयात् तृष्णया पानवासनया चला चञ्चला अधरप्रान्तलेहिनी गलल्लाला जिह्वा यस्य तस्य भावस्तत्ता तां भृता बिभ्रता, तथा अन्तरन्तर्मध्ये मध्ये सुषिरस्य छिद्रस्य बिन्दुभिः राशेः शिर इतिवदभेदोपचाराच् छिद्ररूपैर्बिन्दुभिः करम्बितं मिश्रितं व्याप्तं तद्दधि कल्पयता कुर्वता जगत्कृता इतस्ततः सर्वप्रदेशेभ्यस्तद्दधि स्पष्टमचोरि प्रकटमपहृतं, स्पष्टं सम्भावनायां अपहृतमिवेत्यर्थः। अपहरत्कथं न दृष्ट इत्यत आह। यतो मायिना। अदृश्यतयाऽपहृतमित्यर्थः। सफेनचीरस्य दध्याकारेण परिणामे दधनि च्छिद्राणि दृश्यन्ते। ब्रह्मणा अदृश्यतया दधनि वर्त्तमानः सारो भोक्तुमिच्छया गृहीतः, अन्यथा छिद्राणि कथं दृश्यन्ते। अन्येन ग्रहीतुं न शक्यते इति तत्रोत्प्रेक्षा। येन

ददासि मे तन्न रुचेर्यदास्पदं
न यत्र रागः सितयापि किं तया।
इतीरिणे बिम्बफलं पलच्छला-
ददायि बिम्बाधरयारुचच्च तत् ॥ ८५ ॥

निर्मितं तस्य ब्रह्मणोऽपि जिह्वा चास्वच्छनिर्माणात् स्वादुतमं दधीति ध्वन्यते ॥ ८४ ॥

ददासीति। बिम्बफलतुल्यो ऽधरो यस्यास्तया सुन्दर्या पलव्याजात् मांसव्याजाद् बिम्बसञ्ज्ञफलं परिवेषितं मांसखण्डमेव बिम्बाकारं छला इतीरिणेऽधरचुम्बनवासनया भाषमाणाय विटाय अदायि दत्तं। तत् बिम्बाकारं फलं तस्मा अरुचच्च स्वदितमित्यर्थः। मदभिप्रायं ज्ञात्वा स्वीकारपुरःसरं पलरूपबिम्बव्याजान्निजाधरदानमेव प्रतिज्ञातमिति सन्तुष्टो ऽभूदिति भावः। इति किं। हे बिम्बोष्ठि यद्रुचेः प्रीतेरास्पदं यत्र वस्तुनि मम प्रीतिः तन्मे मह्यं त्वं न ददासि। यद्वा यद्रुचेरास्पदं न भवति तन्मह्यं न ददासि। तथा मम यस्यां रागः प्रीतिर्नास्ति तया सितयापि शर्करयापि किं अपि तु न किञ्चित् प्रयोजनं। माधुर्य्यमर्य्यादयापि शर्करयापि प्रयोजनं नास्त्यभिलाषाभावात्। अन्येन नास्तीति किं वाच्यमित्यपिना सूच्यते। अथ च यत्र लौहित्यं नास्ति तया श्वेतया प्रकरणाच्छर्करयापि किं। तस्मान्मे यत्रानुरागो रक्तिमकान्तिश्च तन्मह्यं देहीति। एवं तयेति पाठे तथा पूर्य्यतां। फलच्छलादिति पाठे फलदान-

समं ययोरिङ्गितवान् वयस्ययो-
स्तयोर्विहायोपहृतप्रतीङ्गिता।
अकारि नाकूतमवारि सा यया
विदग्धयाऽरञ्जि तयैव भाववित्॥ ८६॥

प्रसङ्गव्याजात्। बिम्बाकारोऽधरो यस्या इति सप्तम्युपमानेत्यादिना (पा० २।२।२४।वा० ५) नोत्तरपदलोपी समासः। अरुचत् पुषादिलादङ् (पा० ३।१।५५)। द्युद्भ्यो लुङीति (पा० १।३।९१) परस्मैपदम्॥ ८५॥

सममिति। यो ययोर्वयस्ययोः सख्योर्विषये स्वाभिप्रायज्ञापनार्थं समं युगपत् इङ्गितवान् भ्रूक्षेपादिचेष्टितवान् अभूत् स तयोर्मध्ये उपहृतं कृतं प्रतीङ्गितं तदभिलाषस्वीकारसूचकप्रतिचेष्टितं यया तामेकां विहाय स्थितः सन् तयैवारञ्जि द्वितीययैव प्रत्यनुरञ्जितः। तया कया। यया चतुरया विदग्धया आकूतं प्रतीङ्गितं नाकारि प्रतीङ्गितं कुर्वाणा सा सखी जनसमक्षमिङ्गितकरणमयुक्तमित्यवारि निषिद्धा। यतो भाववित् वैदग्ध्यस्य वेत्ता। द्वितीयया तदिङ्गितदर्शनात्तस्मिन्ननुरागाकुलिता प्रतीङ्गितं नाकरोत् जनसमक्षमेतदनुचितमिति व्याजेन सखिप्रियं प्रतीयमिङ्गितं किमिति करोतीति सापत्न्येर्ष्यया च तां वारितवतीति तस्या वैदग्ध्यं। स च तदीयगुप्तभावज्ञानाद्भाववित् सहचरीसमक्षमिङ्गितं कुर्वाणा इयमपि चतुरा। द्वितीया इङ्गितं नाकरोत्तस्य न्यवारयदिति इयमेव चतुरा

सखीं प्रति स्माह युवेङ्गितेक्षणी
क्रमेण तेऽयं क्षमते न दित्सुतां।
विलोम तद्व्यञ्जनमर्प्यते त्वया
वरं किमस्मै न नितान्तमर्थिने ॥ ९७ ॥

मय्यनुरक्ता चेति स चतुरो द्वितीयस्यामेवानुरक्तोऽभूदिति भावः। विहाय स्थितः सन् इति योजना। अन्यथा ह्यनस्य पुरुषःकर्त्ता रञ्जनस्य स्त्रीतिभिन्नकर्तृकत्वात्क्त्वा न स्यादिति। अरञ्जि स्वान्ताचिण् ॥ ९६ ॥

सखीमिति। यून इङ्गितं चेष्टां ईक्षते एवंशीला काचित् स्वसखीं प्रत्याह स्म इत्यवोचत्। हे सखि यस्मादयं क्रमेण परिपाट्या ते दित्सुतां त्वत्कर्तृकां व्यञ्जनस्य दातुमिच्छुतां न क्षमते तस्मात्त्वया नितान्तमतिवत्सलतयाऽर्थिने याचकायास्मै यूने वरं श्रेष्ठं अभीष्टं तत्तेमनादि व्यञ्जनं विलोम विपरीतं क्रमरहितं यथा तथा किं नार्प्यते न दीयते अपि तु सर्वव्यञ्जनजातमेव युगपत् क्षिप्यतामिति वक्रोक्तिः। अथवा आलिङ्गनचुम्बनादि वाञ्छनपरिपाट्या तव वराङ्गदानेच्छुतां न सहते तस्मादतितरलतयाऽर्थिने अनङ्गविषमसायकग्लानायास्मै वरं केवलं श्रेष्ठं वा न विद्यते वरं श्रेष्ठं यस्मात् अधरपानादेरपि वर्त्तमानं वा रोमरहितं तद्गगनस्थं व्यञ्जनं चयन ... मिति ... ऽर्प्यते अपि सर्वं तदुपरायः। अनियमो ...
व्यञ्जनविशेषं वा। व्यञ्जनं आम ...

समाप्तिलिप्स्येव भुजिक्रियाविधे-
र्दलोदरं वर्त्तुलयाऽऽलयीकृतम्।
अलङ्कृतं चीरवटैस्तदश्नतां
रराज पाकार्पितगैरिकश्रिया ॥ ९८ ॥

त्यमरः। नितरां तातमिति पक्षे अनुनासिकस्य क्वीति (पा० ६।४।१५) दीर्घः ॥ ९७ ॥

समाप्तीति। चीरवटैर्दुग्धमध्यचिप्तैर्नामसमाधितैर्वटकाख्यैः पक्वान्नविशेषैः सम्बन्धादलङ्कृतं तत्पूर्वोक्तं वटकव्यतिरिक्तव्यञ्जनं वर्त्तुलया वृत्ताकारया पाकेन तन्नेरदारकाग्निसंयोगेनार्पितया निर्म्मितया गैरिकश्रिया शैलरक्तधातोरिव श्रिया वटकानामेव शोभया रराज। विशिष्टवटकसम्बन्धाद् व्यञ्जनान्तरं रेजे इत्यर्थः। विशिष्टया श्रियोपलक्षितैः चीरवटैरलङ्कृतं सत् रेजे इति वा। किमिव अश्नतां भुञ्जानानां तेषां भुजिक्रियाविधेः भोजनविधेः समाप्तेः। वटकदर्शनमात्रेणान्यत्र रुच्यभावाद् व्यञ्जनान्तरविरतेः सम्बन्धिन्या लिपा समाप्तिसूचिकया ककाररूपपुष्पिकारूपया आलयीकृतं आस्पदीकृतं दलोदरं श्रीनालादिपत्रमध्यमिवेत्युपमोत्प्रेक्षा वा। वर्त्तुलया वृत्तया समाप्तलिप्याश्रितं। पाकेन याम्यकेनार्पितया गैरिकश्रियालङ्कृतं दलोदरमिति वा योज्यं। पोतःपाकोऽर्भक इत्यमरः। ग्रन्थलेखनसमाप्तिपक्षे समाप्तिसूचकं ककारादिवर्त्तुलमक्षरं दाक्षिणात्यैः क्रियते गैरिकचिह्नितञ्च क्रियते, एवं भोजनसमाप्तिसूचकं चीरवटकादि इति ॥ ९८ ॥

चुचुम्ब नोर्वीवलयोर्वशीं परं
पुरोऽधिपारि प्रतिबिम्बितां विटः।
पुनः पुनः पानकपानकैतवा-
च्चकार तच्चुम्बनचुङ्कृतान्यपि ॥ ९९ ॥
घनैरमीषां परिवेषकैर्जनै-
रवर्षि वर्षोपलगोलकावली।

चुचुम्बेति। कश्चिद्विटः पुरोऽग्रे अधिपारि पानकरसपूर्णे सुवर्णादिपानपात्रे प्रतिबिम्बितां उर्वीवलये उर्वशीमिवातिसुन्दरीं कांचित्परं केवलं चुचुम्बेति न किन्तु पुनः पानकस्य द्राक्षादिसाधितमधुररसप्रधानपेयद्रव्यरूपस्य यत्पानं तस्य कैतवात् प्रतिबिम्बितायाः तस्याः चुम्बनस्य सम्बन्धीनि चुङ्कृतानि चुमिति पानकानुकरणशब्दस्तस्य करणान्युच्चारणानि तान्यपि चकार। चुम्बनादिना तस्यां स्वानुरागं प्रकटीचकारेति भावः। अमरोपर्यरी पारी पानपात्रकमुच्यत इति क्षीरस्वामी। सप्तम्यर्थेऽव्ययीभावः। चुङ्कृतानि नपुंसके भावे क्तः ॥ ९९ ॥

घनैरिति। घनैर्बहुभिः परिवेषकैरनेकव्यञ्जनदायिभिर्जनैरथ च तैरेव घनैर्मेघैरमीषां भुञ्जानानां राज्ञां एते वर्षोपलाः करकास्तानुत्पादयामासेत्याकर्पूरशर्करालवङ्गतण्डुलपिष्टरचितानां गोलकानामतिस्वच्छानां लड्डुकाविशेषाणामथ च करकारूपाणां गोलकानामावलीपङ्क्तिरवर्षि वितीर्णा दृष्टा च। कीदृशैः। परिवेषणकर्मप्रशस्यलक्ष्मी या भुजाश्रमी भूषणेषु

अलङ्कृता भूषणरत्नरोचिषा
धृतेन्द्रचापैः श्रितचान्द्रसौरभा ॥ १०० ॥
कियद्बहु व्यञ्जनमेतदर्प्यते
ममेति तत्प्रेर्वदतां पुनः पुनः।

रत्नानि तेषां रोचिषा कान्त्या हेतुना धृतमिन्द्रचापं यैर्नाना-प्रकारकान्तिभिरित्यर्थः। अथ च तदेवेन्द्रचापो येषु। कीदृशी। श्रितं चान्द्रं कर्पूरसम्बन्धि सौरभं सौगन्ध्यं यया। अथ च चन्द्र एव चान्द्रः सूर एव सौरस्तयोर्भा श्रिता चान्द्रसौरभा यया। सा शीतलदीप्रत्वाभ्यां चन्द्रसूर्यसदृशीत्यर्थः। रात्रिदिनयोर्जा-यमानत्वाद्वा क्रमेण तत्कान्तिसदृशी। चन्द्रसम्बन्धिनश्चान्द्राश्चन्द्र-कान्ताः एवं सौराः सूर्यकान्तास्तेषां भा श्रिता यया वा। चन्द्र-सम्बन्धि मनोज्ञत्वं सादृश्यं श्रितं ययेति वा। विश्वप्रकाशे सुरभि-शब्दो मनोज्ञवाची ॥ १०० ॥

कियदिति। एतत्तेमनादिव्यञ्जनं मम कियत् किंपरिमाणं बहु अर्प्यतेऽपितु तृप्ता वयमिति नार्पणीयमिति तत्प्रेर्नेतोः पुनः पुनर्वदतां तेषां जन्यानां कियत्स्वल्पं बहु चैतद्व्यञ्जनमर्प्यते इत्ये-तद्बहुत्वसङ्ख्येयत्वा भवद्भिः पृच्छ्यते किमिति छलेनामूनि व्यञ्ज-नानि सङ्ख्यातुं गणयितुं असौ गोलकावली भूयसी बहुतरा कठिनी खटिकेव तैः परिवेषकैरढौकि अर्पिता। भवद्भिर्व्यञ्ज-नसङ्ख्या पृष्टा तर्ह्यनया कठिन्या एतानि गणयतेति कठिनी वार्पितेत्युत्प्रेक्षा। इति वदताममूनि सङ्ख्यातुमिव व्याजेनासौ

याचतः स्वं गयाश्राद्धं भूतस्याविश्य कञ्चन।
नानादेशजनोपज्ञाः प्रत्येषि न कथाः कथम् ॥ ९० ॥

णीयम्। आदिशब्दाभ्यां कृषिवाणिज्यस्वामिसेवादिव्यवसाया-स्तत्फलाधानयश्च व्याख्याताः ॥ ८९ ॥

ननु स्मरति, अन्यदेहैर्मृते दृष्टिः, सन्देहेऽप्यन्यदेहाप्तेरित्या-दोहुत्तरमाह। याचत इति। पापवशादप्राप्तसद्गतेः पिशाचत्वा-दियोनिप्राप्तस्य स्वसम्बन्धिनमुदासीनं वा यं कञ्चनाविश्य सूक्ष्म-रूपेण तच्छरीरमधिष्ठाय स्वसम्बन्धि गयाश्राद्धं निजदुर्गतिं परिजिहीर्षया गयायां श्राद्धंप्रयागे माघस्नानादिजन्यं पुण्यवि-शेषं याचतो मम सद्गतिप्राप्त्यर्थमिदं करणीयमिति प्रार्थय-मानस्य, एवं कृते मोचिष्यामीति वदतः प्रेतस्य, सम्बन्धिनीः नानादेशेभ्य आगता जनास्तेभ्य उपज्ञाः श्रुतास्तैर्वा ज्ञाताः सत्यत्वेन सर्व्वेषां सम्मताः कथाः कथं न प्रत्येषि। तासु कथं न विश्वसिषि। अपि तु नानाविधप्रामाणिकजनसंवादसिद्धत्वात् पूर्व्वजन्मकथनात् पूर्व्वं मयात्रैतावत् सुवर्णादि निचितं तत् पश्य-तेति निध्यादिदर्शनसंवादाद् देशान्तरकालान्तरप्रवृत्तिकथ-नाद् गयाश्राद्धादौ कृते तस्य सद्गतेरनुमानाच्च ताः सर्व्वथा विश्वसितुं योग्या इत्यर्थः। एतेन तीर्थादिभावविशेषपरलोक-देहान्तरप्राप्तिधर्म्माधर्म्ममूलस्वर्गनरकादिप्राप्तीनां प्रामाण्यं स-मर्थितं। नानादेशजनेन उपज्ञानुभविता यासान्ताः सर्व्वमा-त्रिका इत्यर्थः ॥ ९० ॥

नीतानां यमदूतेन नामभ्रान्तेरुपागतौ।
अद्धत्से संवदन्तीं न परलोककथां कथम्॥ ९१॥
जज्वाल ज्वलनः क्रोधादाचख्यौ चाक्षिपन्नमुं।
किमात्थ रे किमात्थेदमस्मदग्रे निरर्गलम्॥ ९२॥

को हि तद् वेदेत्यादेरुत्तरमाह। नीतानामिति। प्राणापकर्षणार्थं यमेनैव प्रेषितेन यमदूतेन देवदत्तमानयेत्यादिष्टेन समानतया भ्रान्तेर्हेतोः स्थूलशरीराल्लैङ्गिकं शरीरमाकृष्य यो देवेनानायितः सोऽयमानीत इति यमसामीप्यं नीतानां मरणीयादन्येषां जनानामुपागतौ मत्यामानायितो यः सोऽयं न भवति पुनरयं मर्त्यलोकं नेय इत्येतत्सदृशमन्यमानयेति यमचित्रगुप्ताभ्यामुक्ते सति प्रत्यावृत्तौ भौतिकशरीरमध्ये लैङ्गिकशरीरे पुनः प्रविष्टे सति तद्बान्धवैरेतावत् पर्य्यन्तं किं जातं त्वं कुत्र गतः किंवा तत्र दृष्टमित्यादि प्रश्ने कृते यमदूतैर्यमं प्रापितस्तेन च पुनरायुःशेषादत्र पातितोऽहम्। स्वर्गो नरकश्चैवंविध इतिप्रकाशकश्रुतिस्मृतिप्रमाणेषु यथा स्वर्गादिरूपं श्रुतं तादृशस्यैव तस्य कथनात् संवदन्तीं संवादं कुर्वन्तीं परलोकसम्बन्धिनीं अखिलकथां कथं कुतो हेतोस्त्वं न श्रद्धत्से परलोकास्तित्वे प्रमाणरूपां न मन्यसे वद। न किञ्चिदविश्वासे कारणमस्ति। तस्मात् परलोकोऽस्त्येवेति भावः॥ ९१॥

जज्वालेति। अथ ज्वलनोऽग्निः क्रोधाज्जज्वाल, अमुं चार्वाकं चाक्षिपन् परुषभाषणैरधिक्षिपन्निति आचख्यौ, ऊचे च। इति

महापराक्रिणः श्रौतधर्म्मैकबलजीविनः ।
क्षणाभक्षणमूर्च्छाल स्मरन् विस्मयसेऽपि न ॥ ८३ ॥

किं । रे चार्वाक नीच त्वमस्माकं वैदिकानामग्रे निरर्गलं निर्भयं यथा तथा इदं पूर्व्वोक्तप्रकारं किमात्थ किं ब्रूषे इति। अतः परमेवं चेद्वक्ष्यसि तर्हि तव कण्ठोष्ठमेव कुण्ठयिष्यामीत्यर्थः । क्रोधाविष्टजातिरियं। क्रोधावेशद्योतनार्थमेव वीप्सायां पुनरुक्तिः ॥ ८२ ॥

इदानीं नाश्नाति स्नातीत्यादेरुत्तरमाह । महेति। हे क्षणं क्षणमात्रमभक्षणेनाभोजनेन मूर्च्छालातिविह्वल रे नास्तिक द्वादशादिबहुदिवसोपवाससाध्यमहापराकाख्यव्रतवतस्तान् ब्रह्मचारिणः श्रौतस्मार्त्तरूपेणैकेन बलेन जीविनः प्राणधारणशीलानेवम्भूतान् मनुष्यान् स्मरंश्चिन्तयन्नपि किं न विस्मयसे। एतावन्ति दिनान्येतेऽभोजनाः कथमासत इत्याश्चर्यं न प्राप्नोषीत्येतन्महच्चित्रम् । क्षणमात्रमप्यभोजनपीडायाः स्वेनैवानुभवे मासोपवासादिकारिणां जीवितधारणस्य प्रत्यक्षदर्शने च सत्यपि भवादृश एवं मूर्खो न विस्मयत इत्यर्थः। तस्माच्चिरमभोजनेऽपि जीवितधारणसामर्थ्याद्धर्मोऽस्त्येवेति । एकादश्युपवासादिकं धर्म्ममन्वयव्यतिरेकाभ्यां जानीहीति भावः । पराक्रिणः ; शेषत्वाविवक्षायां द्वितीयाबहुवचनं। शेषत्वविवक्षया अधीगर्थेति (पा० २।३।५२) षष्ठ्येकवचनं वा । मूर्च्छाल । अस्त्यर्थे सिध्मादिषु क्षुद्रजन्तूपतापाभ्यां चेष्यत इति वचनादुपतापकारित्ववचनादुपकारकारित्वाल्लच्। विस्मयसे न किमिति च पाठः ॥ ८३ ॥

पुत्रेष्टिश्येनकारीरीमुखा दृष्टफला मखाः।
न वः किं धर्म्मसन्देहमंदेहजयभानवः॥ ६४॥

इदानीं यावोन्मञ्जनवत्, एकं सन्दिग्धयोस्तावदित्यादेरुत्तरयति। पुत्रेति। भो नास्तिकाः पुत्रप्राप्त्यर्थं विहितः पुत्रफलको यागः पुत्रेष्टिः, श्येनेनाभिचरन् यजेतेति वेदवाक्यविहितः श्येनसाधनकोऽभिचारफलको श्येनः, तथा कारीरीं निर्वपेत वृष्टिकाम इति वंशाङ्कुरसाधनको वृष्टिफलको यागः कारीरीत्युच्यते, एते यागा मुखमादिर्येषां ते, तथा दृष्टप्रत्यक्षानुभूयमानसुतसम्भूतिवैरिमारणजलवर्षादिरूपं फलं प्रयोजनं येषां ते मखा वो नास्तिकानां युष्माकं धर्मोऽस्ति वा नास्ति इति धर्मसम्बन्धी सन्देहो वेदवाक्यविहितादृष्टफलकयागादिरूपो धर्मस्तत्सम्बन्धी वा, अदृष्टफलकयागादिविधायकवेदवाक्यान्येव वा धर्महेतुत्वाद्धर्मस्तत्सम्बन्धी वा यः प्रामाण्याप्रामाण्यसन्देह एव मन्देहा सन्ध्यादये सूर्य्यग्रासार्थमुत्पद्यमाना षष्टिसहस्रसार्द्धतिस्रः कोटयो राक्षसाः तेषां जये विनाशे भानवः सूर्य्यरूपा विनाशका न किं भवन्ति। एवं दृष्टापि धर्मो न मन्यसे चित्रमित्यर्थः। किं न अपि तु भवन्त्येवेति वा।

तिस्रःकोट्योऽर्द्धकोटी च मंदेहा नाम राक्षसाः।
उदयन्तं सहस्रांशुमतियुद्धन्ति ते सदा॥
गायत्र्या चाभिमन्त्र्योर्द्धं जलन्तिः सन्ध्ययोः क्षिपेत्।
तेन शाम्यन्ति ते दैत्या वज्रभूतेन वारिणा॥

दण्डताण्डवनैः कुर्व्वन् स्फुलिङ्गालिङ्गितं नभः।
निर्ममेऽथ गिरामूर्म्मीर्भिन्नमर्म्मेव धर्म्मराट् ॥ ८५ ॥
तिष्ठ भोस्तिष्ठ कण्ठोष्ठं कुण्ठयामि हठादहम्।
अपष्टु पठनः पाठ्यमधिगोष्ठि शठस्य ते ॥ ८६ ॥

इत्यादिवाक्यप्रामाण्याद्गायत्र्याभिमन्त्रितजलप्रक्षेपेण तन्नाशगुरःसरमेव सूर्य्योदयात् सूर्य्य एव तान् विनाशयतीत्युच्यते। तथा च सूर्य्यो यथा तान्नाशयति तथा मद्वैरपि भवदीयमन्देहो विनाश्य एवेति प्रामाणिकमेव सर्व्वं जानीहि ॥ ८४ ॥

दण्डेति। अथाऽग्निवचनानन्तरं धर्म्मराड्यमः स्वायुधस्य दण्डस्य ताण्डवनैरितस्ततश्चालनैः नभः स्फुलिङ्गैरालिङ्गितमग्निकणाकीर्णं कुर्व्वन् रचयन् चार्व्वाकवाक्यैरैर्भिन्नमर्म्मेव विदारितजीवस्थान इवावहमानो गिरामूर्म्मीर्वाक्यपरम्परा निर्ममे ऊचे इत्यर्थः। ऊर्म्मिपदेन वाचामप्रतिहतप्रसरत्वं सूचितं। ऊर्म्मिर्वा स्त्रियामिति स्त्रीलिङ्गेऽपि ॥ ८५ ॥

तदेवाह। तिष्ठेति। भो नास्तिक तिष्ठ तिष्ठ क्षणमात्रं यद्दस्य धर्म्मदूषणादिरमेति वा। अयमहं अधिगोष्ठि गोष्ठ्यामिन्द्रादिसभायां अपष्टु प्रतिकूलं पाठ्यं पठनार्थं वचनं पठतो भाषमाणस्य शठस्य वाक्छलमात्रनिष्ठस्य नास्तिकाधमस्य ते तव कण्ठोष्ठं कण्ठनालमोष्ठौ च हठाद्बलात्कारेणेदानीमेव कुण्ठयामि वर्णोच्चारणाशक्तं करोमि दण्डेन चूर्णयामीत्यर्थः। सर्व्वाणि विशेषणानि दण्डताडने हेतवः। अथ चैवंविधस्य ते

वेदैस्तद्वपिभिस्तद्वत् स्थिरं मतशतैः कृतम्।
परं कस्ते परं वाचा लोकं लोकायत त्यजेत्॥ ९७॥
समज्ञानाध्वभूयिष्ठपान्थवैमत्यमेत्य यम्।
लोके प्रयासि पन्थानं परलोके न तं कुतः॥ ९८॥

अधिगोष्ठि कथामधिकृत्य वाचो युक्तौ कण्ठोष्ठं कुण्ठयामि युक्त्या प्रतिहतत्वादक्षमसमर्थं करोमि। सर्व्वमपि भवच्छास्त्रं दूषयिष्यामीत्यर्थः। वाग्व्यापारं प्रति कण्ठोष्ठस्यैव दण्डो युक्तः। अयमपि क्रोधाद्धुङ्काराविष्कारे। तिष्ठ तिष्ठेति क्रोधातिशयद्योतनार्थं पुनरुक्तिः। कण्ठोष्ठं प्राण्यंगत्वादेकवद्भावः। कुण्ठयामि, वर्त्तमानसामीप्ये भविष्यति लट्॥ ९६॥

इदानीं श्लोकत्रयेण परलोकं धर्म्मञ्च साधयन् को हि वेद, तर्काप्रतिष्ठत्वेत्येवमादेरुत्तरमाह। वेदैरिति। चतुर्भिः ऋग्वेदादिभिर्वेदैर्यथास्थिरीकृतं तद्वत्तस्य वेदस्य वेपच्छाया तद्युक्तैः तदंशोपजीविभिः वेदानुसारिभिर्मतानां शतैः स्मृतिपुराणादिभिः वादिप्रतिवादिभेदैर्मीमांसादिशास्त्रैश्च स्थिरं कृतं निश्चयेन व्यवस्थापितं परं श्रेष्ठं अन्यच्च स्वर्गादिलक्षणं लोकं हे लोकायत नास्तिकाधम परं केवलं ते वाचा निर्युक्तिकेन वचनमात्रेण कोऽपि विद्वान् त्यजेत् अपि तु न। किन्तु सर्व्वैरपि तद्युक्तिभिः परलोकः स्वीकृत एवेत्यर्थः। तदस्तित्वे सन्देहापादिनी को हि वेदेत्यादिश्रुतिस्त्वन्यपरेति भावः॥ ९७॥

समेति। एकस्मिन्मार्गादावर्थे समज्ञाना तुल्यमतयोऽप्ये

स्वकन्यामन्यसात्कर्त्तुं विश्वानुमतिदृश्वनः।
लोके परत्र लोकस्य कस्य न स्याद्दृढं मनः॥ ९९॥

ऽप्यसङ्ख्या भूयिष्ठा बहुतरसङ्ख्यास्ते यान्यास्तेषां वैमत्यं मार्गा-न्यत्वविरोधमेत्य प्राप्य ज्ञात्वा वा इह लोके यं पन्थानं तमेव प्रयामि परलोकेऽपि विषये तमेव तादृशमेव मार्गं कुतो हेतोर्न गच्छसीति प्रश्नः। अपि तु तमेतमेव गच्छेत्युपदेशो वा। यथा केनचिदात्मनो दक्षिणो वा काशीमार्गं इति मार्गं पथिकेषु पृष्टेषु पञ्चषैर्वाममार्गे कथिते सति पञ्चाशद्भिर्दक्षिणमार्गे कथिते "द्वैधे बहूनां वचनं ग्राह्यं इत्यादि" न्यायात् कुशलेन पञ्चाश-दुक्तमार्गेणैव गम्यते, एवं परलोकेऽप्यल्पविमतिं निरस्य बहुनु-गत एव मार्गः किमिति नाश्रियत इत्यर्थः। परलोकमार्गस्य लक्षणया धर्मस्य कथं न मन्यसे, अपि तु तमेवाङ्गीकुरु। पर-लोकसत्ताभिश्चयमपि गन्तव्यग्रामवत् कुर्विति भावः। नर्काप्र-तिष्ठयेत्यस्याप्येतदुत्तरं ज्ञेयं॥९८॥

बहुसम्मतिमेव दर्शयति। स्वकन्यामिति। स्वकन्यामात्म-पुत्रीमन्यसात्कर्त्तुमन्यस्मै वराय अधीनां देयां कर्त्तुं विश्वेषां सर्व्वेषां श्रुतिस्मृतिपुराणादीनां लोकानां चानुमतिं सम्मतिं दृष्टवतोऽनुभवतः तथा कुर्व्वतश्च कस्य जनस्य परत्र लोके स्वर्गादौ मनो दृढं निःसन्देहं निश्चलं न स्यादपि तु सर्व्वस्यापि स्यादेव। न केवलमन्यस्यैव किन्तु चार्वाकस्य तवापीत्यर्थः। सर्व्वोऽपि परलोकबाधभिया स्वकन्यामन्यस्मै ददाति। यदि

कस्मिन्नपि मते सत्ये हताः सर्व्वमतत्यजः ।
तद्दृष्ट्वा व्यर्थतामात्रमनर्थस्तु न धर्म्मजः॥१००॥

परलोको नाभविष्यत्तर्हि स्वपुत्रीमन्यस्मै कथमदास्यत् । अयमाचारः सर्व्वेषां सम्मतः । स च त्वयाप्यन्यस्मै पुत्रीदानादङ्गीकृत एव । अन्यथा स्वपुत्र्याः स्वेनैव ग्रहणमापद्येत । तस्मादन्येषामनुमतिं दृष्ट्वैव यथा कन्याऽन्यस्मै दीयते तथा बहुसम्मतिदर्शनात् परलोकमप्यङ्गीकुर्विति भावः । अन्यथात्। देयेचाचेति (पा०५।४।५५) त्रातिः । विश्येति पूर्व्ववत् ॥ ९९ ॥

श्लोकद्वयेन श्रुतिस्त्वयर्थबोधेषु, तर्कोमतिष्ठयेत्यादेरुत्तरमाह। कस्मिन्निति । धर्म्मपरलोकादिप्रतिपादनपराणां बहूनां मतानां मध्ये एकस्मिन्नेकस्मिन्नपि मते सत्ये सत्यत्वेनाङ्गीकृते सति सर्व्वमतत्यजः सर्व्वमतत्यागिनः परस्परविरोधात् सर्व्वमतासत्त्ववादिनो नास्तिका यूयं हता मारिताः । तत्रायं सन्धिः । मतानामसत्यत्ववादिभिः किञ्चिन्मतं सत्यमङ्गीक्रियते न वा, चेदङ्गीक्रियते तर्हि कस्यापि कन्यादानादिप्रतिपादकस्य स्वीयमतस्यैव वा सत्यत्वाङ्गीकारात् सर्व्वमप्रमाणमिति सर्व्वासत्यत्ववादिनो व्याघाताय सिद्धान्ताभ्यां दूषिता एवेति वैदिकसिद्धान्तो निर्द्दोष इत्यायातं। न वेत्यपि पक्षे नास्तिकमतस्याप्यसत्यत्वादसत्यभूतस्य दूषकत्वाभावान्निर्द्दोषो वैदिकः पक्षः सिद्ध एवेत्यपि नास्तिका दूषिताः। निर्द्दोषत्वेऽपि वैदिकपक्षानङ्गीकारे स्वपक्षोऽपि नैवाङ्गीकार्य्य इत्यादि ज्ञेयम्।एवञ्च तर्कस्य मतस्य

क्वापि सर्व्वैरवैमत्यात् पानित्यादन्यथा क्वचित् ।
स्यातव्यं श्रौत एव स्याद्धर्म्मे शेषेऽपि तत्कृते ॥ १०१ ॥

दृष्ट्या सत्यताज्ञानेनोभयवादिसिद्धतया पुत्रेष्ट्यादौ पुत्रजन्मादिफलसिद्धौ सत्यां यत्र क्वचित् फलव्यभिचारस्तत्र कर्म्मणो वैफल्याद् व्यर्थतामात्रं फलसाधनत्वराहित्यमात्रं तु पुनः अधर्म्मः प्राचीनपुत्रवियोगादिर्निरर्थकः । दुःखराशिः धर्म्मजो न, पुत्रेष्ट्यादिधर्म्मजन्यो न भवति, विपरीतं तु धर्म्मेण न जन्यते, किन्तु प्राचीनदुष्कर्म्मनिमित्तमेव । केवलं तु काकतालीयन्यायेन तस्य पुत्रेष्ट्याद्यनन्तरभावित्वं । न च तावतैव तत्कार्य्यत्वमिति व्याप्तेरित्यर्थं इत्यादि ज्ञातव्यम् । कस्मिन्नपि मातृगमनादिनिषेधे स्वकन्यादानादौ विषये च वैदिके मते सत्ये सति तस्मिन्नंशे सत्यत्वेऽङ्गीकृते सति सर्व्वमतमसङ्गतमिति वदन्तो नास्तिका हताः । मातृगमननिषेधादेरंशस्य भवद्भिरपि परिपालनादित्यर्थः । तथा च तद्दृष्ट्या कन्यादानमातृगमननिषेधादिरूपाणां सत्यानां विधिनिषेधांशानां दृष्टान्तेनान्यत्रांशे व्यर्थतामात्रं वचनमात्रेण व्यर्थमित्युच्यते न तु धर्म्मजो वास्तवोऽनर्थः प्रयोजनाभावः । तद्दृष्टान्तेन व्यर्थतामात्रमन्यत्राव्यर्थतैवेति चेत्यप्रसक्तिप्रसङ्गेन ॥ १०० ॥

उपसंहरति । क्वापीति । सर्व्वैर्नास्तिकैरपि क्वापि कस्मिन्नपि स्वभिमाकन्यादानादौ श्रौते वेदोक्त एव धर्म्मे स्यातव्यं । कुतः । अवैमत्यात् सर्व्वेषामित्यर्थः शेषः श्रौतानां यौद्धानां माध्यमि-

कानामपि सम्प्रतिपत्तेः। अहिंसादेरस्तेयस्यनिषिद्धत्वादङ्गीकर्तव्येत्यर्थः। स्यातव्यमेवेति वा। तथा कश्चिद्वर्णाश्रमाधिकारविहिते अन्यथा करणे निषिद्धाचरणे च पातित्यदोषाद्विहिताकरणनिषिद्धाचरणप्रत्यवायभयादपि श्रौत एव धर्मे स्यातव्यं। अन्यथा वैमत्येऽपि श्रौत एव कश्चित् कस्मिंश्चिद्धर्मे स्यातव्यं। कुतः। पातित्यात्। यत्तु श्रौते धर्मे तेषां विप्रतिपत्तिस्तदनङ्गीकारेऽपि प्रत्यवायः स्यादित्यङ्गीकार्य्य एवेत्यर्थ इति वा। एवं शेषेऽपि नित्यनैमित्तिकाभ्यामतिरिक्ते काम्ये जोतिष्टोमादावपि स्यातव्यं। कुतः। तत्कृते तस्य वेदस्य कृते कारणाद्वेदविहितत्वाविशेषादित्यर्थः। यद्वा तत्कृते वेदमूलत्वाच्छेषे स्मार्त्तेऽपि धर्मे स्यातव्यं, सदाचारानुमितस्मृत्या श्रुतेरनुमानात्। स्मार्त्तधर्मा अपि वेदमूला इति तेऽप्यङ्गीकर्त्तव्या इत्यर्थः। एतेन यस्मिन्नास्तीति, अनेन जानतेति, एकस्य विश्वपापेनेति, स्वश्च मश्च चेत्यादेः सर्व्वस्याप्युत्तरं दत्तम्। धातुवादादि दिक्प्रामाणिकमेव। असिद्धिस्तु साधनवैगुण्यादिति सर्व्वमपि समर्थितमिति ज्ञेयम्। तत्कृतमिति पाठे हेतुगर्भविशेषणं। तस्मान्न मतानामप्रामाण्यं। श्रुतिस्मृत्योरेकमत्यमथ्यविरुद्धमिति श्लोकद्वयतात्पर्यार्थः। अहिंसादयः सत्युक्ताः सर्व्वसाधारणधर्मास्तेषु क्वापि श्रौतेऽपि धर्मे स्यातव्यं। पातित्यादित्युभयत्रापि हेतुः। सर्व्वेषामनुमते विहिते चेन्न स्थीयेत तर्हि विहितस्याननुष्ठानादिति एतैः पातित्यमित्यर्थः। तथा च विहितानां केषाञ्चिद्वर्णिभिरनुष्ठानान्निषिद्धानां केषाञ्चिद्वर्णिभिरपि वर्जनात् सर्व्वेषां विमते

बभाण वरुणः क्रोधादरुणः करुणोज्झितम् ।
किं न प्रचण्डात् पाषण्डपाश पाशाद्बिभेषि नः ॥ १०२ ॥
मानवाशक्यनिर्म्माणा कूर्म्माद्यङ्कविला शिला ।
न श्रद्धापयते मुग्धास्तैर्थिकाध्वनि वः कथं ॥ १०३ ॥

निषिद्धे चेत् स्थीयते । तथा निन्दितस्य सेवनादिस्तुतौ पातित्य-मित्यर्थः । तथा चैतद्दृष्टान्तेनान्येष्वपि विधिनिषेधांशेषु तत्त्वतः श्रौतत्वाविशेषादेव हेतोः स्यातव्यं । तेऽपि प्रामाणिकत्वे स्वीकार्या इति वा व्याख्या इत्यादि ज्ञातव्यम् ॥ १०१ ॥

बभाणेति । क्रोधादरुणो रक्तकायकान्तिः वरुणः करुणया उज्झितं वचो नितरां परुषं यथा बभाण । हे पाषण्डपाश नास्तिकाधम त्वं नोऽस्माकं प्रचण्डाद्दुःसहात्पाशात्त्र बिभेषि किं । कुत्सायां, याप्ये पाशबिति (पा० ५।३।४७) पाशप्प्रत्ययः ॥ १०२ ॥

मानवेति । मानवैर्मनुष्यैरशक्यं निर्म्माणं यस्याः तथा कूर्म्मव-राहनरसिंहाद्यवतारचिह्नानि येषामेवंविधं विलम्बिवरं यस्याः सा च शिला गण्डकाख्या तीर्थविशेषसम्भवा शालग्रामशिला, सा मुग्धा मूर्खाः तीर्थिकाध्वनि सेश्वरमार्गे वैदिकाध्वनि वा वो युष्माकं कथं न श्रद्धापयते आस्तिक्यं न प्रापयति । चित्रमेत-द्भवतां मूर्खतरत्वमित्यर्थः । मनुष्यैरशक्यरचनं सावयवत्वेन कार्यं शिलादिस्वनिर्म्माणशक्तमिच्छामात्रेण कर्त्तारं मनुष्यादिलक्षण-मीश्वरमाक्षिपति । विमतं सकर्तृकं कार्य्यत्वाद्घटवत् । अनुमाना-त्पक्षधर्मतायमादिलक्षणे कर्त्तरीश्वरे सिद्धेऽपि कथमत्राविश्वास

शतक्रतूरुजाद्याख्याविख्यातिर्नास्तिकाः कथम्।
श्रुतिवृत्तान्तसंवादैर्न वश्चमदचीकरत् ॥ १०४ ॥

इत्याशयः। एतेन देवश्चेदस्ति सर्व्वज्ञ इत्यादेरुत्तरं दत्तमिति ज्ञेयम् ॥ १०३ ॥

शतेति। भो नास्तिकाः शतक्रतुश्च श्रीविष्णोरूरुभ्यां अजायत इत्यूरुजो वैश्यः स आदिराद्यो वा येषां ते ब्राह्मणादिवर्णाश्च तेषामाख्या शतक्रतुमुखजबाहुज इत्यादीनि नामानि तेषां विशेषेण ख्यातिर्वार्त्ता श्रुतिवृत्तान्तसंवादैः वेदोक्तेतिहासैः करणैः वो युष्मान् कथं न चमदचीकरत् चमत्कारं नाकारयदपि तु आश्चर्यं भवतां तयोत्पादं। चमदित्यव्ययमाश्चर्य्ये। शताश्वमेधक्रतुकारीन्द्रो भवति। इन्द्रस्यैव शतक्रतुत्वं वेदेषूक्तम्। लोकेनापीन्द्र एव शतक्रतुत्वेन व्यवह्रियते न तु वह्न्यादिरिति। तथा च ब्राह्मणोऽस्य मुखमासीदित्यादिना श्रुत्या ब्राह्मणक्षत्रियादीनां मुखजत्वबाहुजत्वाद्युक्तं। लोकेनापि ब्राह्मणादय एव मुखजत्वबाहुजत्वादिभिर्व्यवह्रियते न तु विपर्य्ययेणेति वेदोक्तेन सह लोकस्यानुभूयमानत्वात्। संवादादपि वेदे यथोक्तं तथैव लोको व्यवहरत्याश्चर्य्यमेतत्। आश्चर्यं पूर्व्वं वेदप्रामाण्यं कथं न विश्वसिथेत्यपि तु विश्वसनीयं तचेत्याशयः। ऊरुजपदं वृत्तानुरोधात् प्रायोजि। तथापि सर्व्वेऽपि वर्णाः संगृहीताः। विख्यातिः प्रयोजिका संवादैः प्रयोज्यैर्वा युष्माकमदाश्चर्य्यं कथं न कारयामासेति वा। शतक्रतुश्च ऊरुजावंशौ च तदादि सङ्क्रिर्मनयो-

तत्तज्जनकृतावेशान् गयाश्राद्धादि याचिनः।
भूताननुभवन्तोऽपि कथं श्रद्धत्थ न श्रुतीः॥ १०५॥
नामभ्रमाद्यमं नीतानथ स्वतनुमागतान्।
संवादवादिनो जीवान् वीक्ष्य मा त्यजत श्रुतीः॥ १०६॥

त्यादि व्याख्या येषां यामाद्य वज्रादीनां मेनकादीनाञ्च तेषां लोके प्रसिद्धैर्वेदयुक्तान्तसंवादैर्हेतुभिर्युष्माकं कमाश्चर्यं नाचीकरत्। लोकवेदप्रसिद्धानिन्द्रादीनुर्व्वश्याद्यप्सरसश्चैतान् सर्व्वान् प्रत्यक्षेणैव पश्यतेत्यर्थः। तथा च वेदस्तन्मूलं परलोकादि च प्रामाणिकमेवेदमिति भाव इति वा। प्रथमव्याख्याने च इति चकोरि (पा॰१।४।५२) त्यणौ कर्त्तुर्णौ कर्म्मत्वं, चमदिति च कर्म्मान्तरं। संवादैरिति करणे तृतीया। पक्षान्तरे तु तेनैव सूत्रेणाणौ कर्त्तुः कर्म्मत्वाभावादनभिहिते कर्त्तरि संवादैरिति तृतीया। च इति षष्ठी॥ १०४॥

तदिति। तेषु तेषु जनेषु कृतावेशान् कृतसञ्चारान्, तथा गयाश्राद्धादि याचिनो गयापिण्डदानादिपुण्यं याचतः, प्राप्तप्रेतभावान् भूतान् प्राणिनोऽनुभवन्तोऽपि पश्यन्तोऽपि यूयं श्रुतीः कथं न श्रद्धत्थ सत्यत्वेन मन्यध्व इति पौनरुक्त्यं न शङ्कनीयं भिन्नवक्तृत्वादेवमुत्तरश्लोकेऽपि ज्ञेयम्॥ १०५॥

नामेति। नामभ्रमाद्यमदूतैर्यमं नीतान् प्रापितान् अथ मुक्तत्वात् प्रत्याहृत्य स्वतनुमागतान् प्राप्तान् संवादं चन्द्रः चयोत्यादि वेदसंवादं वदन्तीत्येवंशीलान् जीवान् वीक्ष्य श्रुतीः वेदान्

संरम्भैर्जम्भजैत्राद्यैः स्तभ्यमानादलादलन्।
मूर्ध्नि बद्धाञ्जलिर्देवानथैवं कश्चिदूचिवान् ॥ १०७ ॥
नापराधी पराधीनो जनोऽयं नाकनायकाः।
कालस्याहं कलेर्वन्दी तच्चाटुचटुलाननः ॥ १०८ ॥

मा त्यजत, अप्रामाणिकान् मा ब्रूत। एवं वेदप्रामाण्योपसंहारात् स्मृत्यादेरपि वेदमूलत्वात् उक्तसर्वधर्माणां प्रामाण्यं व्यवस्थापितम् ॥ १०६ ॥

संरम्भैरिति। अथ वेदवचनानन्तरं जम्भजैत्रः शक्र आदिर्यस्य, इन्द्रानलादीनां संरम्भैर्भ्रूभङ्गाद्याकारविकारैर्भीतेन कलिना पुरस्सरितुं स्तभ्यमानान्निषिध्यमानात्। इन्द्रादिसंरम्भान् दृष्ट्वा भयात् तत्सम्मुखं पदमपि चलितुमशक्ताद्दलात् कलिसैन्यात् वलन् पृथग्भवन् किञ्चिद्धार्ष्ट्यमवलम्ब्य द्वित्राणि पदानि सम्मुखमागच्छन् दीनत्वद्योतनपुरःसरं शक्रादिनमस्कारार्थं बद्धाञ्जलिः कश्चिदज्ञातनामा पापरूपत्वेनाज्ञातनामा चार्वाक देवान् एवं वक्ष्यमाणप्रकारेण ऊचे ॥ १०७ ॥

नेति। हे नाकनायका इन्द्रादयः अयं मल्लक्षणो जनो ऽपराधी न यतः पराधीनः। तदेवाह। कलेः कलिनाम्नः कालस्याहं वन्दी स्तुतिपाठकः। अत एव तस्य चाटुनि प्रियवचने विषये चटुलं प्रियवादि वावदूकं वा आननं यस्यैवम्भूतः, अथ च कालस्य लताग्ररूपस्य वन्दिनो हि यथाश्रयन्ति तत्प्रियं वदन्ति न च दण्ड्यार्हाः। तस्मादेतत्प्रियं वैदिकादिदूषणं मया

इति तस्मिन् वदत्येव देवाः स्यन्दनमन्दिरम् ।
कलिमाकलयाञ्चक्रुर्द्वापरञ्चापरं पुरः ॥ १०९ ॥
सन्ददर्शोन्नमद्ग्रीवः श्रीवङ्गत्वक्ताङ्गुतान् ।
तत्तत्पापपरीतस्तान्नाकीयान्नारकीव सः ॥ ११० ॥

ज्ञातं यदि न करोमि तर्ह्ययं दण्डयिष्यतीति परयुक्तत्वादपराधाभावं दण्ड्यः श्रीमद्भिरिति ॥ १०८ ॥

इतीति। देवास्तस्मिंस्तार्वाके इति पूर्व्वोक्तप्रकारेण वदति भाषमाणे सत्येव स्यन्दनमन्दिरं रथं कलिं अपरं द्वितीयं द्वापरञ्च पुरोऽग्रे आकलयाञ्चक्रुर्ददृशुः ॥ १०९ ॥

समिति। तैस्तैः प्रसिद्धैः ब्रह्महत्यादिभिर्मूर्त्तैः पापैस्तत्कारिभिः पुरुषैर्वा परीतः समन्ताद्व्याप्तः, तथा उन्नमन्ती दर्शनार्थमुच्चग्रीवा यस्यैवम्भूतः स कलिः श्रीवङ्गत्वेन कायकान्तिवाङ्गत्वेन भूषणादिसम्पदाङ्गत्वेन वा क्ताङ्गुतान् क्ताताश्चर्य्याम् अनाकीयान् स्वर्गरहितान् स्वर्गभवान् वा तान् इन्द्रादीन् सन्ददर्श। क इव नारकीव। यथा ब्रह्महत्यादिकारी आकण्ठनरकमग्न ऊर्द्धग्रीवो नरकस्थः पुरुष इव। पापकारित्वादहमेवंरूपः पुण्यत्वादेते दीप्तस्वरूपा इति ज्ञातवांश्च। नरकस्थोऽपि देवानां कायकान्तिदर्शनाज्जायमानसुखोऽनुष्ठितपापक्वतपश्चात्तापः सुरानार्त्ततया पश्यतीत्युपमा। उन्नतग्रीव इत्यपि पाठः। नाकीयानिति हितार्थे तस्मै हितमिति (पा०५।१।५) छ्वङ्गलाद्भवार्थे वृद्धाच्छ इति (पा०४।२।११४) वा छः। नारकी। नरकशब्दाद् इनिः ॥ ११० ॥

गुर्व्वीरीढावलीढः प्रागभून्नमितमस्तकः।
स त्रिशङ्कुरिवाक्रान्तस्तेजसैव विडौजसः॥ १११॥
विमुखान् द्रष्टुमप्येनं जनङ्गम इव द्विजान्।
एष मत्तः सचेलन्तानुपेत्य समभाषत॥ ११२॥

गुर्व्वीति। प्राग् दर्शनात् पूर्व्वमिन्द्रादयः केनापि एकदिकरणे, इत्यादिरूपया गुर्व्या महत्या रीढयाऽवलीढो व्याप्तस्तेषु कृतावज्ञोऽपि दर्शनानन्तरं विडौजस इन्द्रस्य तेजसा आक्रान्तः पराभूतः तिरस्कृततेजस्कः सन् अवज्ञां त्यक्त्वा स कलिः असमन्नपि बलात् स्वेनैव प्रकृतेजसैव वा नमितो नम्रीकृतो मस्तको यस्यैवम्भूतोऽभूत्। इन्द्रादीन्नमस्चकारेत्यर्थः। क इव। त्रिशङ्कुर्नाम सूर्य्यवंश्यो नृप इव। स हि स्वयाजने प्रार्थितेन पुरोधसा वशिष्ठेन निरस्तो गुरोर्वशिष्ठस्य अवज्ञया व्याप्तस्तस्मिन् कृतावज्ञ स्वाभिमानाद्विश्वामित्रेण सर्व्वकामिकं क्रतुं याजितस्तत्प्रभावात् सशरीर एव स्वर्गं गच्छन्निन्द्रेऽपि कृतावज्ञः संस्तत्तेजसा पराभूतः स्वर्गाद्भ्रंशितः। यथा पूर्व्वमिन्द्रे कृतावज्ञः संस्तत्तेजसा पराभूतः स्वर्गाद् भ्रंशित इत्येवं नमितमस्तकोऽभूदितीतिहासः। रीढावमाननावज्ञेत्यमरः॥ १११॥

विमुखानिति। मत्तः मगर्व्व एव कलिः सचेलं सविलासमुपेत्य समीपमागत्य तान् देवान् समभाषत। किम्भूतान्। एनं कलिं द्रष्टुमपि न केवलं भाषितुं स्प्रष्टुं वा किन्तु वीक्षितुमपि विमुखानसहमानान् सावज्ञान्। कः कानिव। मत्तो निर्गतो मदि-

स्वस्ति वास्तोष्पते तुभ्यं शिखिन्नस्ति न खिन्नता ।
सखे काल सुखेनासि पाशहस्त मुदस्तव ॥ ११३ ॥
स्वयम्वरमहे भैमीवरणाय त्वरामहे ।
तदस्माननुमन्यध्वमध्वने तत्र धाविने ॥ ११४ ॥

रामन्तो वा जनङ्गमश्चण्डालो दिशानिव। किम्भूतान् एनं चण्डालं द्रष्टुमप्यनर्हान्। चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमा इत्यमरः। गमश्चेति (पा॰ ३।२।४७) खच्। खित्वान्नुम् ॥ ११२ ॥

स्वस्तीति। हे वास्तोष्पते इन्द्र ते तुभ्य स्वस्ति क्षेममस्ति कच्चित्। तथा हे शिखिन्नग्ने ते तव खिन्नता चित्तक्लेशो नास्ति कच्चित्। हे सखे काल यम सुखेनासि किं। हे पाशहस्त वरुण तव मुदः सन्ति कच्चित्। गृहमात्रस्याधिपत्यादसामर्थ्यं तथैव ज्वालाजटिलत्व कुत्सितरूपत्वमायुधधारणवैयर्थ्यञ्च सम्बुद्धिभिः सूचितं। उत्तमानां कुशलप्रश्नाक्तैः सह स्वास्यन्तोभ्योऽधिकत्वं सूचयति। इन्द्राय स्वस्तिप्रयोगः स्वामिभावं ब्राह्मण्यं वा कलेर्द्योतयति। वर्णमात्रेण यमे सखिशब्दप्रयोगः। अयमेव गर्व्वोऽवज्ञा चेति ज्ञेयं। स्वस्त्याशीःक्षेमपुण्यादावित्यमरः। वास्तोष्पतिर्गृहमेधाच्चेति निपातात् साधुः। तुभ्यमिति। नमः-स्वस्तीति (पा॰ २।३।१६) चतुर्थी। इतरत्र तव सम्बन्धीयम् ॥ ११३ ॥

स्वयमिति। हे देवा वयं स्वयम्वररूपे महे उत्सवे भैमीवरणाय यस्मात् त्वरामहे सवेगाः स्मः तत्तस्मात्तत्र धाविने स्वय-

तेऽवज्ञाय तमस्योच्चैरहङ्कारमकारणम् ।
ऊचिरेऽति चिरेणैनं स्मित्वा दृष्टमुखा मिथः ॥ ११५ ॥
पुनर्वक्ष्यसि मामेवं कथमुद्वक्ष्यसे नु सः ।
सृष्टवान् परमेष्ठी यं नैष्ठिकब्रह्मचारिणम् ॥ ११६ ॥

स्वरस्थानं प्रति ऋजुगामिनेऽध्वनेऽस्माननुमन्यध्वमाज्ञापयत । त्वरावशादन्या गोष्ठी न क्रियते । आज्ञैव दीयतामित्यर्थः । अध्वने । तादर्थ्ये चतुर्थी ॥ ११४ ॥

त इति । ते देवाः पूर्वोक्तमकारणं निर्हेतुकं उच्चैरतिशयितं अस्य कलेरहङ्कारं दर्पमवज्ञाय मिथोऽन्योन्यं दृष्टमुखाः सन्तः मूर्खः स्वयम्वरार्थं किं करोतीति स्मित्वा हास्यं कृत्वाऽतिचिरेण पापीयसाऽनेन सह कथं वक्तव्यमिति बुद्ध्या भूयांसं कालं विलम्ब्यैनं कलिं प्रत्यूचिरे वक्ष्यमाणं बभाषिरे ॥ ११५ ॥

पुनरिति । हे कले त्वं स्वयम्वरार्थं गमिष्यामीति एकवारमज्ञानादुक्तं तदिदमतःपरं पुनर्मा मा एवं वक्ष्यसि मा मावोचः । यस्मात् परमेष्ठी यं त्वां आमरणं गुरुकुलनिवासिनं नैष्ठिकब्रह्मचर्य्यव्रतचारिणं सृष्टवान् (स तु पुनस्त्वं कथमुद्वक्ष्यसे परिणेष्यसि कृतयुगादयो निष्कलत्रा एव सृष्टाः) तस्मात्तव स्वयम्वरवार्त्ताऽनुचिताऽवकीर्णित्वापातात् । तस्मादेवं पुनर्मा स्म वोच इत्यर्थः । पापरूपं प्रत्युपहासवचनमेतत् । माशब्दस्य निरनुबन्धकत्वाद्वक्ष्यसीति वचेर्लृट् । मा मेति निषेधविपर्य्यार्थं वीप्सायां द्विरुक्तिः । परमे स्थाने तिष्ठति इति इनिः स च कित् ।

द्रोहिणं द्रुहिणो वेत्तु त्वामाकर्ण्यावकीर्णिनम् ।
त्वज्जनैरपि वा धातुः सेतुर्लङ्घ्यस्त्वया न किम् ॥ ११७ ॥
अतिवृत्तः स वृत्तान्तस्त्रिजगद्युवगर्व्वनुत् ।
आगच्छतामपादानं स स्वयम्वर एव नः ॥ ११८ ॥

अत्र आलोपः, अम्बाम्बेति (पा० ८।३।८७) सूत्रेण षत्वं । तत्रैव, परमे वर्हिरिति निपातनादेदन्तत्वं ।

नैष्ठिको ब्रह्मचारी तु वसेदाचार्य्यसन्निधौ ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि च ॥ इति स्मृतिः ॥ ११६ ॥

द्रोहिणमिति । द्रुहिणो ब्रह्मा त्वां पुत्रं अवकीर्णिनं क्षतव्रतं आकर्ण्य निजाज्ञाभङ्गाद् द्रोहिणं गुरुद्रोहकारिणं वेत्तु । एवं त्वया कृते ब्रह्मैवं ज्ञास्यतीति यावत् । अथ वा तेन ज्ञातेऽपि तव किं भयमिति सोपहासमाह । त्वज्जनैस्त्वदुपजीविभिः कामक्रोधादिभिरपि धातुः सेतुर्ब्रह्मकृता धर्म्ममर्य्यादा लङ्घ्यः त्वया पुनः किम् लङ्घ्यः । त्वदाज्ञया सेवका अपि ब्रह्माज्ञां लङ्घयन्ति त्वं लङ्घयसीति किमाश्चर्य्यमित्यर्थः । यदा त्वज्जनैरपि सेतुर्लङ्घ्यस्त्वया न लङ्घ्य इति किं वाच्यं । त्वदाज्ञालङ्घनसौचित्यात्र कार्य्यमित्यर्थ इति काका । धाताऽब्जयोनिर्द्रुहिण इत्यमरः । द्रुसत्यसुरेभ्यः, औणादिकः किन् ॥ ११७ ॥

स्वयम्वरं प्रत्यागमने हेत्वन्तरमपि सूते । अतीति । एवं विना सर्व्वपरित्यागात्त्रिजगत्सु वर्त्तमानानां यूनां तरुणानां सौन्दर्य्यविषयं गर्व्वं नुदतीति नुत् नाशकः स वृत्तान्तो भैमीस्वय-

नागेषु सानुरागेषु पश्यत्सु दिविषत्सु च।
भूमिपालं नलं भैमी वरं सावरद्वरम् ॥ ११९ ॥

स्वरोऽतिवृत्तो ऽतिक्रान्तः समाप्त इत्यर्थः। भवद्भिः कथं ज्ञातमित्यत आह। स स्वयम्वर एव। आगच्छतां नोऽस्माकमपादानं निश्चलोऽवधिभूतोऽर्थ इत्यर्थः। वयमपि तत्र गतास्तत एव आगच्छाम इति सर्व्वोऽपि वृत्तान्तोऽस्माभिर्ज्ञायत इति। अतोऽपि त्वया तत्र न गन्तव्यमिति भावः। विश्लेषे चञ्चलं स्थिरं वा यदुदासीनं तदपादानमिति वैयाकरणाः ॥ ११८ ॥

कथं यूनां गर्व्वनोदः को वा तया वृत इत्याशङ्कायामाह। नागेष्विति। नागेषु वासुकिप्रभृतिषु सानुरागेषु दिविषत्सु शक्रादिषु कौतुकवशादेव पश्यत्सु तान् सर्व्वाननादृत्य सा भैमी नागाद्यपेक्षया वरं सर्व्वगुणाश्रयत्वाच्छ्रेष्ठं भूपालं सार्व्वभौमं नलं नृवरं वरं परिणेतारमववरत् वरयामास। सर्व्वानादरेण नलवरणात् सर्व्वेषां सौन्दर्य्यगर्व्वो गत इत्यर्थः। पश्यत्सु दिविषत्सु इत्यनेनास्माभिः कौतुकार्थं वरदानार्थमेव च गतं न तु तद्वरणार्थमिति च व्याख्यान्तरेण सूचितमिति ज्ञेयम्। नागेष्वित्यादौ, षष्ठी चानादरे इति (पा० २।३।३८) सप्तमी। अववरत्। वर ईप्सायामिति चुरादावदन्तपाठात् स्वार्थणिजन्तादरयतेर्यालोपित्वात् सन्वद्भावादित्वदीर्घत्वाभावः ॥ ११९ ॥

भुजगेशानसद्वेषान् वानरानितरान् नरान्।
अमरान् पामरान् भैमी नलं वेद गुणोज्ज्वलम्॥ १२०॥
इति श्रुत्वा स रोषान्धः परमश्चरमं युगम्।
जगन्नाशनिशारुद्रमुद्रस्तानुक्तवानदः॥ १२१॥

किमिति ते परित्यक्ता इत्याशङ्कायां कारणमाह। भुजगेशानिति। भैमी भुजगेशान् वासुकिप्रमुखान् फणागणजिह्वाला-लनादिवैरूप्याद्सद्वेषानमनोहरान् वेद जानाति। तथा इतरान् नलादन्यान् नरान् मनुजाधीशान् चापल्यनिर्गुणताभ्यां वानरान् वेद। तथा अमरान् अचतुरत्वात् पामरान्नीचान् वेद। केवलं नलमेव गुणोज्ज्वलं श्रुतशौर्य्यौदार्य्यसौन्दर्य्यादिभिः प्रकाशमानं वेद। सर्व्वगुणाकरत्वान्नल एव तया वृतोऽन्ये तु परित्यक्ता इत्यर्थः। विवर्णः पामरो नीच इत्यमरः। वेदेति इदानीमपि तथैव प्रतीतेः सत्त्वाद्वर्त्तमानता। विभक्तिप्रतिरूपको निपातो वा। तथाऽज्ञासीदित्यर्थः॥ १२०॥

इतीति। चरममन्त्यं युगं स कलिः इतीत्थमादिवचनं श्रुत्वा परमोऽत्युत्कृष्टो रोषान्धः, रोषान्वितरां निर्विचारतया पुरःस्थमपि वस्त्वजानन्, अत एव जगन्नाशसम्बन्धिनी निशा, यस्यां निशि जगन्नाशो भवतीति यावत्, तत्सम्बन्धी प्रलयकाले सकलभूतग्रामसंहारसम्पन्नो रुद्रस्तद्वन्मुद्रा आकारो यस्य सः। क्रोधसमन्वितरामाविष्कृताकार इति यावत्। एवम्भूतः सन् तान् सुरानदो वक्ष्यमाणमुक्तवान्॥ १२१॥

कयापि क्रीडतु ब्रह्मा दिव्याः स्त्रीर्दीव्यत स्वयम्।
कलिस्तु चरतु ब्रह्म प्रैतु चातिप्रियाय वः॥ १२२॥

पुनर्वञ्चयसि मामेवमित्यादेरुत्तरमाह। कयेति। हे देवा ब्रह्मा कयाऽप्यतिसुन्दर्या गायत्र्यादिपदवाच्ययाऽज्ञातनामजातिगोत्रया वाऽथ चामरत्वाद् यस्या नामकथनेऽप्यस्माकं लज्जा भवति तया सुतया सह सुखेन क्रीडतु। तथा यूयं स्वयमात्मना दिव्याः स्वर्गभवा रम्भादीः स्त्रीः अहल्यामुख्या वा रमणीर्दीव्यत स्वेच्छया ताभिः सह सुरतक्रीडां कुरुत। प्रजापतिः स्वां दुहितरमभ्यधावदिति श्रुत्वा ब्रह्मणः स्वाच्छन्द्याद्भवतां सुतरां स्वाच्छन्द्यमिति स्वयमित्यनेनोक्तम्। कलिस्तु पुनर्ब्रह्मचर्याख्यं व्रतं यावज्जीवं चरतु वाऽथवा जीवन् कलिरस्मानुपहसिष्यतीति अनेन न जीवितव्यमिति वो युष्माकमतिप्रियाय नितरां तुष्टये प्रैतु म्रियतां। स्वयं सर्व्वैः स्वेच्छाचारः क्रियते मया तु स्वेच्छाचारो न कर्त्तव्यो मर्त्तव्यमेवेति कीदृगीयं भवतां परमदेवरीतिरिति सोपहासोक्तिः। अथ च यूयं ब्रह्मादयः सर्व्वेऽपि स्वेच्छाचारिणः स्वाच्छन्द्यं कुरुत नाम कलिस्तु न तादृगिति ब्रह्मैव चरतु युष्माकमप्यतिप्रियाय भैमीलक्षणाय वस्तुने प्रियतां। भवद्वत्स्वेच्छाचारं न करोमि किन्तु भैमीप्राप्तये प्रयत्नमेव मम मरणमेव स्यात्तदप्यस्त्विति भावः। अत्राप्युपहास एव तात्पर्य्यं क्रीडा चेति। दिवः कर्म चेति (पा॰ १।४।४३) करणस्यापि कर्मत्वात् स्त्रीभिरित्यर्थे स्त्रीरिति द्वितीया॥१२२॥

चर्य्यैव कतमेयं व परस्मै धर्म्मदेशिनाम् ।
स्वयं तत्र कुर्व्वतां सर्व्वं श्रोतुं यद्बिभित श्रुती ॥ १२३ ॥
तत्र स्वयम्वरेऽलम्भि भुव श्रीर्नैषधेन सा ।
जगतो ह्रीश्च युष्माभिर्लाभस्तुल्याभ एव व ॥ १२४ ॥

उपहासमेव प्रकटयति । चर्य्येति । हे देवा परस्मै अन्यस्मै जनाय स्वसुतादिगमनं न कार्य्यमिति धर्म्मदेशिना धर्म्ममुपदिशता स्वयं तद्ब्रह्महत्याम्वसुतादिगमनं सर्व्वं निषिद्धं कर्म्म कुर्व्वता वो युष्माकमियं कतमैव कैव चर्य्या आचाररीतिरपि तु न कापीत्याक्षेप । अचेतने अपि श्रुती कर्णौ यद्भवदीयमन्यादिगमनं कर्म्म श्रोतुं बिभित चकित । स्वेच्छाचारिणां भवतां परपीडायामेव तात्पर्य्यमिति भाव । चर्य्या । गदमदेति (पा० ३।१।१००) भावे यत् ॥ १२३ ॥

तत्रेति । तत्र स्वयम्वरे नैषधेन भुव श्री सौन्दर्य्याद्भूलक्ष्मी सा भैमी अलम्भि प्राप्ता । युष्माभिस्तु पुनर्जगतो ह्रीस्त्रैलोक्ये यावती वर्त्तते सा लज्जा जगत सकाशाद्वा, भैम्याऽनादृतत्वात् या लज्जा सा लब्धेति वो नत्वस्य युष्माकञ्च लाभोऽपूर्व्ववस्तुप्राप्तिस्तुल्याभ एवाभासते । तुल्याभ एव । भकारहकारमात्रवैरूप्य, इतरत्तुल्यमेव। भवद्भिर्लज्जैव लब्धा न तु भैमीति रूपस्य दर्पो वृथैवेति भाव । अयञ्च यूयञ्च यूय तेषां व एकशेष. ॥ १२४ ॥

दूरान्नः प्रेक्ष्य यौष्माकी युक्तेयं वक्रावक्रणा ।
लज्जयैवासमर्थानां मुखमस्माकमीक्षितुम् ॥ १२५ ॥
स्थितं भवद्भिः पश्यद्भिः कथं भोस्तदसाम्प्रतम् ।
निर्दग्धा दुर्विदग्धा किं सा दृशा न ज्वलत्क्रुधा ॥१२६॥

दूरादिति । आगच्छतो नोऽस्मान् दूराद् दूरत एव प्रेक्ष्य यौष्माकी इयं वक्रावक्रणा मुखकौटिल्यकरणं युक्तैव । किम्भूतानां । गुणीभूतस्य विग्रहान्तर्गतस्य युष्मच्छब्दस्य विशेषणं । यतो भैम्यहृतत्वात् सञ्जातलज्जयैव हेतुना ऽस्माकं मुखमीक्षितुमसमर्थानां । लज्जाशीलो ह्यन्यं दूरादेव दृष्ट्वा लज्जया मुखं न दर्शयति सलज्जा भवन्त इति युक्तमेवैतदिति भावः । अयमप्युपहासः । लज्जयेवेति पाठे उत्प्रेक्षा । प्रेक्ष्येति वक्रणापेक्षया समानकर्तृत्वं दूरादेव दृष्ट्वा । यौष्माकीति, तस्येदमिति (पा० ४।३। १२०) अणि, तस्मिन्नणि चेति (पा० ४।३।२) युष्माकादेशः । युष्माकमिति पाठः साधुः । एवमस्माकमित्यत्रापि द्रष्टव्यं । वक्रणेति नामधातोर्युच् ॥ १२५ ॥

स्थितमिति । भो देवाः तत्स्वयंवरं पश्यद्भिर्भवद्भिः कथं स्थितं औदासीन्येनेति शेषः । असाम्प्रतमनुचितमेतदित्यर्थः । दुर्विदग्धा भवदवज्ञानादचतुरा सा भैमी ज्वलन्ती देदीप्यमाना क्रुत् क्रोधो यस्याः तया दृशा दृष्ट्या किमर्थं न निर्दग्धा सुतरां न भस्मसात्कृता, अपि तु तादृक्सामर्थ्यसद्भावे तस्याश्च सापराधत्वे दग्धुमुचितं, तदपि न कृतमित्येतदप्यनुचितमेवेत्यर्थः ।

महावंशाननादृत्य महान्तमभिलापुका।
स्वीचकार कथं कारमहो सा तरलं नलम् ॥ १२७ ॥
भवादृशैर्दिशामीशैर्म्मृग्यमानां मृगेक्षणाम्।
स्वीकुर्व्वाणः कथं सोढः क्षतरीढस्तृणं नलः ॥ १२८ ॥

युक्ते द्वे साम्प्रतं स्थाने इत्यमरः। भोरिति प्रत्येकं सम्बुद्धिः ॥ १२६ ॥

महेति। कुलशीलादिना महान्तमुत्कृष्टं नलं अभिलापुका सा भैमी कश्यपसुतत्वान्महावंशान् दिव्यवस्त्रादिभूषणान् युष्मान् परित्यज्य तरलं चञ्चलस्वभावं अनिश्चितबुद्धिं नलं कथंकारं कथमिव स्वीचकार अहो आश्चर्यं। महान्तं कामयमानाया देवपरित्यागेन मनुष्यवरणात्महच्चित्रमित्यर्थः। अथ च या महापरिमाणं वाञ्छति सा विशालान् दृढान् वेणून् परित्यज्य तरङ्गस्पर्शमात्रेणापि चञ्चलं ह्रस्वञ्च नलाख्यं तृणमङ्गीकरोतीति चित्रमेव। अत एव सा किं न भवद्भिर्दण्ड्येति भावः। अभिलापुका। लषपत० (पा०३।२।१५४) इत्युकञ्। महान्तं इति, "नलोकेति (पा०२।३।६८)। षष्ठीनिषेधाद् द्वितीया। कथंकारं पूर्व्ववत् ॥ १२७ ॥

इदानीं नलः कथं सोढ इत्याह। भवादृशैरिति। भो देवा दिशामीशैर्महासमर्थैर्भवादृशैर्म्मृग्यमाणां काम्यमानां मृगेक्षणां भैमीं स्वीकुर्व्वाणः समुद्वहन् अत एव भवतां क्षतरीढः क्षतावज्ञः तृणतुल्योऽतिनिःसारः, अथ च नलशब्दवाच्यत्वात्

दारुणः कूटमाश्रित्य शिखी साक्षी भवन्नपि।
नावदत् किं तदुद्वाहे कूटसाक्षिक्रियामयम्॥ १२९॥
अहो महःसहायानां सम्भूता भवतामपि।
ममैवास्मै कलङ्काय देवस्यैवामृतद्युतेः॥ १३०॥

रूपभूतः स नलो भवद्भिः कथं केन प्रकारेण सोढः क्षान्तः। सा भवद्भिरभिलषिता तया तु भवन्तो नादृता इत्युपहासः। मृगेक्षणा। न लोकेति (पा० २।३।६९) षष्ठीनिषेधाद्द्वितीया। सोढः। तीषसहेति (पा० ७।२।४८) इड्विकल्पात्, यस्य विभाषेति (पा० ७।२।१५) निष्ठायां नेट्॥ १२८॥

दारुण इति। अयं शिखी वह्निर्दारुणः कूटं काष्ठराशिं आश्रित्याग्निसाक्षिके विवाहे साक्षी भवन्नपि साक्षाद्द्रष्टा भवन्नपि तत्र प्रकाशमानोऽपि तयोर्भैमीनलयोस्तस्य तस्या वा उद्वाहे विवाहे विषये कूटसाक्षिणोऽलीकसाक्षिणः क्रियां सत्यापलापलक्षणां किन्नावदत्, अपि त्वेतदप्यनुचितं कृतं। कूटसाक्षी हि परकीयं वस्त्वन्यस्मै दापयति। तदनेन साम्यमस्तु न स्थितमित्यग्निसाक्षिको विवाह एव न भवतीति भैमी नलेन नोढेति भैमी नलादन्यस्मै भवत्स्वेव मध्ये कस्मैचित् किमिति न दापितेत्यर्थः। अथ च दारुणः पापकारित्वादतिक्रूरः पुरुषः कपटमाश्रित्य व्यवहारे साक्षी भवन्नपि तथा चित्ते धृतस्य कार्यस्योद्वाहे कूटसाक्षित्वं धत्ते अत्र तु नेत्याद्यर्थः॥ १२९॥

अहो इति। हे देवा महःसहायानां तेजस्विनां दिव्यमू-

सा वव्रे यं तमुत्सृज्य मह्यमीर्ष्याजुषः स्थ किम् ।
ब्रूतागःसद्म नस्तस्माच्छद्मनाद्याच्छिनद्मि ताम् ॥ १२१ ॥

र्त्तीनां भवतामपि क्षमैवास्मै कलङ्काय, इन्द्रादिषु सत्स्वपि भैमी नलं वृतवतीति अपयशसे, अथ च नलकृतानादररूपाय, अथ च लज्जावशादन्यवनवीक्षणाशक्तिमुखमालिन्यरूपाय कलङ्काय सम्भूता । अहो महदाश्चर्य्यं । गुणभूतापि क्षमा दोषाय जातेत्यर्थः । महःमहायस्य तेजस्विनो देवस्य दीप्यमानस्यानन्तद्युतेश्चन्द्रस्येव । यथा चन्द्रस्य क्षमा भूमिः कलङ्काय जाता भवतामपीत्यपिशब्देन यत्र कलङ्कशङ्कापि नास्तीति सूचितम् । भूश्चन्द्रे कलङ्क इति ज्योतिर्विदः । महःमहायानामपीति वा चन्द्रस्य यथा तथा भवतामपीति समुच्चयार्थो वा । क्षमां परित्यज्य भवद्भिरन्यतरस्य चेद् दण्डो नाकरिष्यत् तदाऽपयशो नाभविष्यदिति भावः ॥ १२० ॥

सेति । हे देवाः सा भैमी यं वव्रे तं नलं उत्सृज्य यूयं स्थ मह्यं कलये किमिति ईर्ष्याजुषः अक्षान्तिपराः स्थ भवथ अपराधिनस्तस्यापकर्त्तुमशक्ताः सन्तोऽनपराधाय मह्यं किमिति ईर्ष्यायुक्ताः स्थेत्युपहासः । तस्माद्यूयं ब्रूत कथयत । अहं तस्मान्नलात् सकाशाच्छद्मना कपटेन कथमपि वञ्चयित्वा अद्यैव तामाच्छिनद्मि आहरामि । यत आगसो भवदनादररूपापराधस्य सद्माश्रयभूतस्तस्मात् । अविलम्बेनैव तामाहरामि गच्छेति मामनुमन्यध्वमित्यर्थः । अन्येनापराधे कृतेऽन्यस्मै द्रुह्यत इति युक्तमिति सोकण्ठीत्युपहासः । ब्रूत नो युष्माकमस्माकञ्चा-

यतध्वं सहकर्त्तुं मां पाञ्चाली पाण्डवैरिव।
सापि पञ्चभिरस्माभिः संविभज्यैव भुज्यताम् ॥ १३२ ॥
अथापरिवृढा सोढुं मूर्खतां मुखरस्य ताम्।
चक्रे गिरा शराघातं भारती सारतीव्रया ॥ १३३ ॥

गःमह्य अनादरकरणात् अपराधिनीं तां नलादानयामीति वा। मह्यं। क्रुधद्रुहेति (पा०१।४।३७) चतुर्थी। आच्छिनद्मि। वर्त्तमानसामीप्ये लट् ॥ १३१ ॥

यतध्वमिति। यूयं मां सहकर्त्तुं सहकारिणं कर्त्तुं यतध्वं यत्नं कुरुत। भैमीमानेतुमहं गच्छामि यूयं मम सहायार्थमागच्छतेत्यर्थः। तव साहाय्ये ऽस्माकं किं फलमित्यत आह। अस्माभिरिन्द्राग्नियमवरुणैर्मया सह पञ्चभिः सा भैम्यपि संविभज्य भोगकाले समानभागमेव कृत्वैवोपभुज्यतां। तथा च भवतामपि फलमस्तीति भावः।कैः केव।पञ्चभिः पाण्डवैः पाञ्चाली द्रौपदीव। पाञ्चालीदृष्टान्तैकस्याः पतिव्रताया बहुभिरुपभोगेन दृष्टचरा इत्यलौकिकत्वं परिहृतं। पाण्डवानामप्रभावित्वात् तदानीं दृष्टान्तत्वेन कलेर्योगित्वात् भविष्यदर्थज्ञानसामर्थ्यादेतत् युक्तम्। जगत्प्रवाहानादितया पाण्डवपाञ्चालीदृष्टान्तानामतीतत्वात्तदुदाहरणीकृत्यैतदुक्तमिति। पाञ्चाली। जनपदवाचिनः क्षत्रियस्याभिधायिनः पञ्चालशब्दः, जनपदशब्दात्क्षत्रियादिति (पा० ४।१।१६८) अपत्येऽञ् ॥ १३२ ॥

अथेति। अथ पूर्वोक्तकलिवचनाकर्णनानन्तरं तामुक्त-

कीर्त्तिं भैमीं वरांश्चास्मै दातुमेवागमन्नमी।
न लीढे धीरवैदग्धीं धीरगम्भीरगाहिनी॥ १३४॥

कारां मुखरस्यानुचितभाषणशीलस्य कलेर्मूर्खतां सोढुं चन्तुम-परिहृताऽसमर्था भारती सरस्वती अर्थगाम्भीर्यात् सारथा श्रेष्ठया पदयत्नाश्च तीव्रया दुःसहया गिरा कलेः शराघातं वाणव्यथामिव चक्रे वाणवत् पीडाकरं परुषं वचनमूच इत्यर्थः। भारतीत्रयेति पाठे अर्थगाम्भीर्येण दुःसहया॥ १३३॥

कीर्त्तिमिति। हे कले अमी देवा अस्मै नलाय भैमीं दातु-मेव, तथा भैमीं कामयमानोऽपि इन्द्राद्यर्थे भैम्या एव दूत्यं कृतवानेवंविधोऽतिधीरः कोऽपि नास्तीति कीर्त्तिं यशः, तथा भैमीच्च सत्यच्छलच्चां, तथोक्तप्रकारान् वरांश्चास्मै नलाय दातुमेवागमन् स्वयम्वरङ्कृतवन्तो न तु भैमीं वरीतुमिति त्वं नो वेत्सीत्यर्थः। देवा हि केनापि प्रकारेण परीक्ष्य परितुष्टाः सन्तो वरं ददते। कुतोऽहं न वेद्मीत्यत आह। यस्मादगम्भी-रस्य तलस्पर्शस्य गाहिनी स्पर्शिनी गम्भीरार्थग्राहिणी न भवती-त्यर्थः, एवम्भूता मूढानां बुद्धिर्धीराणां महाशयानां वैदग्धीं चातुरीं न लीढे न वेत्तीत्यर्थः। त्वं तु मूर्खत्वादेतेषां अभिप्रा-यमज्ञात्वोपहसितवानिति भावः। अधीरेत्यकारप्रश्लेषेण सम्बोध्य, अगम्भीरगाहिनी ते धीर्वैदग्धीमर्थादेतेषां न लीढ इति वा। हे अधीर्बुद्धिरहित मन्दबुद्धे कले अगम्भीरगाहिनो ते धीर-वैदग्धीमचातुर्य्यं नास्वादयत्यपि तु प्राश्नात्येवेति काका वा

वाग्मिनीं जडजिह्वस्तां प्रतिवक्तुमशक्तिमान्।
लीलावहेलितां कृत्वा देवानेवावदत् कलिः ॥ १३५ ॥
प्रैङ्खि वाञ्छितमस्माभिरपि तां प्रति सम्प्रति।
तस्मिन्नले न लेशोऽपि कारुण्यस्यास्ति नः पुनः ॥ १३६ ॥
वृत्ते कर्म्मणि कुर्म्मः किं तदा नाभूम तत्र यत्।
कालोचितमिदानीं नः शृणुतालोचितं सुराः ॥ १३७ ॥

व्याख्येयं। लीढे। लिहेः स्वरितत्वात्तङ्। क्वचिल्लेढीति पाठः ॥ १३४ ॥

वाग्मिनीमिति। कलिः वाग्मिनीं वाचो युक्तिपरम्पराचतुरां तां देवीं प्रतिवक्तुं प्रत्युत्तरं दातुं अशक्तिमान् असमर्थो यतः प्रत्युत्तरास्फुरणेन जडजिह्वः कुण्ठितवदनशक्तिः अत एव तां लीलया विलासव्याजेनावहेलितां कृत्वाऽप्रियं त्वां प्रति वक्तुमयुक्तमित्येवंप्रकारं परिहास्य देवानेवावदत् ॥ १३५ ॥

प्रैङ्खीति। हे देवाः सम्प्रति अस्माभिरपि तां भैमीं प्रति वाञ्छितं अभिलापः प्रैङ्खि परिमार्जितः त्यक्तमित्यर्थः। नोऽस्माकं पुनः कारुण्यस्य लेशोऽपि तस्मिन्नले नास्ति तस्मादपकर्त्तुं प्रवृत्तामहे इत्यर्थः। प्रैङ्खि। उङ्खिर्वर्जनार्थात् कर्म्मणि चिण् ॥ १३६ ॥

वृत्त इति। हे देवाः स्वयम्वरलक्षणे कर्म्मणि वृत्ते जाते सति किं कार्यं कुर्मोऽपि तु किञ्चिदिदानीं कर्त्तुं न शक्यं। पश्चात्तापमात्रं भवति न तु तथाभूः परदारत्वाद्गताको न

प्रतिज्ञेयं नले विज्ञाः कलेर्विज्ञायतां मम।
तेन भैमीञ्च भूमिञ्च त्याजयामि जयामि तम् ॥ १३८ ॥
नैषधेन विरोधं मे चण्डतामण्डितौजसः।
जगन्ति हन्त गायन्तु रवेः कैरववैरवत् ॥ १३९ ॥

कर्त्तव्य इति च। तत्प्रात्तां प्रति वाञ्छितं त्यक्तमित्यर्थः। यद् यस्मात्तदा स्वयम्बरसमये वयं तत्र नाभूम स्थिताः। तदानीं चेत्तत्र भविष्यामस्तर्हि तथैवाकरिष्यामस्तन्नाभूदित्यर्थः। हे देवा यूयं इदानीं पुनर्भैम्या नले वृते सत्यपि कालोचितं समयोचितं नोऽस्माकमालोचितं विचारं शृणुत आकर्णयत। नले क्षपालेशोऽपि नास्ति इति मयोक्तं तत्प्रकारमाकर्णयतेत्यर्थः। नः। अस्मदोर्द्वयोश्चेति (पा० १।२।५९) बहुत्वं। आलोचितं भावे क्तः ॥ १३७ ॥

तदेवाह। प्रतिज्ञेति। हे विज्ञाः कलेर्ममेयं प्रतिज्ञा नले विषये विज्ञायतां भवद्भिरिति शेषः। इयमिति किं। अहं तेन नलेन प्रयोज्येन भैमीञ्च भूमिञ्च त्याजयामि यौवं मोचयामि अत एव तं जयामि इति प्रतिज्ञा मम चेत्तस्यैवं वर्त्तत इति भवद्भिर्ज्ञायत एव तथापि स्पष्टं मया कथ्यते, तदाकर्ण्यतामित्यर्थः। कलेर्ममेत्यहङ्कारः सूचितः। तेन। अनुक्ते कर्त्तरि तृतीया। त्याजयामि जयामीति वर्त्तमानसामीप्ये भविष्यति लट् ॥ १३८ ॥

नैषधेनेति। चण्डतया भूभैमीपरित्याजनद्वाराऽतिपीडा-

द्वापरः साधुकारेण तद्विकारमदीदिपत्।
प्रणीय श्रवणे पाणिमवोचन्नमुचे रिपुः॥ १४०॥

कारिलान्निर्द्दयत्वेन मण्डितोजसोऽलङ्कृततेजसो मे मम नैषधेन सह विरोधं जगतीत्रयेऽपि लोका गायन्तु कीर्त्तयन्तु। कस्य किमिव। मण्डितामण्डितोजसो रवेः सूर्यस्य कैरवैः कुमुदैः सह वैरवत् विरोधमिव। हन्त खेदे। अयोग्येन हीनतेजसा नलेन सह विरोधारम्भात् त्रैलोक्ये यद्यप्ययशो भविष्यति तथापि किं कुर्म इति रे वद। अपयशःसमुदयेऽपि सूर्येण कैरववैरवत् मयापि नलवैरं करिष्यत एवेति भावः। एतेन दर्पः सूचितः॥ १३९॥

द्वापर इति। द्वापरस्तृतीययुगरूपः सहचरः तस्य कलेर्विकारं नलेन सह विरोधरूपं साधुकारेण साध्विति शब्दोच्चारणेन अदीदिपत्, साधूचितमेव त्वया विचारितमित्युद्दीपयामास, तस्य प्रोत्साहनं चकारेत्यर्थः। अथ नमुचेर्दैत्यस्य रिपुरिन्द्रो युष्माभिः साहाय्यं कर्त्तव्यमिति कलिनोक्तस्य वचस उत्तरत्वेनैतद्व्यापारमध्येऽस्माभिर्न स्थीयत इति लौकिकाभिनयव्यञ्जनवशाच्छ्रवणे पाणिं प्रणीय यत् त्वया विचारितं तदस्माभिः श्रोतुमप्यनर्हमिति वा पाणिभ्यां कर्णौ पिधाय कमिमवोचत्। अदीदिपत्। दीपेर्ण्यन्ताच्चङि, भ्राजभासभाषदीप (पा० ७।४।३) इत्यादिनोपधाह्रस्वविकल्पः॥ १४०॥

विस्मेयमतिरस्मासु साधु वैलक्ष्यमीक्षसे ।
यद्दत्तेऽल्पमनल्पाय तद्दत्ते ह्रियमात्मने ॥ १४१ ॥

विस्मेयेति । हे कले त्वं विस्मेयाश्चर्यहेतुर्मतिर्यस्यैवंविधोऽसि यस्मात्त्वमस्मासु वर्त्तमानं वैलक्ष्यं सलज्जत्वं साधु सम्यक्प्रकारेण ईक्षसे जानासि । पराशयवेदितया तव तीक्ष्णबुद्धित्वादयं विस्मितः स्म इत्युपहासः । साधूचितं यद्वैलक्ष्यं तदस्मादीक्षस इति वा । कथं भवत्सु वैलक्ष्यमुचितमित्याशङ्क्य समर्थयति । पुरुषो ऽनल्पाय महते पुरुषायाल्पं अतितुच्छं वस्तु दत्ते इति यत् स पुरुषस्तदल्पवस्तुदानं कर्म आत्मने स्वस्मै ह्रियमेव दत्ते । महते यत् अल्पं दीयते तदल्पदानमेव कर्तृ दात्रे पुरुषाय लज्जामेव दत्ते । तेन तस्य लज्जैव भवतीत्यर्थ इति वा । तथा च महते नलाय अस्माभिरल्पमेव दत्तमिति विषादादस्मासु लज्जा युक्तैवेति भावः । अतितरां नलमाहात्म्यं सूचितं । एतेन दूरात्स्वः प्रेक्ष्येति तस्योत्तरं । यद्यदि तत्तर्हीति वा योज्यं । यद्वा अनल्पाय न विद्यतेऽल्पो यस्मादिति हीनायेत्यर्थः । यदस्मादिदल्पं कस्त्वोऽयं धर्ममर्माणि कृन्ततीत्याद्युपालम्भवचनं दत्ते करोति तत् स्वस्मै ह्रियमेव दत्ते । अधमस्य महोपालम्भयोग्यस्य तवाल्प एवोपालम्भः कृत इति विषादादस्माकं वैलक्ष्यं युक्तमेवेति व्याख्येयम् । अधमायाल्पमपि उपालम्भादि यद्दत्ते तत् स्वस्मै ह्रियं दत्ते । अधमेन सह सम्भाषणनिषेधात् तस्योपालम्भोऽपि न कार्य्यः स त्वस्माभिः कृतः । तथा च पापरूपेण भवता

फलसीमां चतुर्वर्गं यच्छतांशोऽपि यच्छति।
नलस्यास्मदुपज्ञा सा भक्तिर्भूतावकेशिनी॥ १४२॥

स्वं सम्भाषणमस्माभिरनुचितं कृतमिति विषादादस्मासु वैलक्ष्यं युक्तमेवेति वा। इयमपि वक्रोक्तिः॥ १४१॥

दाणात्मत्वनलमहत्त्वप्रकटनपूर्व्वं वैलक्षण्यौचित्यं समर्थयते। फलेति। यस्या नलभक्तेः शतांशोऽपि शततमो भागः फलस्य सीमां मर्य्यादीभूतां निरतिशयफलरूपं चतुर्वर्गं धर्मार्थकाममोक्षरूपं यच्छति नलाय दातुं शक्नोति सास्मदुपज्ञाऽस्मदाश्रयास्मदियया नलस्य भक्तिरवकेशिनी फलभूता जाता। यस्या भक्तेः शततमेनांशेन वशीकृतैरस्माभिः सन्तुष्य फलरूपत्वेन चतुर्वर्गोऽपि नलाय दातुं शक्यते तस्या निरतिशयायाः परिपूर्णायाश्चतुर्वर्गादधिकतमस्य फलस्याभावादस्माकं दातुमसामर्थ्यात् सा निष्फलैव जातेत्यर्थः। निरतिशयभक्तेर्युक्तत्वान्महते नलाय चतुर्वर्गोऽप्यल्पतरफलत्वाद्दातुमयुक्तः। तादृशाय भैमीलक्षणाल्पतमफलदाने कृतेऽस्माकं लज्जा युक्तैवेति भावः। यच्छततमांशवशीकृतैरस्माभिर्दत्तसामर्थ्यो नलोऽप्यन्यस्मै जगाय फलावधि चतुर्वर्गं दातुं शक्नोतीति यावत् सा भक्तिरपूर्णा निष्फला जातेति वा व्याख्येयम्। सोऽपीति पाठे चतुर्वर्गं ददतामस्माकं स नलोऽपि क्रियमाणकर्मफलमर्य्यादां ब्रह्मार्पणं ददाति। तस्याः पुनः प्रत्यर्पणात् अस्माकस्य साम्यमेव। किन्तु नलस्यास्मदियया निरतिशया कर्मामात्रस्यापि ब्रह्मणे वार्पणात्

भव्यो न व्यवसायस्ते नले साधुमतौ कले।
लोकपालविशालोऽसौ निषधानां सुधाकरः॥ १४३॥
न पश्यामः कलेस्तस्मिन्नवकाशं क्षमास्मृति।
निचिताखिलधर्मे च द्वापरस्योदयं वयम्॥ १४४॥

फलाभिसन्धानरहिता भक्तिर्वन्ध्या जाता। तादृशस्य भक्तिफलदानेऽस्माकमसामर्थ्यात् तथा च वैलक्षण्यं युक्तमेवेति व्याख्येयम्। यष्कृतां। सम्बन्धे षष्ठी। ग्रतस्त्राणार्थमस्येति विग्रह्य लक्षणया शततमोंऽश इति। अथवा आश्रय इति साधुः॥ १४२॥

नलो वैरार्हो न भवतीत्याह। भव्य इति। हे कले रागद्वेषादिराहित्येन साध्वी निर्मला मतिर्यस्य तस्मिन्नले विषये ते व्यवसायो वैरकरणोद्यमो भव्यः शुभोदर्को न। किञ्च निषधदेशानामाह्लादकत्वात् सुधाकरश्चन्द्रोऽयं नलः, लोकपाला दिक्पालास्तद्दविशेषेण शालते शोभते स्वाभाविकेन शौर्यादिना तदंशत्वाद्वा लोकपालवन्महाशयः। अतस्तेन सह वैरं तव शुभोदर्कं न भवतीति न तत् कार्यमित्यर्थः। मतौ इति पाठे, असाध्वी मतिर्यस्येति अकारप्रश्लेषेण कलेर्विशेषणं। मतः कलेरिति पाठे असाधोर्द्वापरादेरनुमत इति व्यवसायविशेषणम्॥ १४३॥

एतदेव स्फुटयति। नेति। वयं तस्मिन् क्षमास्मृति राज्ञि नले कलेस्तुर्य्ययुगस्य तवावकाशं प्रवेशावसरं न पश्यामः सम्भावयामः। तथा भवन्नितस्य द्वापरस्य च उदयं नलपराभवसामर्थ्यं न

फलसीमां चतुर्वर्गं यच्छतांशोऽपि यच्छति।
नलस्यास्मदुपज्ञा सा भक्तिर्भूतावकेशिनी॥ १४२॥

स्व स्वज्ञापणमस्माभिरनुचितं कृतमिति विषादादस्मासु वैलक्ष्यं युक्तमेवेति वा। इयमपि वक्रोक्तिः॥ १४१॥

दानासामर्थ्यनलमहत्त्वप्रकटनपूर्वं वैलक्ष्यस्यौचित्यं समर्थयते। फलेति। यस्या नलभक्तेः शतांशोऽपि शततमो भागः फलस्य सीमां मर्यादीभूतां निरतिशयफलरूपं चतुर्वर्गं धर्मार्थकाममोक्षरूपं यच्छति नलाय दातुं शक्नोति सास्मदुपज्ञाऽस्मदाश्रयास्मद्विषया नलस्य भक्तिरवकेशिनी फलशून्या जाता। यस्या भक्तेः शततमेनांशेन वशीकृतैरस्माभिः सन्तुष्य फलरूपत्वेन चतुर्वर्गोऽपि नलाय दातुं शक्यते तस्या निरतिशयायाः परिपूर्णायाश्चतुर्वर्गादधिकतमस्य फलस्याभावादस्माकं दातुमसामर्थ्यात् सा निष्फलैव जातेत्यर्थः। निरतिशयभक्तेर्युक्तत्वान्महते नलाय चतुर्वर्गोऽप्यल्पतरफलत्वाद्दातुमयुक्तः। तादृशाय भैमीलक्षणाल्पतमफलदाने कृतेऽस्माकं लज्जा युक्तैवेति भावः। यच्छततमांशवशीकृतैरस्माभिर्दत्तमासर्थ्यो नलोऽप्यन्यस्मै जनाय फलावधि चतुर्वर्गं दातुं शक्नोतीति यावत् सा भक्तिरपूर्णा निष्फला जातेति वा व्याख्येयम्। सोऽपीति पाठे चतुर्वर्गं ददतामस्माकं स नलोऽपि क्रियमाणकर्मफलमर्यादां अग्र्यार्पणं ददाति। तथाः पुनः प्रत्यर्पणात् अस्माकस्य साम्यमेव। किन्तु नलस्यास्मद्विषया निरतिशया कर्ममात्रस्यापि ब्रह्मणे वार्पणात्

भव्यो न व्यवसायस्ते नले साधुमतौ कले ।
लोकपालविशालोऽसौ निषधानां सुधाकरः ॥ १४३ ॥
न पश्यामः कलेस्तस्मिन्नवकाशं क्षमाक्षिति ।
निश्चिताखिलधर्मे च द्वापरस्योदयं वयम् ॥ १४४ ॥

फलाभिसन्धानरहिता भक्तिर्वन्ध्या जाता । तादृशम् भक्तिफलदानेऽस्माकमसामर्थ्यात् तथा च वैलक्षण्यं युक्तमेवेति व्याख्येयम् । यच्छ्रुताम् । सम्बन्धे षष्ठी । शतच्छायावंशस्येति विशुद्ध लक्षणया शततमोंऽश इति । उपघ्ना आश्रय इति साधुः ॥ १४२ ॥

नलो वैरार्हो न भवतीत्याह । भव्य इति । हे कले रागद्वेषादिराहित्येन साध्वी निर्मला मतिर्यस्य तस्मिन्नले विषये ते व्यवसायो वैरकरणोद्यमो भव्यः शुभोदर्को न । किञ्च निषधदेशानामाह्लादकत्वात् सुधाकरश्चन्द्रोऽयं नलः, लोकपाला दिक्पालास्तद्विशेषेण शालते शोभते स्वाभाविकेन शौर्यादिना तदंशत्वाद्वा लोकपालवन्महाशयः । अतस्तेन सह वैरं तव शुभोदर्कं न भवतीति न तत् कार्यमित्यर्थः । मते इति पाठे, असाध्वी मतिर्यस्येति अकारप्रश्लेषेण कलेर्विशेषणं । मतः कलेरिति पाठे असाधोर्द्वापरादेरनुमत इति व्यवसायविशेषणम् ॥ १४३ ॥

एतदेव स्फुटयति । नेति । वयं तस्मिन् क्षमाक्षिति राज्ञि नले कलेस्तुर्य्ययुगस्य तवावकाशं प्रवेशावसरं न पश्यामः सम्भावयामः । तथा सवनिश्चयस्य द्वापरस्य च उदयं नलपराभवसामर्थ्यं न

सा विनीततमा भैमी व्यर्थानर्थग्रहैरहो।
कथं भवद्भिर्बाध्या प्रमितिर्विभ्रमैरिव॥ १४५॥

सम्भावयामः यतो नितरां चिता अर्जिता अखिला धर्मा येन श्रौतस्मार्त्तधर्मानुष्ठानरीतिरुभयच हेतुः। तस्य धर्ममयत्वाद्भयोः पापरूपत्वात्तत्रावकाशलेशोऽपि न सम्भाव्यत इत्यर्थः। यद्यपि देवा नलपराभवस्य भविष्यत्तां जानन्ति तथाप्युत्साहभङ्गद्वारा कलिनिषेध एव तात्पर्य्यात् अवकाशं न पश्याम इत्यूचुः। यद्वा पश्याम इति वर्त्तमानसामीप्ये भविष्यति लट्प्रयोगात् प्रस्तुतोऽवकाशो नास्ति विलम्बेन भविष्यतीति सूचितमिति ज्ञेयम्। अथ च यथाशक्त्येन तितिक्षाशीले पुरुषे कस्यावकाशो न निश्चितः सकलधर्मरक्षये च सन्देहस्योदयः प्रभवतीति युक्तम्॥ १४४॥

भैम्यपि न बाध्येत्याह। सेति। पातिव्रत्यादिधर्मनिष्ठत्वाद्विनीततमा सा भैमी व्यर्था निर्हेतुको वैराचरणलक्षणोऽनर्थस्तत्र ग्रहोऽभिनिवेशो येषां तैर्भवद्भिः कथमिव बाध्या पीडयितव्याऽनुचितमेतत्। अहो कष्टम्। सम्बुद्धिर्वा आश्चर्य्ये वा। कैः केव। विशिष्टैर्भ्रमैर्विपर्य्ययज्ञानैर्विनीतं सुतरामपास्तं तमोऽज्ञानं यथैवभूता भ्रान्तिर्ज्ञानविरोधिनी प्रमितिः सम्यगनुभूतिश्चाचिक्यरजतादिधीरिव। कथं बाध्येत्यर्थः। किम्भूतैर्विभ्रमैः। व्यर्थो निष्फलोऽनर्थस्य शुक्तिरजतादेर्ग्रहो ज्ञानं येषां तैः। अविनीततमा सा इति पदच्छेदः। साः कोपे, नितरामविनीतवधाय कम्पे इति वा॥ १४५॥

तन्नासत्ययुगं तौ वा त्रेता स्पर्द्धितुमर्हति ।
एकप्रकाशधर्माणं न कलिद्वापरौ युवाम् ॥ १४६ ॥

तत्रेति । उक्तिविशेषेण षड्भिः श्लोकैः पुनरपि तौ न वाध्यावित्याह । तमिति । न असत्यं नासत्यं किन्तु सत्यमेव युगं सत्ययुगं कृतयुगमिति यावत् । तत् तं नलं तौ भैमीं वा स्पर्द्धितुं तुलयितुं अर्हति तथा त्रेतायुगमपि स्पर्द्धितुमर्हति न तु जेतुमित्यर्थः । यथा सङ्ख्येन वा योज्यं । यस्मादेको मुख्यः स चासौ प्रकाशधर्मा च तं तौ च प्रकाशः प्रसिद्धो धर्मो यस्य यस्याश्च । यस्मादेकशब्देन कर्मधारयः, लोकत्रयस्त्रीपुंसमध्ये तावेव धर्मप्रधानौ यतः तस्मात् सत्ययुगस्यापि चतुश्चरणधर्मत्वादेकप्रकाशधर्मत्वात् सत्ययुगं स्पर्द्धितुमर्हति, त्रेतायास्तु त्रिचरणधर्मत्वेऽपि कलिद्वापरापेक्षया धर्मवाहुल्यात् कृतयुगसाधर्म्यात् एकप्रकाशधर्मत्वसम्भवात् सापि स्पर्द्धितुमर्हतीत्यर्थः । कलिद्वापरौ युवां युगे पुनः तौ स्पर्द्धितुं नार्हथ, इति विभक्तिविपरिणामः कार्यः । तयोर्द्धर्मैकप्रधानत्वात्, युवयोस्त्वधर्मबाहुल्यात्, युवां तौ तुलयितुमसमर्थौ किं पुनर्जेतुमित्यर्थः । अथ सामस्त्येन सत्यं यत्र तदासत्यं तत्र तद्युगं चतुश्चरणधर्मयुक्तं कृतयुगं तत्र त्रेतायुगं तौ स्पर्द्धितुं नार्हतः अपि त्वर्हत एवेति काकुः । एकादेव हेतोः नासत्ययुगं कृतयुगं तौ स्पर्द्धितुमर्हति । तत्रैव तयोः सत्वाद् धर्मप्रधानाच्च । त्रेतायुगञ्च नार्हति । त्रयाणामप्यधर्मसंसर्गात् । तत्र तयोरसत्वाच्चेति वा । कलिद्वापरयोः

सा विनीततमा भैमी व्यर्थानर्थग्रहैरहो।
कथं भवद्विधैर्बाध्या प्रमितिर्विभ्रमैरिव ॥ १४५ ॥

सम्भावयामः यतो नितरां चिता अर्जिता अखिला धर्मा ये श्रौतस्मार्त्तधर्मानुष्ठानरीतिरभयच हेतुः। तस्य धर्ममयत्वात् भयोः पापरूपत्वात्तत्रावकाशलेशोऽपि न सम्भाव्यत इत्यर्थं यद्यपि देशा नलपराभवस्य भविष्यत्तां जानन्ति तथाप्युक्ता भङ्गद्वारा कलिनिषेध एव तात्पर्य्यात् अवकाशं न पश्य इत्यूचुः। यद्वा यास्याम इति वर्त्तमानसामीप्ये भविष्यति ह प्रयोगात् प्रस्तुतोऽवकाशो नास्ति विलम्बेन भविष्यतीति ए तमिति ज्ञेयम्। अथ च यथासङ्ख्येन तितिक्षाशीले पुरुषे द्वावकाशो न निश्चितः सकलधर्मरहस्ये च सन्देहस्योदयः वतीति युक्तम् ॥ १४४ ॥

भैम्यपि न बाध्येत्याह। सेति। [illegible] दि [illegible] विनीततमा सा भैमी व्यर्था निर्हेतुका वै[illegible] स्व यदोऽभिनिवेशो येषां तैर्भवद्विधैः कथमिव बाध्या चितत्याऽनुचितमेतत्। अहो कष्टम्। सम्बुद्धिर्वा [illegible] कैः केव। विशिष्टैर्भ्रमैर्विपर्ययज्ञानैर्विनीतं सुतरामपास्त ऽज्ञानं यथैवभूता भ्रान्तिज्ञानविरोधिनी प्रमितिः सम्य तिस्याभ्रिपरजतादिधीरिव। कथं बाध्येत्यर्थः। व्यर्थो निष्फलोऽनर्थश्च शुक्तिरजतादेर्यहो ज्ञानं येषां विनीततम च्या इति पदच्छेदः। चाः कोपे, [illegible] अथम भर्मे इति मा ॥ १४५ ॥

करिष्येऽवश्यमित्युक्त्वा करिष्यन्नपि दुष्यसि।
दृष्टादृष्टा हि नायत्ताः कार्य्योया चेतवस्तव॥ १४७॥

करिष्य इति। हे कलेऽवश्यं निश्चितं करिष्येऽर्थान्नलपराभवं इत्युक्तिः प्रतिज्ञावचो यस्यैवम्भूतस्त्वं करिष्यन्नपि कर्त्तुकामोऽपि दुष्यसि दुष्टो भवसि। अपकारस्य भविष्यत्त्वादिदानीं साक्षात्कायव्यापाराभावेऽपि मनस्यपकारकरणवासनाया सत्त्वात् वचनेन चानुवादाद्विविधवाधकसद्भावात् ब्रह्महत्याया अकरणेऽपि ब्रह्महत्यां करिष्याम्यादाविवेत्यर्थः। कुर्व्वाणो दुष्टो भविष्यसीति किं वाच्यमित्यपिशब्दार्थः। अथ वा कर्त्ता दुष्यसेव प्रतिज्ञाभङ्गादिति किं वाच्यमिति। कार्य्यसाधिका दृष्टादृष्टसामग्री तावत्तया सम्पादयितुमशक्या किन्तु सा तस्य तस्य तत्तत्कर्मवशात् स्वयमेव सम्पद्यत इत्यर्थान्तरन्यासः। तथा चैवं त्वया चित्ते धृतेऽनूदिते चेदिविधपातकमेव भवति न तु तं पराभवितुं शक्नोषीति। यद्यपि तं पराभवितुं शक्ष्यसे तथापि तस्याय दृष्टादृष्टसामग्र्येव तत्र प्रयोजिका न तु त्वमिति।

पुरुषत्वात् नलेन सह त्रेतायाश्च स्त्रीत्वात् भैम्या सह स्पर्द्धासम्भावनायां पार्थक्येन निषेधो युक्त इति वा। कृतयुगं त्वं स्पर्द्धितुं नार्हति। युवामपि नार्हथः। सत्ययुगेऽधर्मलेशमसम्भावनापि सम्भवेत्तु नले। तथा त्रेतायामपि न तु भैम्यां। तथा चाद्य-युगद्वयं ताभ्यां स्पर्द्धितुमपि न शक्यं, युवां पुनर्न्न शक्ताविति किं वाच्यमित्यर्थ इति वा। अथ च दम्पत्योर्युगं नलं स्पर्द्धितु-मर्हति। गार्हपत्याहवनीयदक्षिणाग्नित्रयरूपा त्रेता च भैमीं स्पर्द्धितुमर्हति। यत एकः केवलः प्रकाश उज्ज्वलः प्रसिद्धो वा, धर्मस्वभावः सौन्दर्य्यादिगुणो वा, ययोर्भैमीनलयोः प्रकाशशो-भालक्षणो धर्मो ययोरिति वा। अग्नित्रयपक्षेऽप्येकः केवलः प्रकाशस्तेज एव धर्मस्वभावो यस्या इति सौन्दर्य्याद्दीप्तत्वात् पावित्र्याच्च दम्पतियुगमग्नित्रयञ्च ताभ्यां तुल्यं भवितुमर्हतीत्यर्थः। कलिद्वापरौ युवां पुनर्न्न। असुन्दरत्वात् पापप्रधानत्वाच्चेत्यर्थः। अथ चैको विरुद्धधर्मरहितः प्रकाशो निश्चितश्च धर्मो यत्र तच्च तास्र कलहसन्देहौ स्पर्द्धितुं नार्हतः। विरुद्धधर्मत्वे चि कालहसम्भवो विशेषधर्माप्रकाशे च सन्देहसम्भवः। तत्र लेकध-र्म्मत्वात् प्रकाशमानधर्मत्वाच्च कलहसन्देहौ न सम्भवत इति युक्तमिति भावः। त्रेताग्नित्रितये युगे, प्रकाशस्तु प्रसिद्धे स्यात्, सन्देहद्वापरौ चायेत्यमरः। प्रकाशधर्मशब्दयोः पूर्व्वं बहुव्रीहौ, धर्मादनिच् केवलात् (पा॰ ५।४।१२४) इति समासान्तः, पश्चात् पूर्व्वेण समासः ॥ १४६ ॥

करिष्येऽवश्यमित्युक्त्वा करिष्यन्नपि दुष्यसि।
दृष्टादृष्टा हि नायत्ताः कार्य्योया चेतवस्तव ॥ १४७ ॥

करिष्य इति। हे कलेऽवश्यं निश्चितं करिष्येऽर्थान्नलपराभवं इत्युक्तिः प्रतिज्ञावचो यस्यैवम्भूतस्त्वं करिष्यन्नपि कर्त्तुकामोऽपि दुष्यसि दुष्टो भवसि। अपकारस्य भविष्यत्त्वादिदानीं धात्वात्मकायव्यापाराभावेऽपि मनस्यपकारकरणवासनाया कृतत्वाद् वचनेन चानुवादादिविविधबाधकसद्भावाद् ब्रह्महत्याया अकरणेऽपि ब्रह्महत्यां करिष्याम्यादाविवेत्यर्थः। कुर्व्वाणो दुष्टो भविष्यसीति किं वाच्यमित्यपिशब्दार्थः। अथ वा कर्त्ता दुष्यस्येव प्रतिज्ञाभङ्गादिति किं वाच्यमिति। कार्य्यसाधिका दृष्टादृष्टसामग्री तावत्त्वया सम्पादयितुमशक्या किन्तु सा तस्य तस्य तत्तत्कर्म्मवशात् स्वयमेव सम्पद्यत इत्यर्थान्तरन्यासः। तथा चैवं त्वया चित्ते धृतेऽनूदिते चेद्विविधपातकमेव भवति न तु तं पराभवितुं शक्नोषीति। यद्यपि तं पराभवितुं शक्ष्यसे तथापि नलाय दृष्टादृष्टसामग्र्येव तत्र प्रयोजिका न तु त्वमिति। मयैवं करिष्ये मयैवं कृतमित्यादिरूपां प्रतिज्ञां प्रति समानस्य कारणत्वाभावाद् दृष्टादृष्टकारणवैगुण्येन प्रतिज्ञाभङ्गस्यापि शक्तित्वादिन्द्रोऽपि कर्त्तुमशक्तस्त्वं तु को नाम वराक इति च भावः। यद्वा दृष्टादृष्टरूपा हेतवः। दृष्टसामग्री यथा कथञ्चित् यद्यपि सम्पादयितुं शक्यते तथाप्यदृष्टसामग्री त्वया न शक्यते। तथा च नलेन यदि परमो धर्म्मः कृतस्तर्हि स त्वया

द्रोहं मोहेन यस्तस्मिन्नाचरेदचिरेण सः।
तत् पापसम्भवन्तापमाप्नुयादनयात्ततः॥ १४८॥
युगशेष नव देवस्तस्मिन्नेष न साम्प्रतं।
भविता न चिरायैतद्वैरं ते वैरसेनिना॥ १४९॥

पराभवितुमशक्यः। अथाधर्म्मः ततस्तदधर्म्मवशादेव तस्य तादृशी दशा भविष्यति त्वया किं क्रियते इत्युभयथापि दोषात्, मयैवं क्रियते, करिष्यते, कृतमित्यादिवल्गना न कार्य्येति भावः। इत्युक्त्वेति पाठे अवश्यं वश्यं वा करिष्ये इत्युक्त्वाऽकारमशेषेणाकरिष्यन्नपि दुष्यसि। वाङ्मात्रेणापि पापसिद्धेः किं पुनः करिष्यन्निति। अन्यत् पूर्व्ववत्। कार्य्यीयाः। तस्येदमित्यर्थः। तस्मै हितमित्यर्थं इति वा॥ १४७॥

द्रोहमिति। यः पुरुषो मोहेनाज्ञानेनापि तस्मिन् पुण्यश्लोके ऽनपकारिणि द्रोहमपकारमाचरेत् स पुरुषस्तस्मात् अनयादन्यायाद्धेतोरचिरेण तस्मात्तादृशापकरणजातात् पापात् सम्भवो यस्य तं तापं दुःखं आप्नुयात्, बुद्धिपूर्व्वकारी लभत इति किं वाच्यमित्यर्थः। नलद्रोहस्तस्मात् त्वया सर्व्वथा त्याज्य इति भावः। अनेन शापोऽपि दत्त इति ज्ञेयम्। मोहेनेत्यत्रार्थादपिशब्दो योज्यः। मोहसेन स्वामिन् अज्ञानाश्रय मूर्खतर इति वा सम्बोधनं॥ १४८॥

युगेति। हे युगानां सत्यादीनां शेष कले तस्मिन्नले नवैष देवो न साम्प्रतयुक्तः। यस्माद्वैरसेनिना नलेन सह एतत्

तत्र यामीत्यसज्ज्ञानं राजसं सद्दिहास्यताम्।
इति तत्र गतो मा गाः राजसंसदि हास्यताम् ॥ १५० ॥
गत्वान्तरा नलं भैमीं नाकस्मात्त्वं प्रवेक्ष्यसि।
पश्चाच्चक्रमसंयुक्तं पठ्यमानं डकारवत् ॥ १५१ ॥

मारब्धं वैरं ते तुभ्यं हिताय न भविता मुद्भेदकं न भविष्यति। युगेषु शेष इति निर्द्धारणे सप्तमीसमासः। साम्प्रतमव्ययम्। हितयोगे तुभ्यमिति चतुर्थी ॥ १४८ ॥

तत्रेति। हे कले तत्र नलसमीपे पराभवार्थं यामि गच्छामीति एवम्भूतं राजसं ज्ञानं रजोगुणसहितं विचारमहं अत एवासद्‌शोभनं सद्वर्त्तमानं इहास्मिन् काले देशे वास्यतां त्यज्यतां इति, सद्भद्रमिति वा, इति विचार्यैति यावत्। इति किं। तत्र राजसंसदि तस्यां नलसभायां गतः सन् हास्यतां परिहासास्पदत्वं मा गाः। एवं विचार्य तत्र गतः सभ्येरुपहास्य एव भविष्यसि। न तु नलं पराभवितुं शक्ष्यसीत्येवंविधो विचारः परित्याज्य एवेत्यर्थः। असत्सदिति विरोधाभासः। तत्र यामीति ज्ञानमसत् अयुक्तं यतो राजसं। तर्हि किं कर्त्तव्यं तत्राह। इहास्मिन्नेव देशे आस्यतां स्थीयतां इत एव परावर्त्तनीयमित्यर्थः। इति असदीयं ज्ञानं सद्भद्रमितीतिशब्दमाहृत्य व्याख्येयम्। विपक्षे बाधकमाह उत्तरार्द्धेन। तत्र स्वयम्बरे गतो राजसभायां स्वयम्बरे वृत्ते किमर्थमागत इति हास्यतामेव गमिष्यसि॥१५०॥

गत्वेति। हे कले निषधदेशान् गत्वा प्राप्य नलं भैमीमन्तरा

नलभैम्योर्मध्ये अकस्मात्स्त्रीयं दुरितलक्षणकारणमन्तरेण वा त्वं न प्रवेच्यसि प्रवेशं कर्त्तुं न शच्यसि। नलस्य पुण्यश्लोकत्वाद्भैम्याश्च पातिव्रत्यादिधर्म्मयुक्तत्वात् तौ पराभवितुं न शक्तोपीत्यर्थः। क इव। असंयुक्तं पूर्व्वं सन्धितया पृथक्कृतप्रकृतिप्रत्ययविभागः पश्चात् पच्यमानं संहितया प्रयोगार्हमुच्चार्य्यमाणमिति यावत्, एवम्भूतं षणाश्चकं षण्णामिति शब्दरूपस्य वर्णद्वन्द्वमन्तरा मध्ये ङकारवत् ङकारो वर्णो यथाऽकस्माद्विधिमन्तरेण न प्रविशतीति साधर्म्योपमा। षट्शब्दात् षष्ठीबहुवचने, षट्चतुर्भ्यश्चेति (पा० ७।१।५५) नुटि तत्सहिते आमि, स्वादिष्वसर्व्वनामस्थान इति (पा० १।४।१७) पूर्व्वपदस्य पदत्वात्, झलां जशोऽन्त इति (पा० ८।२।३९) जश्त्वेन टकारस्य डकारे, न पदान्तादिति (पा० ८।४।४२) निषेधस्य, अनाम्नवतीति (पा० ८।४।४२ सू० १ वा०) निषेधात् ष्टुना ष्टुरिति (पा० ८।४।४१) ष्टुत्वेन नामो नकारस्य णकारादेशे, यरोऽनुनासिक इति(पा० ८।४।४५)डकारस्यापि अनुनासिकस्य व्यवस्थितविकल्पत्वादनुनासिकस्यात्र नित्यत्वेन णकारे जाते सर्व्वथापि न स्वेन रूपेण षण्णामिति पदमध्ये ङकारो यथा प्रवेशं लभते तथा तयोर्मध्ये त्वमपीत्याशयः। अन्यथा विकल्पत्वात् पक्षे षड्नामिति स्यात्, तन्माभूदित्यत्र व्यवस्थितविभाषाऽङ्गीकरणीया। षणाश्चेत्यत्र चकारः पृथक्कृत्य शैर्षी चेति योज्यः। तथा च क्रमेण पर्य्यायेण संयुक्तं षण्णामिति कर्म्मभूतशब्दरूपं अन्तरा ङकारो यथा न प्रविशति, असंयुक्तावस्थायां यद्यपि स्वेन रूपेणावस्थानं वर्त्तते तथापि संयुक्तावस्थायां

अपरेऽपि दिशामीशा वाचमेनां शचीपतेः।
अन्वमन्यन्त किन्त्वेनां नादत्त युगयोर्युगं ॥१५२॥
कलिं प्रति कलिं देवा देवान् प्रत्येकशः कलिः।
सोपहासं समैर्वर्णैरित्थं व्यरचयन्मिथः ॥ १५३ ॥

नास्तीत्यर्थ इति वा। पणामित्यत्र प्रकृतिप्रत्ययदशायां अकस्मादागन्तुकादेशरूपतया डकारो यथा प्रविशति तथा त्वं प्रवेक्ष्यसीति वैधर्म्योपमया व्याख्येयं। टकारवदिति पाठे, वावसाने (पा० ८।४।५६) इत्यवसान एव चर्त्वविकल्पात् खरश्चाभावात् षट्खित्यादिवत् पणामित्यत्र खरवसानयोरभावात् टकारो यथा न प्रविशतीति साधर्म्योपमैव। क्षेपकोऽयम्। नलं भैमीं। अन्तरान्तरेणेति (पा० २।३।४) द्वितीया ॥ १५१ ॥

अपर इति। अपरे दिशामीशा वह्न्याद्यः शचीपतेरेनां पूर्वोक्तां वाचं अन्वमन्यन्त, इन्द्रो युक्तमाज्ञापयतीत्येवमभ्यनन्दन् किन्तु पुनर्मूर्खं युगयोः कलिद्वापरयोर्युगं एनामिन्द्रगिरं नादत्त नाङ्गीचक्रे। दिगीशानामपि सम्मतायां वाचि तयोरसम्मतेः किन्तुशब्देन मूर्खतरत्वशालित्वं चोक्तं। एनां। अन्वादेशे एनादेशः। आदत्त। अनाप्यविहरणत्वात्तङ् ॥ १५२ ॥

कलिमिति। देवाः कलिं युगं प्रति लक्षीकृत्य कलिर्देवान् प्रत्येकशः एकैकमुद्दिश्य मिथोऽन्योन्यं समैर्वर्णैस्तुल्यैरक्षरैः श्लिष्टैः शब्दैः सोपहासं उपहासवाक्यसहितं कलिं कलह वाग्युद्धं इत्थं वक्ष्यमाणप्रकारेण व्यरचयन् व्यरचयच स्तुतवन्तः स्तुतवांश्च-

तवाऽगमनमेवार्हं वैरसेनौ तया वृते।
उद्वेगेन विमानेन किमनेनापि धावता ॥ १५४ ॥

त्यर्थः। अरचयन्। क्रीडादिकत्वादन्तलादम्लोपित्वात्र सन्वद्भावः। अरचयदित्यपि पाठः ॥ १५३ ॥

इन्द्रः कलिप्रत्याह। तवेति। हे कले तया वैरसेनौ वृते सति तवागमनं गमनाभावः अर्हं युक्तं। उद्वेगेन उत्कृष्टजवेन अत एव धावता शीघ्रगामिना अनेन प्रत्यक्षदृश्येन विमानेनाकाशगामिना रथेन किं? अपि तु न किञ्चित्प्रयोजनमस्ति, अन्यस्य वृतत्वादित्यर्थः। वैरसेनावुत्तरेण वा सम्बन्धनीयं। अनया नले ऽवृते एव तव स्वपुरादृमनं युक्तम् नलवरणानन्तरमिदानीं सर्व्वथा गमनं न कार्य्यमित्यर्थ इति वा। एतावत्पर्य्यन्तं किं कृतं इदानीं किमर्थमागमनं इत्युपहासः। एतदेव वाक्यं कलिरिन्द्रं प्रत्याह॥ हे शक्र भैम्या नले वृते सति तव यथागतमागमनमेवाकृतकार्य्यत्वादिदानीं स्वर्गं प्रत्यगमनमेव युक्तं निर्लज्जत्वमङ्गीकृत्येन्द्राण्यादीनामग्रे कथं मुखं दर्शयिष्यसि अपि त्वनुचितमेतत्, सर्व्वथा स्वर्गं प्रति न गन्तव्यमेव युक्तं इत्यर्थ इति वा। विमानेनाऽहङ्काररहितेनापिधा तिरोधानं तद्युक्तेन नितराङ्गोपितेनानेन मुखदर्शनानुमितेनोद्वेगेन निर्वेदेन किं? अपि तु तद्गोपनं व्यर्थं धैर्य्यमवलम्ब्य निर्वेदो यद्यपि त्वया गोप्यते तथापि मया ज्ञात एव। अद्य च भैमीनलाभ्यां वरदानार्थमेव मयागतमित्यादिव्याजेन निर्वेदगोपनं क्रियते, तथापि स निर्वेदो ज्ञात

पुरा यासि वरीतुं यामत्र एव तया वृते।
अन्यस्मिन् भवतो हास्यं वृत्तमेतत्त्रपाकरं॥ १५५॥

एव। अभिमानशून्यत्वान्न किञ्चिदनेन निर्वेदेन साधयितुं शक्यते। तत्तस्मात् सर्वथा दुःखं माकार्षीरित्युपहसितवानित्यर्थः। विमाने नान्यवरणादपमानेन हेतुना च उद्वेगस्तेन प्रकटेन किं? अपि तु न गोपयेति वा। विलुप्तमानानामिन स्वामिन् नितरामभिमानशून्य इन्द्र गोपितेन वानेन निर्वेदेन किमिति वा। उद्वेगेन किं? अनेन धावता विमानेनापि किमिति वा। अपिधा। आतश्चोपसर्गे (पा०३।३।१०६) इत्यङ् प्रत्ययः॥ १५४॥

वह्निः कलिमाह। पुरेति। हे कले त्वं यां वरीतुं इतोऽपि पुरा यासि गमिष्यसि तयात्र एव त्वदागमनात् पूर्वमेव अन्यस्मिन् वृते एतदिदानीं गमनं त्रपाकरं भवतो हास्यं हास्यकारणं वृत्तं जातं। वर्तमानानामपि वृत्तप्रायत्वाद् वृत्तमित्युक्तं। सर्वो लोकस्त्वामुपहसिष्यतीत्यर्थः। एतत्तव वृत्तं गमनाचरणं हास्यहेतुभूतं त्रपाकारि च भविष्यतीति शेष इति वा। एतल्लोकैः क्रियमाणं हास्यं तव त्रपयाऽकं दुःखं राति ददाति एवंविधं वृत्तं जातं प्राप्तमेवेति वा। अत्राप्युपहासः॥ इदानीं कलिरग्निमाह। हे वह्ने त्वं यां वरीतुं पुरा यासि अयासीस्तया तव भ्रमघमेव नागमनादृत्यान्यस्मिन्नले वृते तवैव प्रत्यग्रदुग्धं वृत्तं वर्त्तमानमास्यं मुखं त्रपां त्रा सामस्त्येन करोति नितरां

पत्यौ तया वृतेऽन्यस्मिन् यदर्थं गतवानसि।
भवतः कोपरोधस्तादक्षमस्य वृथा रुषः॥ १५६॥

लज्जावहं जातमिति शेषः। हा कष्टं। त्रपयाऽकं दुःखं रा-त्यादत्ते। लज्जास्पदं वृत्तं जातमिति वा। हे वज्रे पुरा भ्रस-ङ्गमनात् पूर्वं यां वरीतुमयासि तया प्रयत्नोऽकारि। स्वय-म्बरं प्रति गतं नलरूपं धृतमिति यावत्। यद्वा स्वस्य गमनात् पूर्वं दूतीहस्तेनोपदाप्रदानादिद्वारा यां वरीतुं प्रयत्नोऽकारि तया तव समक्षमेव नले वृते, एतत् स्वर्गप्रत्यागमनलक्षणमा-चरणं तव त्रपां न करोतीति त्रपाऽकरं लज्जां नावहति। हा कष्टं। एवं वृत्तेऽपि निर्लज्जः सन् स्वगृहं गच्छन् स्वां वनितां मुखं कथं दर्शयिता इति भाव इति। तया विनैव त्वत्स्वर्गमना-चरणं लज्जावहं सत् हास्यं हासयोग्यं। अपि तु सर्व्वैर्हास्यमे-वेति काकुर्वा। मुखं लज्जाकरं वृत्तमाचरणमपि लज्जाकर-मिति वा। यासीति यावत्पुरेति (पा॰ ३।३।४) भविष्यति लट्। पक्षे, पुरि लुङ् चास्मे (पा॰ ३।२।१२२) इति भूते लट्। पक्षे यसु प्रयत्ने भावे चिण्॥ १५५॥

यमः कलिमाह। पत्याविति। हे कले त्वं यदर्थं यस्या नि-मित्तेन गतवान् गमनयुक्तोऽसि यां वरीतुमेव गच्छसि तया पूर्व्वमेवान्यस्मिन् पत्यौ वृते स्वभर्तृत्वेनाङ्गीकृते सति भवतः कोपस्य रोधो निवारणं स्याद्भवतु। यतोऽक्षमस्याप्रमर्षस्यात एव वृथा रुट् कोपो निष्फलत्वात्कोपो निवार्य्य इत्यर्थ इति वा॥ कलि-

यासि स्मरं जयन् कान्त्या योजनौघं महार्वता।
स मूढस्त्वं वृतेऽन्यस्मिन् किन्न क्रोशेऽत्र पामर ॥१५७॥

ऐतदेव यममाह। हे यम यां वरीतुं गतवानसि तया नले पत्यौ वृते भवतः सकाशादन्योऽधमादधरो हीनो न कोऽपि, अपि तु त्वमेव। त्वत्सकाशादन्योऽधो हीनः कः स्यादपि तु त्वमेव हीन इति वा। अपरोऽर्थात्त्वदन्यो भवत उत्पत्तितस्त्वं ह्यपचयं प्रापयतीति भावः। निरर्थकजन्माऽतएवाधो हीनः कः स्यादपि तु त्वमेव हीन इति वा। समुद्यान्तं दानिरर्थकजन्मन्नित्यर्थः। अधमस्य भूस्पर्शरहितस्य देवस्य रुषो वृथा। अस्मादृशानामेव रोषाः सफला न तु भवादृशानामित्यर्थ इति वा। अधम अमेहन असमर्थ यम वृथा निष्कारणमस्मान् प्रति रुषः कोपान् स्म मा कुर्वित्यर्थ इति वा। यस्मै यदर्थे चतुर्थी तदर्थेति (पा० २।१।३६) समासः। गतवान् मतुप्। पचे भूते क्तवत्। भवतः। पष्ठी पञ्चमी च दिग्योगे। पचे प्रथमा। आतो धातोरिति (पा० ६।४।१४०) प्रतिषेधात्, अत्वसन्तस्य चाधातोः (पा० ६।४।१४) इति असन्तत्वेऽपि न दीर्घः। अधमादिति दिक्शब्दत्वात् अधरशब्दाद्, अस्ताति चेति (पा० ५।३।४०) अस्तातिः, पूर्वाधरा (पा० ५।३।३९) इत्यधरादेशश्च। ख्येति योऽन्तकर्मणि ॥१५६॥

वरुणः कन्तिमाह। यासीति। हे कले कायकान्त्या स्मरं जयन् विरहृष्नघण्याऽतिकुत्सपद्मं, महास्तोऽर्वन्तोऽश्वा यस्मिन् रथे, तेन कृत्वा योजनौघं चतुःक्रोशदपयोजनसमूहमतिदूर-

मिदानीमपि यासि स त्वं मूढो मूर्खः। यस्माद्धे पामर नीच भैम्यान्यस्मिन्नले वृते सति अत्रास्मिन्नर्थे वर्त्तमानस्य ते तव ह्रीः किं न अपि तु भविष्यत्येव। भाविनीं वर्त्तमानां वा लज्जामवगणय्यापि गच्छसि तस्मान्मूर्ख एवेत्यर्थः। सेनापुरःसरमतिगौरं कामं कज्जलतुल्यया स्वकायकान्त्या पराभावुकः। तथा जनौघं स्वसेनामसूहमपि पराभावुकः। प्रसरन्त्या श्यामकायकान्त्या सर्व्वां सेनामग्रसरं सारथ्यं श्यामीकुर्व्वन्निति कुरूप एवम्भूतो रथेन समूढः सम्यग्धृतो यस्त्वं, तथान्यस्मिन् वृते सत्यपि यासि, अर्थात् स्वयम्वरं तस्य तेऽत्रार्थे स्वयम्वरे वा ह्रीः किं न भवेदपि तु भवेदेवेति वा॥ एतदेव कलिवर्णनमाह। हे अमर देव वरुण कान्त्या दिव्यदेहदीप्त्या योजनौघं दूरदेशं रञ्जयन् दीप्तं कुर्व्वन् जनौघं स्वयम्वरदेशस्थं लोकं समूहं चारञ्जयन् दृत्यास्यर्यदिव्यरूपदर्शनान्नलाकारधारणाद्वा आत्मनि सानुरागं कुर्व्वन्नतिजवनहयधृतेन विमानेन महता श्यामवर्णादिनार्वता हयेन वा समूढः समारूढो यस्त्वं यासि स स्वयम्वरमयासीः तस्य तवान्यस्मिंस्तया लामसचं वृते ह्रीः किमिति न भवति? अपचप निर्लज्जेति धिक्कारः। अहं तु तदा नामं त्वं तु गतोऽपि न वृत इत्यपमानात्त्रपा भवितुं युक्ता, परं सा न, जायत इति चित्रं। अत एव चात्रपस्त्वमित्यर्थः। अत्रप न म्रियस इत्यमर इत्यर्थः। अन्योऽप्येवमनादरे सति लज्जया म्रियते त्वं तु निर्लज्जो न म्रियस इति चित्रमित्यर्थ इति वा। अत्रपया लज्जाभावेनामरेत्येकं पदं वा। त्रपायां सत्यामप्यमरेति वा। अत्रपया

नलं प्रत्यनपेतार्त्ति तार्त्तीयीकतुरीययोः।
युगयोर्युगलं बुद्ध्वा दिवि देवा धियं दधुः ॥ १५८ ॥
द्वापरैकपरीवारः कलिर्मत्सरमूर्च्छितः।
नलनिग्राहिणीं यात्रां जग्राह ग्रहिलः किल ॥ १५९ ॥

सल्लाभावेनामं रोगं पीडामस्मादृशां रासि ददासि अत्रपा-मर। तव निर्लज्जत्वेन वयमतिदुःखिनो भवाम इत्यर्थ इति वा। एते चत्वारोऽपि श्लोका यथाक्रममिन्द्रादिदेववचनत्वेन ज्ञेयाः। कलिकलहस्तु सर्व्वत्रानुस्यूतः। तत्रापि पूर्व्वं देववचः पश्चात्कलिवचः। महार्थता। अर्व्वणस्त्रसाविति (पा॰ ६।४।१२७) त्रत्रादेशः। आन्महतः (पा॰ ६।३।४६) इत्याकारः। रासि ह्नोति पचे, लट्स्मे (पा॰ ३।२।११८) इति भूते लट् ॥ १५७ ॥

नलमिति। देवा इन्द्रादयः तार्त्तीयीकतुरीययोस्तृतीय-चतुर्थयोर्युगयोर्द्वापरस्य कलेश्च युगलं नलं प्रत्युद्दिश्य अनपे-तार्त्ति अनपगतव्यथं, सर्व्वथा नलः पीडनीय इति नलेऽनि-ष्टापकारत्वार्थं बुद्ध्वा दिवि धियं दधुः। युगद्वयमस्मद्वचनं न शृणोति अतः परं यत्किञ्चिद्भवतु किमस्माकमिति विचार्य्य स्वर्गं गन्तुमीषुरित्यर्थः। तार्त्तीयीकः पूर्व्ववत्। तीयादीकक् (पा॰ ४।२।८।वा॰३)। तुरीयः। चतुरश्छयतावाद्यचरलोप-श्चेति (पा॰ ५।२।५१।वा॰१) यत् ॥ १५८ ॥

द्वापरेति। कामादिभिन्नैः पराहत्य द्वापर एवैकसहायो यस्य तथा मत्सरेण नलशुभद्वेषेण मूर्च्छितो विनष्ट इवातिमत्सरेण

नलेष्टापूर्त्तसम्पूर्त्तेर्दूरदुर्गानमुं प्रति।
निषेधन्निषधान् गन्तुं विघ्नः सञ्जघटे घनः॥ १६०॥
मण्डलं निषधेन्द्रस्य चन्द्रस्येवामलं कलिः।
प्राप ग्लापयितुं पापः स्वर्भानुरिव सग्रहः॥ १६१॥

प्रवृत्तो वा। तथा यदिलो निवारणस्यानाकर्णनादायद्भवत् कलिः अवश्यं नलं निग्रहीष्यामीत्येवंरूपां नलनिग्राहिणीं यात्रां अयाद्द निषधान् प्रतस्थ इत्यर्थः। किल यस्माद्धिलस्तस्मात् प्रतस्थे उपहासे वा। एकः परीवारो यस्येति विग्रह्य द्वापरैकेपरीवार इति समासः। परीवारः। उपसर्गस्य घञीति (पा० ६। ३।१२२) दीर्घत्वं। निग्राहिणीं। आवश्यके णिनिः॥ १५९॥

नलेति। नलस्य इष्टापूर्त्तानां यागतडागादिधर्म्माणां सम्पूर्त्तेः सम्पूर्णत्वाद्धेतोः नितरां धर्म्मबाहुल्यात् पापरूपं प्रस्थितममुं प्रति अनु दूरं नितरां दुर्गान् दुर्गमानतेन प्रवेष्टुमशक्यत्वात् निषधान् गन्तुं गमनाय निषेधन् वारयन् घनो महान् निरन्तरश्च विघ्नो वक्ष्यमाणप्रकारेण सञ्जघटे सञ्जज्ञे। धर्म्मबाहुल्यं दृष्ट्वा सहसा तान् प्रवेष्टुं शङ्कित इत्यर्थः। अथ च घनो मेघो जलपूर्त्तेः दुर्गमदेशं गन्तुं विघ्नरूपो भवन्निषेधति। इष्टञ्च पूर्त्तञ्चेति द्वन्द्वे, अन्येषामपि दृश्यत इति (प० ६।३।१३७) दीर्घः॥ १६०॥

मण्डलमिति। पापः कलिः पापग्रहमध्ये गणितत्वात् पापः स्वर्भानुरिवामल निष्पापं निषेधेन्द्रस्य मण्डलं राष्ट्रं अमलं परिपूर्ण-

कियतापि च कालेन कालः कलिरुपेयिवान् ।
भैमीभर्त्तुरहंमानो राजधानीं महीभुजः ॥ १६२ ॥
वेदानुद्धरतां तत्र मुखादाकर्णयन् पदं ।
न प्रसारयितुं कालः कलिः पदमपारयत् ॥ १६३ ॥

प्रकाशं चन्द्रस्य मण्डलं विम्बमिव यग्रहः सम्यगाग्रहात् हठाद्ग्र-हणायोगवशाच्च व्यापयितुं विनाशयितुं ग्रसितुञ्च प्राप ॥१६१॥

कियतेति । कालो युगलक्षणः समयरूपोऽथ च पापरूप-त्वाच्छ्यामवर्णोऽथच दारुणत्वात् कृतान्ततुल्यः तथाऽहंमानी नलपीडनेऽहङ्कारवान् कलिः कियतापि भूयसा कालेन भै-मीभर्त्तुर्महीभुजो नलस्य राजधानीमुपेयिवान् प्राप्तवान् । पूर्वं देशं प्राविशदिदानीन्तु राजधानीमिति चार्थः । भूमिर्भैमीत्या-जने कलेरभिनिवेशोऽभिप्रायो विशेषणद्वयेन सूच्यते । कियता ऽल्पीयसेति वा । अहमिति मननमहंमानः सोऽस्यास्तीति सर्व्व-कार्येष्वहमेवेति मन्यते तच्छील इति वा ॥ १६२ ॥

इदानीं पुरप्रवेशविधानाह । वेदानिति । तत्र पुरे वेदान् ऋगादीनुद्धरतां गुणनिकां कुर्व्वतां श्रोत्रियाणां मुखात् पदं पदकारकल्पितसंहिताविभागरूपं पदमन्त्रं आकर्णयन् शृण्वन् कालः समयरूपोऽथ च पापरूपः कलिः पदमेकमपि चरण-न्यासं प्रसारयितुं नापारयत् पापरूपत्वादित्यर्थः । एतेन नलपु-रस्य धर्मपूर्णत्वमुक्तम् । वेदान् । शतृयोगे, नलोकेति (पा०।२।३ ६८) षष्ठीनिषेधः ॥ १६३ ॥

श्रुतिपाठकवक्त्रेभ्यस्तत्राकर्णयतः क्रमं ।
क्रमः सङ्कुचितस्तस्य पुरे दूरमवर्त्तत ॥ १६४ ॥
तावद्गतिर्धृताटोपा पादयोस्तेन संहिता ।
न वेदपाठिकण्ठेभ्यो यावदश्रावि संहिता ॥ १६५ ॥

श्रुतीति । तत्र पुरे श्रुतिपाठका वेदाध्यापयितारस्तेषां वक्त्रेभ्यः सकाशात् क्रमं पूर्व्वपदपरित्यागेनोत्तरपदग्रहणादिक्रमसंज्ञं ग्रन्थं आकर्णयतः शृण्वतोऽस्य कलेः क्रमश्चरणो गतिर्वा दूरं नितरां सङ्कुचितः क्रमाकर्णनाद्भयेन पापः पदमपि पुरःसर्त्तुमशक्नुवंस्ततो देशाद् दूरं निवृत्त इत्यर्थः ॥ १६४ ॥

तावदिति । तेन कलिना वेदपाठिनां कण्ठेभ्यो मुखेभ्यः यावत्संहिता पदक्रमरूपावस्थाद्वयविलक्षणा स्वरादिरूपा नाश्रावि नाकर्णिता तावत्कालं तावद्देशपर्य्यन्तञ्च प्रतिबन्धराहित्यात्कृताटोपा धृतसंरम्भा सत्वरा पादयोर्गतिः संहिता संयोजिता । यावत्कालं यावति च देशे संहिता नाकर्णिता तावत्कालं तावद्देशपर्य्यन्तञ्च प्रतिबन्धराहित्याच्छीघ्रगतिरभूत् । यदा यस्मिंश्च देशे सा श्रुता तदैव तस्य गतिभङ्गोऽभूदित्यर्थः । यावत् संहिता अश्रावि तावत्पदयोः सत्वरा गतिर्योजिता नापि तु तावदेव योजिता । संहिताश्रवणपर्य्यन्तमेव सत्वरगतिः सोऽभूत् नानन्तरमित्यर्थः ॥ १६५ ॥

तस्य होमाज्यगन्धेन नासा नाशमिवाऽगमत् ।
तयातत दृशौ नासौ क्रतुधूमकदर्थिते ॥ १६६ ॥
अतिथीनां पदाम्भोभिरिमं प्रत्यतिपिच्छिले ।
अङ्गणे गृहिणां तत्र खलेनानेन चस्खले ॥ १६७ ॥
पुटपाकमिव प्राप क्रतुभुग्धामहोमभिः ।
तत्प्रत्यङ्गमिवाकर्त्ति पूर्त्तार्मिव्यजनानिलैः ॥ १६८ ॥

तस्येति। तस्य नासा अग्निहोत्रादिहोमाज्यं होमसम्बन्धितं तस्य गन्धेन परिमलेन हेतुना नाशमिव मरणवेदनामिवागमत् अन्वभूदित्युत्प्रेक्षा । इवशब्द एवकारार्थो वा । तया तेनैव कारणेनासौ कलिः क्रतुधूमेन कदर्थिते पीडिते दृशौ नेत्रे ऽपि अतत न प्रसारितवान् । किञ्चिन्न ददर्शेत्यर्थः । आज्यगन्धक्रतुधूमसम्बन्धमात्रेण विव्यथ इत्यर्थः । अतत इति तनोतेर्लुङि आचि, तनादिभ्यस्तथासोरिति (पा॰२।४।७९) पाक्षिके सिज्लोपे तकारस्य ङित्वादनुदात्तोपदेशेवनतितनोति (पा॰६।४।३७) इत्यनुनासिकलोपः ॥ १६६ ॥

अतिथीनामिति । तत्र पुरे अनेन खलेन कलिना गृहिणां अङ्गणे चस्खले । यस्मादतिथीनां पदाम्भोभिश्चरणक्षालनोदकैरिमं पापरूपं कलिं प्रत्युद्दिश्य अतिपिच्छिले अतितरां कर्दमयुक्ते । एवंविधमतिपवित्रमङ्गणं प्रवेष्टुं नाशकदित्यर्थः अन्योऽपि पिच्छिले देशे पतति ॥ १६७ ॥

पुटेति । असौ कलिः क्रतुभुजा यागसम्बन्धी वह्निस्तस्य

पितॄणां तर्पणे वर्णैः कीर्णादेस्तनि वेश्मनि।
कालादिव तिलात् कालाद् दूरमत्रसदत्र सः ॥१६९॥
स्नातॄणां तिलकैर्मेने स्वमन्तर्दीर्णमेव सः।
कृपाणीभूय हृदयं प्रविष्टैरिव तस्य तैः ॥ १७० ॥

मद्यैरभिः प्रकृष्टतापैः कृत्वा पुटाभ्यां पुटयोर्वा पाकं उभयपार्श्वयोर्यथा यदेशान्तरमग्निसंयोगमिव प्राप प्रतिगृहं यागबाहुल्यात् वामदक्षिणपार्श्वयोर्वह्नितापैर्नितरां पीडामन्वभूदित्यर्थः। तथा पूर्त्तानां धार्म्मिकनिर्म्मितवापीकूपतडागादीनां कर्म्मयशःरूपाणि व्यजनानि तेषामनिलैर्वायुभिः तस्य प्रत्यङ्गं सर्व्वाङ्गं चकर्त्तीव छिन्नमिवाभूत् इत्युत्प्रेक्षा। प्रत्यवयवकर्त्तनेन च पीडातिशयाद् वाप्यादितरङ्गवायुस्पर्शमात्रेण नितरां व्यथितोऽभूदित्यर्थः। वह्निः शुष्मा कृष्णवर्त्मेत्यमरः ॥ १६८ ॥

पितॄणामिति। अत्र पुरे वेश्मनि वेश्मनि प्रतिगृहं ब्राह्मणादिचतुर्वर्णैः पितॄणां तर्पणे जलसमर्पणे विषये कीर्णात् क्षिप्तात् पितृप्रियात् कालात् कृष्णवर्णात् तिलात् सकाशात् स कलिः कालादिव कृतान्तादिव दूरं नितरां अत्रसत् भयमाप। तर्पणैरिति पाठे तर्पयन्तीति तर्पणैरिति वर्णविशेषणं। तिलात्। इति जातावेकवचनं ॥ १६९ ॥

स्नातॄणामिति। स कलिः स्नातॄणां स्नानं कुर्व्वतां वैदिकानां तैस्तादृग्भैर्गोपीचन्दनादिरचितैर्ललाटस्थानादिस्थैर्द्धादशभिस्तिलकैः कृपाणीभूय खड्गतामङ्गीकृत्य तस्य कलेः हृदयं

पुमांसं मुमुदे तत्र विदन् मिथ्यावदावदं ।
स्त्रियं प्रति तथा वीक्ष्य तमथ म्लानवानयं ॥ १७१ ॥
यज्ञयूपघनां जज्ञौ स पुरं शङ्कुसङ्कुलां ।
जनैर्धर्म्मधनैः कीर्णां व्यालक्रोडीकृतांश्च तां ॥ १७२ ॥

विदार्य्य तैः प्रविष्टैरिव स्वं स्वकीयं अन्तः शरीरमधं दीर्णमेव शकलीभूतमेव मेने। कृपाणैर्हि विदारणं भवतीति युक्तम्। खड्गाकारांस्तिलकान् दृष्ट्वा विव्यथ इत्यर्थः ॥ १७० ॥

पुमांसमिति। तत्र पुरे अयं पुमांसं मिथ्यावदावदं मृषाभाषिणं विदन् जानन् स्वमित्रलाभान्मुमुदे। अथ पश्चात्तदनन्तरं स्वस्त्रियं प्रत्युद्दिश्य तं तथालीकभाषिणं वीक्ष्य ज्ञात्वा मित्रनाशादिव दुःखवशात् म्लानवान् म्लानतां गतः। पत्नीं प्रति क्रीडायामसदिति दोषाभावाद्दुषितोऽभूदित्यर्थः। न नर्मयुक्तं वचनं हिनस्ति स्त्रीपुंसयोरिति भारतादौ। विदन्। विदेः शतुर्वसुः (पा०७।१।३६) इत्यत्र विकल्पानुवृत्तेर्वसुभावः। एवं चतुर्द्दशतयीविद्याविदद्भिरित्यत्रापि ज्ञेयम्। वदावदं। चरिचलीत्यादिना (पा०६।१।१२वा०८) द्वित्वमभ्यासस्यालश्च। म्लानवान् कवतोश्चाकारस्य संयोगादेरात इति (पा०८।२।४३) नः ॥ १७१ ॥

यज्ञेति। सः यज्ञयूपैः खादिरोडुम्बरपशुबन्धस्तम्भैः घनां नितरां व्याप्तां तां पुरं शङ्कुभिस्तीक्ष्णाग्रकीलैः सङ्कुलां व्याप्तामिव जज्ञौ मेने। तथा धर्मधनैर्जनैः कीर्णां तां पुरं व्यालैः सर्पैः दुष्टश्वापदैर्वा दुष्टगजैर्वा क्रोडीकृतां सर्वत्र पूर्णां व्याला: क्रोडे

स पार्श्वमशकद्गन्तुं न वराकः पराकिणां ।
मासोपवासिनां छाया लङ्घने घनमस्खलत् ॥ १७३ ॥
आवाहितां द्विजैस्तत्र गायत्रीमर्कमण्डलात् ।
स सन्निदधतीं पश्यन् दृष्टनष्टोऽभवद्भिया ॥ १७४ ॥

मध्ये यस्यास्तामेतादृशीं लतामिव मेने । कीलसर्पादिभिर्व्याप्तं स्थानं यथा प्रवेष्टुमशक्यं तथा सा पुरी तस्य प्रवेष्टुमशक्या जातेत्यर्थः । व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनीति विश्वः । रेफान्तो पूःशब्दः स्त्रीलिङ्गः । चः समुच्चयार्थ इवार्थो वा ॥१७२॥

स इति । वराकः कश्चिदपि स्थानालाभाद्दीनः स कलिः पराकिणां द्वादशरात्रोपवासरूपपराकाख्यकृच्छ्रविशेषव्रतचारिणां पार्श्वे गन्तुं नाशकत् । तथा मासोपवासिनां कायप्रतिच्छायाया अपि लङ्घनेऽतिक्रमणे तस्या अपि समीपे गन्तुं घनं निरन्तरं अस्खलत् भ्रमत्पदोऽभूत् । तच्छायामपि द्रष्टुं नाशकदित्यर्थः । वराकः । जल्पभिक्षेति (पा० ३।२।१५५) कन् ॥१७३॥

आवाहितामिति । तत्र पुरे स द्विजैस्त्रैवर्णिकैरागच्छ वरदे इत्यादिमन्त्रैरावाहितामन्तरर्कमण्डलाद्भिया अतिशयसामर्थ्यात् सूर्यबिम्बान्निर्गत्य दिव्यरूपेण सन्निदधतीं तत्समीपमागच्छन्तीं प्रातःसन्ध्याधिदेवतां गायत्रीं पश्यन् गायत्र्याः सकाशाद्भयेन गायत्र्यैवादौ दृष्टः पश्चात्तदानीमेव नष्टोऽदृश्योऽभवत् । सन्ध्यावन्दनं कुर्वतो द्विजान् दृष्ट्वा गायत्री मां विनाशयिष्यतीति मतः स्थानात् पलाय्य गत इत्यर्थः । गायत्री सूर्य-

स गृहे गृहिणां पूर्णे वने वैखानसैर्वृते।
यत्याधारेऽमरागारे क्वापि न स्थानमानशे ॥ १७५ ।
क्वापि नापश्यदन्विष्यन् हिंसामात्मप्रियामसौ।
स्वमित्रं तत्र न प्रापदपि मूर्खमुखे कलिं ॥ १७६ ॥
हिंसागवीं मखे वीक्ष्य रिरंसुर्धावति स्म सः।
सा तु सौम्यत्वपासक्ता खरं दूरान्निरास तं ॥ १७७ ॥

विम्बस्था इति ध्यानं। अर्कमण्डलादाहितामिति वा। दृष्टनष्टः। पूर्व्वकालैकेति (पा० २।१।४८) समासः ॥ १७४ ॥

स इति। स कलिर्गेहिणां गृहस्थैः पूर्णे गृहे तथा वैखानसैर्वानप्रस्थैर्वृते व्याप्ते वने तथा यतीनां परमहंसानां सन्न्यासिनामाधारे आश्रयभूते तैर्व्याप्ते अमरागारे देवालये स्थानं नानशे आश्रयं न प्राप। क्वापि कस्मिन्नपीति सर्व्वत्र योज्यं। गृहिभिर्गेहे पूर्णे सतीति सप्तमी वा सर्व्वत्र ॥ १७५ ॥

क्वापीति। असौ कलिः तत्र पुरे आत्मनः प्रियां दृष्टां निषिद्धां हिंसां अथ च स्त्रियं अन्विष्यन् न क्वापि कस्मिन्नपि देशे नापश्यत्, तथा कलहप्रियत्वान्नामसाम्याच्च स्वस्य मित्रं कलिं कलहं मूर्खाणामपि मुखे सम्भावितस्थले न प्रापत्। मूर्खा अपि तत्र न कलहायन्ते। हिंसाकलहयोरभावात्तत्र स्थितिं न लेभ इत्यर्थः। अन्योऽपि यत्र मित्रस्त्र्याद्यभावस्तत्र क्षणमपि न तिष्ठतीत्युक्तिः ॥ १७६ ॥

हिंसेति। मखे गोमेधाख्ये यज्ञे हिंसागवीं हिंसासम्बन्धिनीं

मौनेन व्रतनिष्ठानां स्वाक्रोशं मन्यते स्म सः ।
वन्द्यवन्दारुभिर्जुष्टौ स्वशिरस्य पदाहतं ॥ १७८ ॥

गवीं वीक्ष्य रिरंसुर्हृष्टचित्तः स कलिः निषिद्धगोहिंसा मत्प्रियेति धावति स्म । सा तु हन्यमाना गौः पुनः सौम्ये सोमदेवताकद्रव्यसाध्ये वृषे धर्मे आसक्ता तत्सम्बन्धिनी तत्साधिका सती अभिचारादिदुष्टकर्मराहित्यात् सौम्यो रमणीयः पारलौकिको धर्मस्तत्साधिका वा खरं पापरूपत्वाद्दुःसहं रलयोरभेदात् खलं वा पापरूपं दूरादेव निरास निराचकार । अधर्मसाधनं गोहिंसादि दृष्ट्वा प्रवृत्तः पश्चाद्धर्मसाधनमग्नीषोमीयवैदिकपशुहिंसादि दृष्ट्वा मत्प्रिया हिंसा न भवतीति दूरात् परावृत्त इत्यन्वयः । मुखे इति पाठे हिंसाप्रतिपादिकां गां वाणीं यज्वनां मुखे वीक्ष्य श्रुत्वेति यावत्, रिरंसुरधावत् । सा तु वाणी सौम्यप्रतिपादिका सती तं अखरं अग्नीषोमीयं पशुमित्यादिवाक्याकर्णनमात्रेण दुःखवशान्निस्तेजस्कं दूरान्निरासेति वा । अथ च कामातुरः सुरतेच्छुः खरो गर्दभः गां वीक्ष्य यद्यपि धावति तथापि सा रमणीयवृषभानुरक्ता सती विजातीयत्वाद्गर्दभं दूरान्निराकरोति । मखे यज्ञप्रारम्भ इति वा । अथ च गौर्यथा सौम्यं वृषभमनुसरति क्रूरं वृषभं त्यजति । सुकृते वृषभं वृष इत्यमरः । हिंसागवीति गोरतद्धितेति (पा० ५।४।९२) टच् ॥ १७७ ॥

मौनेनेति । स कलिः मौनव्रतनिष्ठानां वाग्यमव्रतिनां स-

क्षपीणां स वृसीः पाणौ पश्यन्नाचामतामपः।
मेने घनैरमी हन्तुं ग्रसुं मामङ्गिरुद्यताः ॥ १७९ ॥
मौञ्जीधृतो धृतापाढानाशशङ्के स वर्णिनः।
रज्वामी बद्धुमायान्ति हन्तुं दण्डेन मां ततः ॥ १८० ॥

न्ध्यादिजपमौनिनां वा मौनेन वाङ्नियमेन क्षता स्वस्यात्मन आक्रोशं गालीप्रदानमेव मन्यते स्म। तथा वन्द्येषु नमस्कारार्हेषु गुर्वादिषु वन्दारुभिः नमस्कुर्वद्भिर्नरैः स्वशिरस्य पदा हतं चरणताडितमिव जडो अज्ञासीत्। च इवार्थो वा। वन्दारुभिः।शृवन्द्योरारुरित्यारुः(पा० ३।२।१७३)।वन्द्यानिति पाठे, तद्योगे,न लोकेति(पा० २।३।६९)षष्ठीनिषेधाद्द्वितीया॥१७८॥

क्षपीणामिति। स कलिः क्षपीणां पाणौ हस्ते वृसीः कुशासनानि पश्यन् अमी क्षपयः घनैर्लोहमुद्गरैर्मां हन्तुमुद्यता इति मेने। तथा आचामतां तेषामेव हस्ते आचमनार्थं गृहीता अपः पश्यन् अमी मामद्भिश्च त्वं भस्मसाद्भवेति ग्रसुमिवेति प्रतीयमानोऽमेवा। सकुशानिति पाठे कुशानपश्च पश्यन्नित्यर्थः। अत्र दैर्घ्यात् कुशा एव घनतुल्याः। आचामतां। ष्ठिवुक्लमुचमामिति (पा० ७।३।७५) दीर्घः ॥ १७९ ॥

मौञ्जीति। स कलिः मौञ्जीधृतो मुञ्जतृणमेखलाधारिणः तथा धृत आषाढः पालाशदण्डो यैस्तान् वर्णिनो ब्रह्मचारिणः एवम्भूतानाशशङ्के मेने, अमी पुरुषा रज्वा मां बद्धुं ततो बन्धनानन्तरञ्च दण्डेन मां हन्तुमायान्तीति। मौञ्जीधृतो

दृष्ट्वा पुरः पुरोडाशमासीदुत्त्रासदुर्मनाः।
मन्वानः फणिनीस्तत्र स मुमोचाश्रु च स्रुचः ॥ १८१ ॥
मुमुदे मदिरादानं विन्दन्नेष द्विजन्मनः।
दृष्ट्वा सौत्रामणीमिष्टिं तं कुर्वन्तमदूयत ॥ १८२ ॥

घृताषाढा एते ब्रह्मचारिणो न भवन्ति किन्तु मां रज्ज्वा बद्धा दण्डेन हन्तुमायान्तीत्याशशङ्क इति वा। घृताषाढान्निति पाठे एवम्भूताद् ब्रह्मचारिण इति नाशशङ्के किन्त्वित्युत्तरार्द्धं। पालाशो दण्ड आषाढः। वर्णिनो ब्रह्मचारिण इत्यमरः। मौञ्जी। विकारेऽञ्। वर्णास्त्वेषां ब्रह्मचारिणामिति वर्णिनः ॥ १८० ॥

दृष्ट्वेति। स तत्र पुरोऽग्रेऽश्मशकमाचं पुरोडाशं अष्टाशकपालादिसंस्कृतं पशुशरीरावयवं दृष्ट्वा उत्त्रासेनोत्कृष्टभयेन दुर्मना दुःखित आसीत्। तथा स्रुचः सर्पफणाकारपुरोभागा वैकङ्कतादिस्रुक्ः फणिनीः सर्पिणीर्मन्वानोऽश्रु मुमोच दंशनभिया रुरोदेत्यर्थः। पुरोडाशो ऽकारान्तः। पुरोडाशभुजामिष्टिमिति माघः ॥ १८१ ॥

मुमुद इति। एष द्विजन्मनो ब्राह्मणस्य मदिरादानं मदिरास्वीकारं विन्दन् जानन् पश्यन् अयं महापातकीति बुद्ध्या मुमुदे। अनन्तरं च सौत्रामणीमिष्टिं इन्द्रदेवताकं यागं कुर्वन्तं द्विजं दृष्ट्वाऽदूयत। सौत्रामण्यां सोमयागात् सुराग्रहांश्च गृह्णातीति श्रुतेर्मदिरादानस्य वैधत्वात्पापाश्रयविनाशादिव विषय

अपश्यद्यावतो वेदविदो ब्रह्माञ्जलीनसौ ।
उदडीयन्त तावन्तस्तस्यास्राञ्जलयो हृदः ॥ १८३ ॥
स्नातकं घातकं जज्ञे जज्ञौ दान्तं कृतान्तवत् ।
वाचंयमस्य दृष्ट्वैव यमस्यैव बिभाय सः ॥ १८४ ॥

इत्यर्थः । सौत्रामणीति देवतार्थे सम्बन्धमात्रे वाऽणि अन्निति (पा० ६।४।१६७) प्रकृतिभावः ॥ १८२ ॥

अपश्यदिति । असौ वेदविदो यावतो यावत्सङ्ख्याकान् बहून् ब्रह्माञ्जलीन् ब्रह्माध्ययनसमये क्रियमाणान् हस्तस्वरकल्पनार्थं संयोजितान् करपुटान् वा सूर्योपस्थायिनां गायत्रीमन्त्रजपाञ्जलीन्,

ब्रतारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।
संहृत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥

इति मनूक्तलक्षणान् करसंपुटानपश्यत् तावन्तस्तस्य कलेः हृदः सकाशादस्राञ्जलयोरक्तपूर्णा अञ्जलयः उदडीयन्त उत्पतिता निर्गताः । तद्दर्शनमात्रेण नितरां विदीर्णहृदयोऽभूदित्यर्थः । तदस्रेति वा पाठ उत्प्रेक्ष्यः ॥ १८३ ॥

स्नातकमिति । स विद्याव्रतस्नातकं उभयस्नातकञ्च स्वस्य घातकं विश्वासघातिनं जज्ञे मन्ये । तथा दान्तं तपःक्लेशसहं जितेन्द्रियं नरं कृतान्तवत् यममिव भयहेतुं जज्ञौ ज्ञातवान् । तथा वाचंयमस्य मौनिनो दृष्ट्वैव दर्शनमात्रेण मौनिकर्तृकत्वकर्मकमौनिकर्मादर्शनेनैव वा बिभाय । कस्येव यमस्येव । यम-

स पापण्डजनान्वेषी प्राप्नुवन् वेदपण्डितान् ।
जलार्थीवानलं प्राप्य पापस्तापादपासरत् ॥ १८५ ॥
तत्र ब्रह्महणं पश्यन्नतिसन्तोषमानशे ।
निर्वर्ण्य सर्व्वमेधस्य यज्ञ्वानं ज्वरति स्म सः ॥ १८६ ॥

कर्तृकस्वकर्म्मकस्वकर्तृकथमकर्म्मकदर्शनेन वा । यमेन दृष्टेन यथा भयं तथा मौनिभ इत्यर्थः । स्नातकस्त्वाप्लुतो व्रती । तपःक्लेशसहो दान्त इत्यमरः ।

गुरवे तु वरं दत्त्वा स्नायाच्च तदनुज्ञया ।
वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥

इति याज्ञवल्क्यः । स्नातीति स्नातकः, याजकादित्वात् साधुः, ण्वुलन्तः । घातकं । हन्तेर्ण्वुलि हनस्तः । जज्ञौ जज्ञे इति जानातेः कर्त्रभिप्राये क्रियाफलाविवक्षायां, शेषात् कर्त्तरीति (पा० १। ३।७८) परस्मैपदं । तद्विवक्षया अनुपसर्गाज्ज्ञः इति (पा० १।३। ७६) तङ् । दृष्ट्वेति भयहेतुत्वाविवक्षायाञ्चापादानत्वं ॥१८४॥

स इति । स पापण्डजनान्वेषी स्वपक्षीयान् वेददूषकान् विचारयन् वेदेषु पण्डितान् श्रौतस्मार्त्तकर्म्मठान् प्राप्नुवन् पश्यन् तापादतिदुःखाद्धेतोः अपासरत् पलायितः । यतः पापरूपः । क इव अनलं प्राप्य जलार्थीव । तृषितो जलं विचिन्वन् अग्निं प्राप्योत्तापाद् दूरं पलायते ॥ १८५ ॥

तत्रेति । स तत्र ब्रह्महणं नरं पश्यन् महापातकित्वादा-त्मीयत्वादतितरां सन्तोषमानशे प्राप । अनन्तरं सर्व्वमेधाख्यस्य

यतिहस्तस्थितैस्तस्य राम्भैरारम्भि तर्जना ।
दुर्जनस्याजनि क्लिष्टिर्ऋद्धिणां वेदयष्टिभिः ॥ १८७ ॥
मण्डलत्यागमैवैक्षद्वीक्ष्य स्थण्डिलशायिनः ।
पवित्रालोकनादेष पवित्रासमविन्दत ॥ १८८ ॥

यज्ञस्य यज्वानं तं प्रोक्षणावदानादिसंस्कारादिकर्माणा निर्वर्त्य निर्ह्रार्य्य ज्वरति स्म नितरां तप्तोऽभूत् । सर्व्वमेधे हि तत्तज्जातीयैकैकप्राणिहिंसाधिकाराद्ब्रह्मणे ब्राह्मणमालभेतेति श्रुत्या ब्रह्मवधस्य वैधत्वान्निराश्रयत्वात् सन्तप्त इत्यर्थः । ब्रह्महणं । ब्रह्मभ्रूणेति (पा० ३।२।८७) क्विप् । ज्वरतिर्घ्वादिः ॥ १८६ ॥

यतीति । यतीनां सन्न्यासिनां हस्तस्थितैराम्भैर्वेणुदण्डैस्तस्य कलेस्तर्जना भर्त्सना आरम्भि अकारि । तथा ऋद्धिणां गृहस्थानां वेदैरेव यष्टिभिर्दण्डैर्वेदानां क्रमजटारूपाभिर्वा यष्टिभिस्तस्य दुर्ज्जनस्य क्लिष्टिः क्लेशोऽजनि । राम्भयष्टीर्दृष्ट्वा भीत इत्यर्थः । राम्भस्तु वैणव इत्यमरः । रम्भो वेणुस्तस्येदमिति (पा० ४।३। १२०) अण् । क्लिष्टिः । तितुत्रेति (पा० ७।२।९) इट्निषेधः ॥ १८७ ॥

मण्डलेति । एष स्थण्डिलशायिनो वेदिकाशायिनो व्रतचारिणो नरान् वीक्ष्य मण्डलस्य तद्राष्ट्रस्य त्यागमैवैक्षत् । तथा पवित्राणां यज्ञाद्युपकरणादीनां ग्रन्थिविशेषनिबद्धानां पाणिस्थकुशानां आज्याद्युत्पवनसाधनानामन्तर्गर्भरहितसाग्रानखच्छिन्नदर्भाणामालोकनात् पवैर्वज्राद्यस्त्रासस्तमविन्दत प्राप । ततो

अपश्यज्जिनमन्विष्यन्नजिनं ब्रह्मचारिणं।
क्षपणार्थी सदीक्षस्य स चाक्षपणमैक्षत॥ १८९ ॥
जपतामक्षमालासु वीजाकर्षणदर्शनात्।
स जीवाकृष्टिकष्टानि विपरीतदृगन्वभूत्॥ १९० ॥

मङ्गलमापेत्यर्थः। अगर्भौ साग्रौ दर्भौ पवित्रमिति कात्यायनः। स्थण्डिल एव शेते व्रतवशात् स स्थण्डिलशायी, व्रत इति (पा० ३।२।८०) णिनिः ॥ १८८ ॥

अपश्यदिति। स जिनं बौद्धविशेषं स्वमित्रमन्विष्यन् ब्रह्मचारिणं अजिनं कृष्णमृगचर्मोत्तरासङ्गमपश्यत्। क्षपणेन दिगम्बरेण देवाधेनोऽर्थीव प्रयोजनार्थी तमपि गवेषयत् यस्मदीक्षया सहितस्य यज्वनोऽक्षपणं दीक्षाङ्गधर्मपरित्यागाभावमैक्षत। यद्वा अक्षाभ्यां पाशकाभ्यां पणं क्रीडां पाशकसम्बन्धिजयपराजयदेयं राशीकृतं धनं ददर्श। राजसूये यजमानोऽक्षैर्दीव्यतीतिश्रुतेर्विहितत्वात् तद्द्यूतं युक्तं। वैधं सर्व्वं दुःखदं स्वस्वामित्रमेव ज्ञातवान् न तु मित्रमित्यर्थः। पणः। नित्यं पण इत्यप् (पा० ३। ३।६६) ॥ १८९ ॥

जपतामिति। जपतां नराणां अक्षमालासु पद्माक्षरुद्राक्षादिमणिनिर्म्मितजपमालिकासु वर्त्तमानानां पद्माक्षादिवीजानां अपगणनार्थमाकर्षणं तस्य दर्शनाद्धेतोर्जीवानां प्राणानामाकृष्टिराकर्षणं तया जातानि कष्टानि दुःखानि अन्वभूत्। यस्माद्विपरीतदृक् विरुद्धदर्शी। सर्व्वहितधर्म्मसहितत्वेन

त्रिसन्ध्यं तत्र विप्राणां स पश्यन्नघमर्षणम्।
वरमैच्छद् दृशोरेव निजयोरपकर्षणम्॥ १९१॥
अद्राक्षीत् तत्र कश्चिन्न कलिः परिचितं क्वचित्।
भैमीनलव्यलीकाणुप्रश्नकामः परिभ्रमन्॥ १९२॥

जानानस्तादृग्धर्मदर्शनमात्रेण मद्दुःखमन्वभूदित्यर्थः। अथ च विपरीतदर्शनशीलत्वादीत्यत्र व्यञ्जनमात्रव्यत्ययेन जवयोः सावर्ण्येन च जीवेति भवतीति जीवाद्रष्टिकष्टानुभवनं युक्तं॥ १९०॥

त्रिसन्ध्यमिति। स तत्र त्रिसन्ध्यं प्रातर्मध्याह्नसायाह्नरूपं सन्ध्यात्रयमभिव्याप्य विप्राणां ऋतञ्चेत्यघमर्षणं ऋग्भिर्नासाग्रगाभिमन्त्रितं चुलुकोदकं तत्प्रक्षेपणोदकं वा पश्यन् निजयोर्दृशोरपकर्षणं उन्मूलनमेव वरं श्रेष्ठमिति ऐच्छत्। मदीयनेत्रे यदि कोऽप्युदमूलयिष्यत् तर्ह्येतद्दुःखमूलं नाद्रक्ष्यतां। तस्मान्नेत्रोन्मूलनमेव वरमिति मेन इत्यर्थः। तदपि दृष्ट्वा दुःखितोऽभूदिति भावः। अघमर्षणदर्शनव्यथा नेत्रापकर्षणव्यथातुल्या। त्रिसन्ध्यं। अत्यन्तसंयोगे द्वितीया॥ १९१॥

अद्राक्षीदिति। भैमीनलयोर्व्यलीकस्यानृतस्याणु दोषलेशमपि प्रश्नकामः प्रष्टुं वाञ्छन् अत एव तत्र पुरे कथकमित्रगवेषणार्थं परिभ्रमन् परितो विचरन् स कलिः क्वचिदपि स्थाने कञ्चिदपि स्वस्य परिचितं जिनक्षपणकादिमित्रं नाद्राक्षीत्। नलेन भैम्या वा तत्रत्येन जनेन वा छलेषु क्वचिदपि केषुचि-

तपःस्वाध्याययज्ञानामकाण्डद्विष्टतापसः।
स्वविद्विषां श्रियं तस्मिन् पश्यन्नुपतताप सः ॥ १९३ ॥
कस्मं तत्रोपनम्रायाः विश्वस्या वीक्ष्य तुष्टवान्।
स मन्लौ तं विभाव्याथ वामदेव्याभ्युपासकं ॥ १९४ ॥

दपि महापातकेषु मध्ये किञ्चिदपि परिचितं पातकं नाद्राक्षीत्। त्वया भैमी नलोऽन्यत्र लोकैर्वा स्पृष्टः किमिति कलिः पृच्छति। तदेकमपि पापं नास्त्येवेति भाव इति वा ॥ १९२ ॥

तप इति। पञ्चाग्निसाधनादि तपः, वेदपाठरूपः स्वाध्यायः, देवतोद्देशेन द्रव्यत्यागो यागो यज्ञः, एषां स्वस्य पापरूपत्वाद् विद्विषां वैरिणां तस्मिन् पुरे श्रियं समृद्धिं बाहुल्यं पश्यन् अकाण्डं निष्कारणमेव द्विष्टस्तापसो येन स कलिः उपतताप अतिदाहमापातिदुःखितोऽभूदित्यर्थः। अन्योऽपि स्ववैरिलक्ष्मीं पश्यन्नुपतप्यते। यज्ञापेक्षया स्वाध्यायस्य अभ्यर्हितत्वात् पूर्वनिपातः ॥ १९३ ॥

कस्ममिति। स तत्र मुनेः उपनम्राया उपासकस्य समीपमागत्य स्थितायाः स्वजायाया विजातीयाया गम्याया अगम्याया वा विश्वस्याः स्त्रियः कस्मं कामुकं तं सम्भुञ्जानं कञ्चन नरं वीक्ष्यायं महापातकी ममाश्रयो भविष्यतीति बुद्ध्या तुष्टवान्। अथ पश्चाद्विचारणायां क्रियमाणायां तं कस्मं वामदेवेन मुनिना दृष्टं वक्ष्यमाम कयानश्चित्रमित्यादिवामदेव्यं नाम साम तस्य सामविद्याया अभ्युपासकं विभाव्य मत्वा मन्लौ दुःखितोऽभूत्।

वैरिणी शुचिता तस्मै न प्रवेशं ददौ भुवि ।
न वेदध्वनिरालम्बमम्बरे विततार च ॥ १९५ ॥
दर्शस्य दर्शनात् कष्टमग्निष्टोमस्य चानशे ।
जुघूर्णे पौर्णमासेष्टौ सोमं सोऽमन्यतान्तकम् ॥ १९६ ॥

वामदेव्योपासने सर्वाः स्त्रिय उपमोदन्तीति श्रुतिः। दृष्टं सामेत्यर्थे, वामदेवाड्ड्यड्ड्याविति (पा० ४।२।९) ड्यः ॥ १९४ ॥

वैरिणीति। शुचिता लोकानां बाह्याभ्यन्तरशुचिता मनःशुद्धिः गोमयाद्यनुलेपनजनिता च शुचिता भुवि प्रवेशं तस्मै न ददौ। यस्मादशुचेस्तस्य वैरिणी। नगरमध्ये सर्व्वेषां जनानां भूमेश्च शुचित्वात् स्थातुं नाशकदित्यर्थः। तथा वेदध्वनिरम्बरे शब्दाश्रये नगरसम्बन्ध्युपरितनाकाशदेश आलम्बमाश्रयं न विततार। अम्बरस्य वेदध्वन्याश्रयत्वात् तत्रापि स्थातुं नाशकदित्यर्थः। चः समुच्चये। अन्योऽपि वैरिणे स्थानं न ददाति ॥ १९५ ॥

दर्शस्येति। दर्शस्यामावास्यायागस्य अग्निष्टोमयागस्य च दर्शनात् कष्टं महद्दुःखमानशे प्राप। तथा पौर्णमासं यागमीयते एवंशीलः सन् जुघूर्णे बभ्राम। तद्दर्शनेन मुमूर्च्छेत्यर्थः। सोमयागं तु अन्तकमेवामन्यत। तद्दर्शनान्मरणमेवाभूदित्यर्थः। अन्यस्यापि ज्वरादिपीडा पश्चान्मूर्च्छा अनन्तरं मरणं भवति ॥ १९६ ॥

तेनादृश्यन्त वीरघ्ना न तु वीरहणो जनाः।
नापश्यन् सोऽभिनिर्मुक्तान् जीवन्मुक्तानवैक्षत॥१९७॥
स तुतोषाश्नतो विप्रान् दृष्ट्वा स्पृष्टपरस्परान्।
होमशेषीभवत्सोमभुजस्तान् वीक्ष्य दूनवान्॥१९८॥

तेनेति। तेन कलिना वीरान् शूरान् घ्नन्तीति क्षत्रधर्मजीविनो धार्मिका अदृश्यन्त। वीरान् श्रेष्ठाचारवतो घ्नन्तीति वीरहणो जना न दृष्टाः। शूरा एव यैर्हन्यन्ते न तु सदाचाराः तादृशा महावीरा एव तत्र तेन दृष्टा इत्यर्थः। यद्वा वीरयते शूरो भवति तेजस्वी वह्निस्तं घ्नन्त्युपेक्षया नाशयन्तीति वीरहणो नष्टाग्नयस्ते पुनर्न दृष्टाः। सर्वोऽपि गृहस्थः साग्निक एव तत्रेत्यर्थः। तथा स अभिनिर्मुक्तान् येषु सुप्तेषु सूर्योऽस्तमेति तादृशान् सूर्यास्तमयसमये निद्रितान् अनाचारांस्तत्र नापश्यन्। किन्तु जीवन्तश्च ते मुक्ताश्च तान् विषयपरित्यागिनो ब्रह्मज्ञानिनोऽवैक्षत। वीरघ्ना वीरहननयोग्या दृष्टा न तु ये वीरान् हतवन्तस्ते दृष्टाः। वीरमारणमपि तत्र राष्ट्रे न क्रियते इत्यर्थ इति वा।

सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च।
अंशुमानभिनिर्मुक्ताभ्युदितौ तु यथाक्रमं॥

इत्यमरः। वीरघ्नाः। मूलविभुजादित्वात् कः॥१९७॥

स इति। स विप्रान् स्पृष्टं परस्परं यैस्तानन्योन्यस्पर्शिनोऽश्नतो भुञ्जानान् दृष्ट्वा तुतोष। उच्छिष्टानां मिथः स्पर्शनिषेधात्तदतिक्रमकारिणः स्वाश्रयत्वेन सम्भाव्य हृष्ट इत्यर्थः। अनन्तरं होम-

श्रुत्वा जनं रजोदुष्टं तुष्टिं प्राप्नोत् झटित्यसौ।
तं पश्यन् पावनस्थानावस्थं दुस्थस्ततोऽभवत्॥ १९९ ॥
अधावत् क्वापि गां वीक्ष्य हन्यमानामयं मुदा।
अतिथिभ्यस्तु तां बद्धा मन्दं मन्दो न्यवर्त्तत ॥ २०० ॥

शेषीभवत्सोमभुजः होमावशिष्टःसोमस्तं भुञ्जते सोमलताचूर्णं भुञ्जानास्तान् वीक्ष्य विचार्य्य दूनवान् व्यथितोऽभूत्। न सोमेनोच्छिष्टो भवतीति श्रुतेः। इक्षुदण्डे तिले सोमे नोच्छिष्टं मनुरब्रवीत् इति स्मृतेश्च। सोमभक्षणे ऽनुच्छिष्टत्वादन्योन्यस्पर्शेऽपि पापाभावाद् दुःखितोऽभूदित्यर्थः॥ १९८॥

श्रुत्वेति। असौ कञ्चन जनं रजोदुष्टं धूलिनं श्रुत्वा निषिद्धस्त्रीरजःस्पर्शबुद्ध्या खरादिनिषिद्धरजःस्पर्शबुद्ध्या दृष्ट्वा वा स्वाश्रयाशया झटिति शीघ्रं तुष्टिं प्राप्नोत् प्राप्तः। ततोऽनन्तरं विचारावसरे पवनसम्बन्धि पवित्रञ्च यद्गोरजःस्थानं तत्र तेन वा ऽवस्था स्थितिर्यस्य तत्र वायतिष्ठते तं पश्यन् दुस्थो दूनोऽभवत्।

वारुणन्तु जलस्नानमापोहिष्ठेति मन्त्रतः।
वायव्यं गोरजःस्नानमाग्नेयं भस्मनोदितं॥
यत्तु सातपवर्षेण दिव्यं तदिति पञ्चधा।

इति मनुः॥ पावनस्नानस्य धर्म्मत्वात् दूनोऽभूदित्यर्थः। प्राप्नोत्। लङ्। प्राप्त इति वा पाठः॥ १९९॥

अधावदिति। अयं क्वापि यज्ञशालायां गृहे वा हन्यमानां गां वीक्ष्य स्वाश्रयाशया मुदा सन्तोषेणाधावत्। अनन्तरं तु

हृष्टवान् स द्विजं दृष्ट्वा नित्यनैमित्तिकत्यजं।
यजमानं निरूप्यैनं दूरं दीनमुखोऽद्रवत् ॥ २०१ ॥
आननन्द निरीक्ष्यायं पुरे तत्रात्मघातिनं।
सर्व्वस्वारस्य यज्वानमेनं दृष्ट्वाऽथ विव्यथे ॥ २०२ ॥

पुनस्तां गां अतिथिभ्योऽभ्यागमनार्थं हन्यमानां बुद्ध्वा मन्दो मूर्खोऽसौ दुःखवशान्मन्दं शनैर्न्यवर्त्तत परावृत्तः। क्षणमपि तत्र स्थातुमशक्तः सन् मन्दः शीघ्रं परावृत्त इति वा। महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेदिति स्मृतेः ॥ २०० ॥

हृष्टवानिति। स द्विजं नित्यानि सन्ध्यास्नानादीनि, नैमित्तिकानि ग्रहणस्नानादीनि त्यजति तमकुर्व्वाणं दृष्ट्वा हृष्टवान् स्वाश्रयाशया जहर्ष। अनन्तरमेनं यजमानं यागे कृतदीक्षं निरूप्य निश्चित्य निराशत्वाद्दीनमुखः सन् अद्रवत् तस्मात् प्रदेशात् दूरं पलायाञ्चक्रे। दीक्षितो न ददाति न जुहोतीत्यादिश्रुतेः। नित्यनैमित्तिककर्म्मत्यागस्य वैधत्वाद्दोषाभावात् ततोऽपि पलायित इत्यर्थः। नैमित्तिकः। आगतार्थे भवार्थे वा ठक् ॥ २०१ ॥

आननन्देति। अयं तत्र पुरे आत्मघातिनं कञ्चन निरीक्ष्याननन्द। सर्व्वत एवात्मानं गोपायेदिति विध्यतिक्रमात् पापकार्य्यं ममाश्रयः स्यादिति बुद्ध्वा जहर्षेत्यर्थः। अथ विचारणायां मत्यां एनमात्मघातिनं नाम्ना सर्व्वस्वारस्य यज्ञस्य यज्वानं यजमानं दृष्ट्वा ज्ञात्वा विव्यथे। आसन्नमरणो ह्यचिकित्स्यरोगार्त्तस्तत्राधिकारी। सोऽन्त्येष्टौ सर्व्वस्वाराख्ये यज्ञे आत्मानमेव पशु-

क्रतौ महाव्रते पश्यन् ब्रह्मचारीत्वरीरतं ।
जज्ञे यज्ञक्रियामज्ञः स भण्डाकाण्डताण्डवं ॥ २०३ ॥
यज्वभार्य्याश्वमेधाश्वलिङ्गालिङ्गिवराङ्गतां ।
दृष्ट्वाचष्ट स कर्त्तारं श्रुतेर्भण्डमपण्डितः ॥ २०४ ॥

मन्त्रैः संज्ञप्तं घातयित्वा यज्ञभागमर्पयतीति श्रुतिः । वैधत्वादात्मघाते दोषाभावात् व्यथित इत्यर्थः । आत्मघातिनं । ताच्छील्ये णिनिः ॥ २०२ ॥

क्रताविति । स महाव्रताख्ये क्रतौ ब्रह्मचारी इत्वरी च तयोरतं मैथुनं पश्यन् यज्ञक्रियां भण्डानामसभ्यभाषणादिव्यापारशीलानामकाण्डताण्डवमसमयोद्धतनृत्यमिव जज्ञे मेने । यतोऽज्ञो मूर्खः । भण्डा यथा बहुजनसमक्षं गुह्यादि प्रकाशयन्ति तथा द्विव बहुजनसमक्षमश्लीलव्यापारकरणात् यागकर्म्म भण्डव्यापारतुल्यमिति । यज्ञानः सर्व्वेऽप्यसभ्या इति मेने इत्यर्थः । महाव्रते ब्रह्मचारिपुंश्चल्योः सम्प्रवाद इत्युपनिषत् । एति तच्छीलेत्वरी स्वैरिणी, इणनशेति (पा० ३।२।१६३) क्वरपि तुकिच, टिड्ढाणञीति (पा० ४।१।१५) ङीप् ॥ २०३ ॥

यज्वेति । स यज्वनो यजमानस्य भार्य्याया अश्वमेधाख्यस्य यज्ञस्याश्वस्य लिङ्गमालिङ्गत्येवंशीलं वराङ्गं गुह्यं यस्यास्तस्या भावस्तत्ता तां दृष्ट्वा श्रुतेर्वेदस्य कर्त्तारं भण्डमाचष्ट अकथयत् द्वापरस्थाय इत्यर्थः । उन्मत्तत्वादात्मानं प्रत्येव वा । यतोऽपण्डितः शास्त्रानुसारिपण्डितबुद्धिरहितः ।

अथ भीमजया जुष्टं व्यलोकत कलिर्नलं।
दुष्टदृग्भिर्दुरालोकं प्रभयेव प्रभाप्रभुं ॥ २०५ ॥
तयोः सौहार्द्दसान्द्रत्वं पश्यन् शल्यमिवानशे।
मर्मच्छेदमिवानर्च्छ स तन्नर्मोक्तिभिर्मिथः ॥ २०६ ॥

पुराणं मानवो धर्म्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हातव्यानि हेतुभिः ॥

इति राजाज्ञावन्निर्विचारं वेदार्थोऽनुष्ठेयः। अश्वमेधप्रकरणे ऽश्वस्य शिश्नं महिष्या उपस्थे निधत्ते इत्यादि श्रुतेः कर्त्ता भण्ड इति श्रुतिकर्त्तुर्भण्डत्वाभिधानान्मूर्खः ॥ २०४ ॥

अथेति। अथैवं पुरपरिभ्रमवशादनन्तरं कलिर्भीमजया भैम्या जुष्टं प्रीत्या सेवितं नलं व्यलोकत। कमिव। प्रभया संज्ञादेव्या ऽथवात्मश्चतेजोजुष्टं प्रभाप्रभुं सूर्य्यमिव। किम्भूतमुभयं। दुष्टा मत्सरादिदोषोपहता दृग्बुद्धिर्येषां तैः पापलोकैर्दुरालोकं। पुण्यश्लोकत्वात् पतिव्रतया तया च युक्तत्वात् कलिप्रवृत्तिभिः सुखेन द्रष्टुमशक्यं, काचकामलादिदोषदृग्भिर्दुर्दर्शं च। प्रकृष्टाभा कायकान्तिर्यस्या इति भैमीविशेषणञ्च प्रकृष्टया कायकान्त्या यायिभिर्दुरालोकं खलु, तद्योगे च न लोकेति (पा० २।३।६८) षष्ठीनिषेधाद् दुष्टदृग्भिरिति तृतीया ॥ २०५ ॥

तयोरिति। स तयोर्भैमीनलयोः सौहार्द्दसान्द्रत्वं अन्योन्यानुरागोत्कर्षं पश्यन् शल्यमिव हृदि नाराचव्यथमिवानशे प्राप। तत्तुल्यदुःखोऽभूदित्यर्थः। तथा मिथोऽन्योन्यं तथा नर्मोक्तिभिः

अमर्षादात्मनो दोषात्तयोस्तेजस्वितागुणात् ।
स्प्रष्टुं दृशाप्यनीशस्तौ तस्मादप्यचलत् कलिः ॥ २०७ ॥
अगच्छदाश्रयान्वेषी नलद्वेषी स निश्वसन् ।
अभिरामं गृहारामं तस्य रामसमश्रियः ॥ २०८ ॥

क्रीडाकमेोले प्रीत्यालिङ्गनचुम्बनादिभिरनुभावे. कृत्वा मर्मच्छेदमिव प्राणहरणशरीरावयवकर्त्तनमिव आनर्च्छ प्राप। सौहार्दसाङ्कल्यस्य कारणत्वादालिङ्गनादिनर्मणस्तैकार्थत्वान्न पौनरुक्त्याशङ्का । सौहार्दं । युवादित्वाद्भावे अणि, हृद्भग (पा० ७।३। १९) इत्युभयपदवृद्धिः ॥ २०६ ॥

अमर्षादिति । कलि अमर्षात् भैमीनलप्रीतिनिर्माणसहनशीलत्वरूपाद्दोषात्, तथा आत्मनो महापातकादिरूपाद्दोषाद्धार्मिकाश्रयणाशक्ते', तथा तयोर्भैमीनलयोस्तेजस्वितागुणात् सौन्दर्यातिशयात् चात्रतेजसा धर्षणीयत्वरूपाद्गुणादित्येव हेतुत्रयात् तौ भैमीनलौ न परं मनसा किं दृशापि न पुनरङ्गेनापि स्प्रष्टुमनीशोऽसमर्थं किं पुनर्हस्तादिना। एवम्भूतौ यतोऽतस्तस्मान्नलावासात् प्रासादादपि सकाशात् कलिर्निर्गत.। एवंविधौ तौ दृष्ट्वा तत्रापि प्रवेष्टुमशक्तस्ततोऽपि प्रस्थित इत्यर्थ । अन्योऽपि मलिनस्तेजस्विन दृशा वीक्षितुमशक्तस्तत. पलायते ॥ २०७ ॥

अगच्छदिति । नलद्वेषी नलद्वेषपरः अत एव तत्पराभवार्थं आश्रयान्वेषी निवास मृगयमाण. कुत्रचिदपि तदलाभादु.खादमर्षेण च निश्वसन् स कलिः रामेण श्रीरामेण समा तुल्या श्री: शोभा सम्पद् यस्य तस्य नलस्याभिरामं गृहादिस-

रक्षिलक्षवृतत्वेन बाधनं न तपोधनैः।
मेने मानी मनाक् तत्र स्वानुकूलं कलिः किल ॥ २०९ ॥

म्रद्धिमत्त्वाद्रमणीयं गृहारामं प्रासादसमीपवर्त्ति क्रीडावनमगच्छत् गतवान्। समीपे स्थितो क्रियमाणायां नलद्रोहविचारः सुकर इति गृहारामं प्राप्तवानित्यर्थः। श्रीरामसाम्ये नलस्य पावित्र्यं सौन्दर्यं सम्पदाधिक्यं भाविराज्यपरित्यागश्चेति सूचितं। तदानीं रामस्य भावित्वे कव्यपेक्षया भूतत्वात् प्रवाहस्थागादितया वा भूतत्वादुपमा युक्तैवेति ज्ञेयं ॥ २०८ ॥

रक्षीति। कलिः तत्र पुरे रक्षिणां लक्षं सङ्ख्येन यद्वृतत्वं परिवेष्टितत्वं तेन हेतुना प्रवेष्टुमशक्यत्वात्तपोधनैः कृत्वा न बाधयतीति न बाधनमेवम्भूतं मेने विशेषणबलाद्विशेष्याक्षेपात् तमारामं स्वहितं मेन इत्यर्थः। यतो मानी अभिमानवान्। नलपराभवार्थं तत्रैव निवासवाञ्छामदधदित्यर्थः। किल प्रसिद्धौ। रक्षिलक्षवृततत्वेनैव बाधकं न पुनस्तपोधनैर्बाधकमतस्तत्र पुरे तमाराममेव मनाक् स्वहितं मेने इत्यर्थः। रक्षकबाधे सत्यपि अदृश्यतयापि स्वस्य प्रवेष्टुं शक्यत्वान्न तु तपोधन इति मनागित्युक्तं। एवं सङ्कटे किमिति न्यवात्सीदित्यत आह। यतो मानी। अभिमानवान् साधनीयेऽर्थे सङ्कटमपि मानिनः सहन्त इत्यर्थ इति वा। रक्षकवृतत्वेन मुनिकर्तृकं बाधनं मनागपि तत्रारामे नासीति तं स्वानुकूलं तापसानां तत्र प्रवेशाभावात् तापसनिमित्तस्वबाधारहितं अत एव मनागीषत् स्वानुकूलं स्वस्मै हितमेवंविधं मेन इति वा ॥ २०९ ॥

दलपुष्पफलैर्देवद्विजपूजाभिसन्धिना ।
स नलेनार्जितान् प्राप तत्र नाक्रमितुं द्रुमान् ॥ २१० ॥
अथ सर्व्वोद्भिदासत्तिपूरणाय स रोपितं ।
विभीतकं ददर्शैकं कुटं धर्मेऽप्यकर्म्मठं ॥ २११ ॥
स तं नैषधसौधस्य निकटं निष्कुटध्वजं ।
बह्व मेने निजं तस्मिन् कलिरालम्बनं वने ॥ २१२ ॥

दलेति । स कलिः तत्रोद्याने वने दलैः पत्रैः पुष्पैः फलैश्च कृत्वा देवानां अतिथीनाञ्च पूजा तद्विषयेणाभिसन्धिनाऽऽशयेन कृत्वा देवद्विजपूजैवाभिसन्धिराशयो यस्यैवंविधेन वा, दलादिभिर्देवपूजां कर्त्तुकामेन नलेनार्जितानारोपितानाद्यादिद्रुमान् आक्रमितुं आरोढुमाश्रयितुञ्च न प्राप । तेषां धर्म्मोपयोगित्वात् स्वस्य च पापरूपत्वात् तानाश्रयितुं नाशकदित्यर्थः ॥ २१० ॥

अथेति । अथ स कलिः धर्म्मे धर्म्मकार्य्ये विषयेऽकर्म्मठमकर्म्मशूरमपि पित्रादीनां देवाद्यनुपयोगाद्धर्म्मकार्य्यानर्हमपि सर्व्वेषामुद्भिदां वृक्षाणामासत्तेः सान्निध्यस्य पूरणाय वृक्षलतागुल्मादिजातिमात्रास्तीति कीर्त्तिपूर्त्तिमात्राय तत्रोद्याने नलेन आरोपितमेकं सर्व्ववृक्षासत्तिपूरणस्यैकेनैव कृतत्वादेकसंख्यं विभीतकं कुटं वृक्षं ददर्श । अनोकहः कुटः शाल इत्यमरः । कर्म्मठः । कर्म्मणि घटत इति कर्म्मणि घटोऽठच् (पा॰ ५।२।३५) । कर्म्मशूरस्तु कर्म्मठः । उद्भिदस्तरुगुल्माद्या इत्यमरः ॥ २११ ॥

स इति । तस्मिन् वने नैषधसौधस्य निकटं समीपवर्त्तिनं

निष्पदस्य कलेस्तत्र स्थानदानाद्बिभीतकः।
कलिद्रुमः परं नासीदासीत् कल्पद्रुमोऽपि सः॥ २१३॥
ददौ पदेन धर्मस्य स्थातुमेकेन यत् कलिः।
एकः सोऽपि तदा तस्य पदं मन्येऽमिलत्ततः॥ २१४॥

निष्कुटस्य गृहारामस्य ध्वजं लाञ्छनभूतं अथ चोच्चोच्चतरत्वात् ध्वजमिव तदर्थस्थित्या नलदर्शनवशात्तदीयदोषविचारोपायभूतं तं बिभीतकं निजं स्वीयमालम्बनमाधारं बहु मेने। गृहारामास्तु निष्कुटा इत्यमरः॥ २१२॥

निष्पदस्येति। तत्र पुरे वने च निष्पदस्याश्रयरहितस्य कलेः स्थानदानात् स्वेनैव तदाधारभूतत्वात् स बिभीतकः केवलं निवासभूतत्वात् कलिद्रुमः कलिसम्बन्धी द्रुमः परं केवलमासीदिति न किन्तु कलिं प्रत्यभिलाषपूरणात् कल्पद्रुमोऽप्यासीत्। अन्योऽपि निराश्रयस्याश्रयदानात् कल्पद्रुमत्वेन व्यपदिश्यते। भूतावासः कलिद्रुम इत्यमरः॥ २१३॥

पापिना कलिना बिभीतकं स्थानं प्राप्तमित्यत्र हेतुमुत्प्रेक्षते ददाविति। यद् यस्माद्धेतोः कलिः प्रवाहानादितयाऽतीते कलियुगसमये धर्मस्यैकेन पदेन चतुर्थांशेन पदं स्थानं ददौ तस्मात् तदा नलराज्यसमये कृतयुगे स बिभीतकोऽपि एक एव तस्य कलेः पदं चरणोऽथ च स्थानसमभिमत् समजात इत्यहं मन्ये। कृतं कर्म युज्यते इति न्यायेन कालान्तरे यावत् दत्तं

उड्डिदिरचितावासः कपोतादिव तत्र सः।
राज्ञः साग्नेर्द्विजात्तस्मात् सन्त्रासं प्राप दीक्षितात्॥ २१५॥

तावदेव तदानीं तेन लब्धमित्यहं मन्य इत्युत्प्रेक्षा। धर्म्मस्य सम्बन्धमात्रविवक्षया षष्ठी ॥ २१४ ॥

उड्डिदिति। तत्रोद्याने उड्डिदि वृक्षे विभीतके विरचित आवासः स्थितिर्येन स कलिः साग्नेरग्निहोत्रवतो द्विजात् चत्रियात् तथा दीक्षितात् स्वीकृताग्निहोत्रादियागदीक्षादस्माद्राज्ञः अभिषेकादिगुणयुक्तात् नलात् सकाशात् सम्यक्त्रासं महाशापनिग्रहं प्राप। राज्ञो द्विजादित्येताभ्यां स्वाभाविकं निग्रहे सामर्थ्यं सूचितं। साग्नेर्दीक्षितादित्येताभ्याञ्च तपोजनितं शापे सामर्थ्यं सूचितं। एवंविधोऽयं समीपस्थितं मां निग्रहेण शास्यति शापं दास्यतीत्यन्तर्महद्भयं प्रापेत्यर्थः। अग्निहोत्रिणो नलस्य सम्बन्धिनः क्रतयज्ञदीक्षात् तस्मादतिप्रसिद्धाद् द्विजात् ब्राह्मणाद् गौतमाख्यात् पुरोधसः सकाशात् भयं प्राप। नलाग्निहोत्रादिपरिचर्य्यार्थं तत्र वर्त्तमानात् स्वयमग्निहोत्रादिदीक्षायुक्ताच्च गौतमात् पुरोधसः सकाशाद्भीत इत्यर्थ इति वा। कस्मादिव कपोतादिव। यथाऽग्निसहितादङ्गारभक्षिणः तथा दीक्षितात् कपोतनाम्नो द्विजात् पक्षिणः सकाशात् वृक्षे विरचितावासः काकादिः पक्षी पुरुषो वा वृक्षारूढो वृक्षाधःस्थायी वा भयं प्रापत् पूर्व्वं कदाचित्तथेत्युपमा। स यथा प्राप्नोति तथेत्यर्थः। अग्निः कपोतजठरमन्तःप्रविष्टोऽतएव तद्भक्षिता

विभीतकमधिष्ठाय तथाभूतेन तिष्ठता।
तेन भीमभुवोऽभीकः स राजर्षिरधर्षि न॥ २१६॥

पाषाणकणिकापि जीर्यत इत्येतिह्यं। साग्निरङ्गारभक्षिणः। कपोतविशेषो ह्यङ्गारान् भक्षयति। वह्निदा तृणकाष्ठादिना निर्म्मितगृहः पुरुषोऽग्न्युद्गारिनेत्रात् खोपवेशनमात्रेण गृहदाहाद्यनिष्टसूचकात् गृहोपरि विलोकनात् कपोतो घूलूकपक्षिणः सकाशाद्यथा भयं प्राप्नोति तथाऽसावपि प्राप्तकपोतो हि गृहं प्रविष्टोऽनिष्टसूचकः। एवमद्भुतकर्मणोऽपि स्थूलोच्चदृष्टादिरोहिणो दूरात् कपोतात्तद्गृहवासी पक्षी नरो वा स्वस्यापि भक्षणशङ्कया शाखापतनशङ्कया वा यथा बिभेति तथेत्यर्थः। एवं यथामति व्याख्यातव्यं॥ २१५॥

विभीतकमिति। विभीतकमधिष्ठायाश्रित्य तथाभूतेन तिष्ठता तस्य धर्म्मोपयोगाभावात् भयराहित्येन स्थितवता अथ च तादृशनलदर्शनात् पूर्व्वोक्तप्रकारेण बिभ्यता अत्यन्तास्थिरेण कलिना भीमभुवोऽभीकः भैम्याः कामुकः स राजा चासाद्यपि च राजत्वेऽपि धर्म्मप्रधानत्वान्मुनितुल्यो नलो नाधर्षि न पराभूतः। अपराभवे राजर्षित्वमेव हेतुः। अथ च विभीतकतुल्यं तरुमाश्रित्य तिष्ठता तथाऽतिमहता भूतेन भूतत्वं प्राप्तेन केनचित् प्रेतेन पिशाचेन भीमाया भयानकाया भूमेः रणभूमेर्रुद्रभूमेर्वा हेतोरभीको भयरहितो राजर्षिर्धार्म्मिको न पराभूयत इत्युपितं। भीमां भूमिमनादृत्य निर्भय इत्यर्थः। अनादरे षष्ठी॥ २१६॥

तमालम्बनमासाद्य वैदर्भीनिषधेशयोः ।
कलुषं कलिरन्विष्यन्नवात्सीद्वत्सरान् बहून् ॥ २१७ ॥
यथासीत् कानने तत्र विनिद्रकलिका लता ।
तथा नलच्छलासक्तिविनिद्रकलिकालता ॥ २१८ ॥
दोषं नलस्य जिज्ञासुर्बभ्राम द्वापरः क्षितौ ।
नदोषः कोऽपि लोकस्य मुखेऽस्तीति दुराशया ॥ २१९ ॥

तमिति। कलिः तं बिभीतकं आलम्बनमाश्रयमासाद्य प्राप्य वैदर्भीनिषधेशयोः कलुषं पापाचरणमन्विष्यन् गवेषयितुमित्यर्थः, बहून् वत्सरानवात्सीत् दोषसंसर्गेन विना तयोः पराभवेऽशक्तत्वाद्दोषपरीक्षार्थं बहुकालं तत्रैव स्थितवानित्यर्थः। अन्विष्यन्। क्षितौ शता। अवात्सीत्। वसेर्लुङि, सिचि, वद व्रजेति (पा० ७।२।३) वृद्धौ, सस्यार्द्धधातुक इति(कौ०।भा०।पत्रे१२०।पंक्तिः ८।वा०) तत्वम्। वत्सरान्। अत्यन्तसंयोगे द्वितीया ॥ २१७॥

यथेति। तत्र कानने तस्मिन्नुद्याने यथा येन प्रकारेण विनिद्रकलिका विकसितकोरका लता वल्ली आसीत् तथा तेन प्रकारेण नलस्य छले आसक्तिरभिनिवेशस्तद्वशाद्विगतनिद्रो जागरूकः सावधानः कलिलक्षणः कालः समयो यत्र तद्भावस्तत्ता सापि तत्र वने आसीत्। यदा विकसितकोरकवल्लीसम्बन्धस्तस्योद्यानस्य यथाभूत् तथा सदा कलिसम्बन्धोऽप्यभूदित्येतावन्मात्रेण श्लेषमात्रेण चौपम्यं। नलच्छलनार्थं नलदोषान्वेषणार्थञ्च जागरूकः स कलिस्तत्रावात्सीदित्यर्थः ॥ २१८ ॥

एवं कलेरवस्थानं निरूप्य द्वापरस्यावस्थानमाह। दोषमिति।

अमुष्मिन्नारामे सततनिपतद्दोहदतया
प्रसूनैरुन्निद्रैरनिशमसृतांशुप्रतिभटे।
असौ बद्धालम्बः कलिरजनि कादम्बविहग-
च्छद् च्छायाभ्यङ्गोचितरुचितया लाञ्छनमृगः॥ २२०॥

लोकापवादरूपं अभिशस्तिरूपं वा नलस्य दोषं जिज्ञासुर्दोपर' इत्यघटमानया दुराशया क्षितौ बभ्राम। इति किं। लोकस्य मुखे जनवार्त्तायामदोषो दोषरहितः कोऽपि नरो नास्ति सर्व्वो जनो यं निर्दोषमाह तादृशः पुरुष एव नास्तीति नलस्यापि किञ्चिद्दोषं कोऽपि वदिष्यतीति। न दोष इति पाठे लोकोक्ताबल्पोऽपि दोषो नास्ति अपि तु प्रायेण भविष्यतीति दुराशयेति काक्वा सम्भावनापरत्वेन व्याख्येयम्। दोषं। न लोकेति (पा०२।३।६८) षष्ठीनिषेधः॥ २१९॥

अमुष्मिन्निति। असौ कलिः श्यामपक्षहंसजातीयाः कादम्बविहगाः कलहंसाख्यपक्षिविशेषाः तेषां छदाः पक्षाः तेषां छायायाः कान्तेरभ्यङ्गे उचिता योग्या तैलाभ्यङ्गेनैव स्वसंस्पर्शमात्रेण स्नैग्ध्यातिशयकारिणी श्यामतरा रुचिः कान्तिर्यस्य तस्य भावस्तत्ता तया कृष्णवर्णतया वनचन्द्रे लाञ्छनमृगोऽजनि कलङ्कमृगोऽभूत्। किम्भूतः। सततं सदा निपतन् निक्षिप्यमाणो धूमादिर्दोहदो यत्र तस्य भावस्तत्ता तया अनिशं सदा उन्निद्रैर्विकसितैः प्रसूनैर्मालत्यादिसितपुष्पैः कृत्वा उज्ज्वलत्वादानन्ददायित्वाच्चामृतांशोश्चन्द्रस्य प्रतिभटे प्रतिस्पर्द्धिनि चन्द्रतुल्येऽमु-

स्फारे तादृशि वैरसेनिनगरे पुण्यैः प्रजानां घनं
विघ्नं लब्धवतश्चिरादुपनतिस्तस्मिन् किलासीत् कलेः।

स्मिन् पूर्व्वोक्ते आरामे नलोद्याने बद्धः कृत आलम्बो वासो येन सः। चन्द्रे हि कलङ्केन भवितव्यं तत्स्थाने कलिरेवाभूदिति। एतेन निर्दोषे नलोद्याने कलिरेव दूषकोऽभूदित्युक्तम्। तत्र न्यवात्सीदित्यर्थः। पुष्पफलानामाकालिकसमृद्धये वृक्षेषु वृक्षायुर्वेदोक्तो धूपादिदोहदः क्रियते, तथा चम्पके पिण्याकादिजलक्षेपः, वकुले सुन्दरीगण्डूषजलमदिरासेकः, रक्ताशोके च तरुणीचरणप्रताडनमित्यादिः ॥ २२० ॥

स्फार इति। स्फारे विशालतरे तादृशि उक्तप्रकारेण धर्म्मबहुले स्फारत्वेऽपि सर्व्वत्र धर्म्मपूर्णे वैरसेनिर्नलस्तस्य नगरे प्रजानां पुण्यैर्हेतुभिर्घनं भूयांसं विघ्नं लब्धवतः प्राप्तवतो चिराश्रयस्य कलेस्तस्मिन् नलोद्याने चिरात् बहुकालं नलदोषगवेषणार्थं उपनतिरवस्थितिः किलाभूत्। किलेति पुराणादौ श्रूयत इत्यर्थः। प्रजानां पुण्यैः स्फारे व्याप्त इत्यर्थ इति वा हेतुगर्भविशेषणम्। एतस्मिन्नन्तरेऽवसरे पुनरन्योन्ययोगयमेलनादन्तर्मनसि अमितानन्दः प्राप्तनिःसीमहर्षः स प्रसिद्धप्रभावः स्मरो भैमीनलौ आराद्धुं सेवितुं सुतरां पीडयितुं वा धनुः श्रुतिशिखा कर्णोर्द्धदेशस्तां वन्दारुः स्पर्शिनी चूडा अग्रभागो यस्य एवंविधमाकर्णपूर्णं व्यधित चकार। भैमीनलौ नगरं प्राप्तौ सुरेषु स्वर्गतेषु कलौ च वनालम्बिनि सति इतरेतरानुरागा-

एतस्मिन् पुनरन्तरेऽन्तरमिलानन्दः स भैमीनला-
वाराद्धुं व्यधित स्मरः श्रुतिशिखावन्द्यास्त्रचूडं धनुः ॥ २२१ ॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
यातः सप्तदशः स्वसुः सुसदृशि छन्दप्रशस्तेर्महा-
काव्ये तद्भुवि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ २२२ ॥
समाप्तः सप्तदशः सर्गः।

तिशयेन चिरविरहातिसस्पृहौ स्मराराधनं चक्रतुरिति भावः। अनेनोत्तरसर्गे सम्भोगारम्भवर्णनात् सङ्गतिः सूचिता। कलिकर्तृकपराभवस्य भविष्यत्त्वान्नायकापकर्षस्यावर्णनीयत्वाच्च स नोक्तः ॥ २२१ ॥

श्रीहर्षमिति। पूर्वार्द्धः पूर्ववत्। एककर्तृकत्वात् स्वसृभगिन्याः छन्दस्य राजविशेषस्य प्रशस्तेर्वर्णनात् ग्रन्थस्य सुसदृशि तुल्ये तद्भुवि श्रीहर्षरचिते सप्तदशानां पूरणो निसर्गोज्ज्वलः स्वभावसुन्दरः सर्गः समाप्तः। छन्दप्रशस्तिरपि ग्रन्थो मया कृत इति सूचितं। सोदर्याश्च तुल्या भवन्ति। छन्दःप्रशस्तेरिति पाठे छन्दोग्रन्थक्रमस्वरूपनिरूपणापरस्य ग्रन्थस्येत्यर्थः। सप्तदश इति तस्य पूरण इति(पा० ५।२।४८) डट्। तद्भुवि। भाषितपुंस्कम् ॥ २२२ ॥

इति मेदरकरोपनामकनरसिंहपण्डितात्मजनारायणविरचिते नैषधीयप्रकाशे सप्तदशः सर्गः ॥ १७ ॥

---

## उत्तरनैषधचरिते।

### अष्टादशः सर्गः।

---

श्रीलक्ष्मीन्टसिंहो जयत.।

सोऽयमित्थमथ भीमनन्दिनीं
दारसारमधिगम्य नैषधः।
तां तृतीयपुरुषार्थवारिधेः
पारलम्भनतरीमरीरमत्॥ १॥

सोऽयमिति। सर्गसङ्गतिरुक्तैव। सोऽयमुक्तसौन्दर्यादिगुणप्रभावो नलः, इत्यमुक्तप्रकारेण त्रैलोक्यनायकसमक्षं दारसारं स्त्रीरत्नभूतां तामिन्द्रादिभिरप्यभिलष्यमाणां भीमनन्दिनीमधिगम्य तृतीयपुरुषार्थवारिधेः कामरूपदुरवगाहजलधेः सम्बन्धिनीं पारलम्भनतरीं परतीरप्रापणनौकारूपां तां भैमीं अरीरमत् रमयामास। तादृश्या विना कामपुरुषार्थपारं कामशास्त्रोक्तनानारतपारं न प्राप्यत इत्यनेन सौन्दर्यानुरागातिशयः सूचितः। अन्यापि तरी वारिधेः पारं प्रापयति। तारणतरीमित्यपि पाठः। अरीरमत्। रमेर्ण्यन्तालुङि चङि सन्वद्भावादित्वादि:॥ १॥

दिमपे मुखतः कृत्वा नीतं वितीर्य सरोजिनी-
मधुरसमुपोयोगे जाया नवान्नमचीकरन् ॥ २७ ॥
मिहिरकिरणाभोगम्भोक्तुं प्रवृत्ततया पुरः
कलितचुलुकापोशानस्य प्रचार्थमियं किमु।

कमलिनीमकरन्दरूपं रसं आस्वाद्यं वस्तु उपोयोगे प्रभातकाले वितीर्य दत्त्वा नवान्नं नूतनमपूर्व्वमन्नं च प्रेमभरात् स्वयमभुक्तमनुच्छिष्टमेव जायां मधुकर्यां इत्यर्थः। अचीकरन् कारयामासुः। अविकसितेऽतिकठिने कमले अबलत्वात् प्रवेष्टुमशक्ता एता इति कृत्वा पौरुषेण स्वयं तत्र प्रविश्य मकरन्दं मुखे धृत्वा समानीय मधुकरीभ्यो दत्वा ताभिस्तद्भोजयामासुरित्यर्थः। किञ्चिदासन्नसौरप्रकाशत्वात् कमलानि विकासोन्मुखानि जातानीति भावः। अन्येनापि प्रातः शुभयोगेऽन्नप्राशनं कार्य्यते। उपायोग इति पाठो विभावनीयः। मक्षमुधाचगार्थरोति चेति हलायुधः। उपायोगे अर्थाद्दिनेन सद्योगे प्रातरित्यर्थः। निरिस्वराः। दृणमशजो (पा॰ ३।२।१६३) तिकरप्। मुखतः कृत्वेति स्वाङ्गेतमप्रत्यय इति (पा॰ ३।४।६१) क्त्वः क्त्वा। जायां इकोरिति (पा॰ १।४।५३) कर्मत्वं। जाया इत्यपि पाठः ॥ २७ ॥

मिहिरेति॥ सरोजिनी कमलिनी दिनोदये प्रातःकाले प्राक् अन्यदलापेक्षया पूर्व्वविकसितैकेन दलेन पचेणोपलक्षिता साक्षात्कपुरात्मनः पश्यतो जनस्य इति मतिं जनयति। इति किं इयं मिहिरस्य सूर्य्यस्य किरणानां आभोगं परिपूर्णतां

इति विकसितेनैकेन प्राग्दलेन सरोजिनी
जनयति मतिं साक्षात्कर्तुर्जनस्य दिनोदये ॥ २८ ॥
नटतरुखगश्रेणीसाराविणैरिव साम्प्रतं
सरसि विगलन्निद्रामुद्राऽजनिष्ट सरोजिनी ।
अधरसुधया मध्ये मध्ये वधूमुखलब्धया
धयति मधुपः स्वादुङ्कारं मधूनि सरोरुहां ॥ २९ ॥

भोक्तुं अनुभवितुमथ च भवयितुं प्रवृत्ततया कृतप्रारम्भतया हेतुभूतया पुनर्भोजनादावन्नायामृतकरणार्थमापोशानस्योपस्मरणमन्त्रोदकस्य ग्रहार्थं कलितो बद्धमुकुलः प्रकृतिविशेषेः यया एवम्भूता किमु। भोजने प्रवृत्तेनापोशनक्रियापूर्वमादावन्ते च भोक्तव्यमिति स्मृतेः। अपोशानग्रहीता करकमले एकां कनिष्ठामङ्गुलिं प्रसारयति अन्याश्च संकोचयतीति संप्रदायः। कमलविकाससमयो जातस्तस्माद्बुध्यस्वेति भावः ॥ २८ ॥

नटेति ॥ साम्प्रतं सरसि सरोजिनी सरस्तटे तरुषु वर्त्तमानानां खगश्रेणीनां सारावैर्मिलितैः कलकलशब्दैरिव विगलन्ती भ्रश्यन्ती निद्रेव मुद्रा कोरकबन्धो यस्याः, यद्वा विगलन्ती निद्रायाः सङ्कोचस्य मुद्रा भङ्गी यस्याः सा त्यक्तनिद्रोन्मीलितकमललोचनेवाजनिष्ट जाता। कलकलेन च निद्रितस्य निद्रा अपयाति। तथा मधुपो भ्रमरः सरोरुहां मधूनि कमलमकरन्दान् वध्वाः भ्रमर्याः मुखात् लब्धयाऽधरसुधया ओष्ठगतपीयूषेण मध्ये मध्ये स्वादुङ्कारं स्वादूनि माधुर्यातिशय-

गतचरदिनस्यायुर्भ्रंशे दयोदयसङ्कुच-
त्कमलमुकुलक्रोडान्नीडप्रवेशमुपेयुषां ।
इह मधुलिहां भिन्नेष्वम्भोरुहेषु समायतां
सह सहचरैरालोकयन्तेऽधुना मधुपारणाः ॥ ३० ॥

पुष्पाणि कृत्वा धयति पिबति । कमलानि विकसितानि भ्रमराश्च तन्मधूनि भ्रमर्य्यश्च पिबन्तीत्यर्थः । मधुप इति माभिप्रायं मद्यपा अप्येतादृशा भवन्ति । समन्ताद्रावाः सांराविणानि आभिविधौ भाव (पा०३।३।४४) इतिनीनुणं तात् स्वार्थे अणिनुण इत्यण् (पा०५।४।१५)। स्वादुङ्कारं स्वादुमिणमुल् (पा०३।४।२६)। मान्तत्वं पूर्व्वस्य स्वादुमीति निर्देशात् ॥ २९ ॥

गतेति ॥ गतचरदिनस्यातीतचरदिनस्यायुर्भ्रंशेऽवसानकाले सायंसमये दयाया उदयादिव सङ्कुचतां स्वानां कमलानां मुकुलानि कलिकाः तेषां क्रोडान्मध्यात् नीडेषु प्रवेशं उपेयुषां भ्रातां मकरन्दास्वादलाम्पट्यात् सायं सन्ध्यासमयेऽपि कमलेषु स्थितानामनन्तरञ्च तेषु सङ्कुचितेषु बहिर्निर्गन्तुमशक्तत्वात् संकुचत्कमलमर्मरूपेषु नीडेषु स्थितानामिति यावत् । क्रोडमिति पाठे मुकुलविशिष्टकमलक्रोडमेव नीडप्रवेशं गतानां । अनन्तरञ्च रात्रावतीतायां इह प्रातःसन्ध्यासमये भिन्नेषु ईषद्विकसितेषु अम्भोरुहेषु समायतां पूर्व्वदिशामसङ्कुचितेषु ईषदुन्मिषितेषु सत्सु सुखेन निर्गन्तुं प्रकाश-

न्तेभ्यः सकाशादर्थान्नवीनकमलानि उद्दिश्य समागच्छतां मधुलिहां अधुना सहचरैः पूर्व्वदिनान्ते कमलसङ्कोचात् पूर्व्वमेव कमलकोडान्निर्गतैः सहचरैः सहचरीभिश्च मित्रकलत्रादिभिः सह मधुना मकरन्देन क्लता पारणाः उपोषितसम्बन्धीनि भोजनानि आलोक्यन्ते लोकैरिति शेषः। ये रात्रौ कमलबद्धास्ते तत्र मकरन्दाभावान्निर्वन्धवशाच्च क्लतोपवासाः। अनिवद्धाःसहचरास्तु रात्रौ निद्रावशात् तद्वियोगाद्धि क्लतोपवासाः अतः सर्व्वेऽपि प्रातर्मिलित्वा विकसितकमलमधुना पारणां कुर्व्वन्तीत्यर्थः। पूर्व्वदिनान्ते सङ्कुचितानि कमलानि प्रातः पुनः किञ्चिद्विकसितानीति प्रसिद्धिः। भूयान् समयो जातः तस्मादुद्बुध्यस्वेत्यर्थः। अन्योऽपि कस्मिंश्चिम्मत्रे(?)यस्मि न्मृते बन्ध्यादौ वा निबद्धे क्लपया सङ्कुचितहर्षा भवन्ति। केचिच्च सहत्युपरते सति उपवासङ्कुर्वाणा गृहमध्यं प्रविश्य दिनान्तरे ज्ञातिभिः सह भुञ्जते। ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभमिति भावार्थः सहचरपदेन सूचितः। निगडबद्धोऽपि कारागृहेषु भिक्षैर्मोचितः समागच्छन् सन् स्वस्य बन्धनवशान्निराहारैर्ज्ञातिभिः सह मधुरैरन्नैः पारणां करोति। क्रोडादीनि यथायथं हेतौ ल्यब्लोपे-पञ्चमी। समायतां दृशः भता। सहचरैः पुमान् स्त्रियेत्येकशेषः (पा०१।२।६७) ॥ २० ॥

तिमिरविरहात्पाण्डूयन्ते दिशः कृशतारकाः
कमलहसितैः श्वेतीवोन्नीयते सरसी न का।
शरणमिलितध्वान्तध्वंसिप्रभादरधारणा-
द्गगनशिखरं नीलत्येकं निजैरयशोभरैः ॥ ३१ ॥

तिमिरेति ॥ प्राच्यादयो दिशास्तिमिरस्य विरहान्नाशात् पाण्डूयन्ते शुभ्रा इवाचरन्ति, अतएव कृशाः अप्रकाशाः किञ्चिद्दृश्यास्तारकाः कतिपयनक्षत्राणि यासु एवं विधाः। अन्यापि प्रियवियोगात् पाण्डुरनिमग्नातिकृशनेत्रकनीनिका भवति। तथा का सरसी कमलानां हसितैर्विकासैः कृत्वा श्वेतीव नोन्नीयते न तर्क्यते, अपि तु सर्वा अपि सरस्यस्तैः शुभ्रायन्ते। अन्यापि प्रियप्राप्तेः कमलतुल्यमुखहसितैः श्वेता भवति। एकं गगनशिखरं गगनमध्यभागः शरणार्थं स्वपरित्राणार्थं गगनं प्रति मिलितस्य प्रत्यागतस्य ध्वान्तस्य ध्वंसिनी विनाशिनी या सूर्यप्रभा तस्यामादरधारणाद्धेतोः निजैरयशोभरैः स्वीयैरकीर्त्तिसमूहैः नीलति श्याम इवाचरति, अन्योऽपि शरणागतं परित्यज्य तद्वैरिणामादरेणाङ्गीकुर्वन् दुर्यशसा श्यामो भवति। दिशः सरांसि च श्वेतं। गगनस्य मध्यभागस्य शार्वरशोभापगमात् निजनीलिमानं प्राप्तमिति भावः। पाण्डूयन्ते उपमानादाचारेऽर्थे कर्त्तुः क्यङिति (पा० ३।१।११) क्यङ्। अकृत् सार्वधातुकयोरिति (पा० ७।४।२५) दीर्घः। वर्णवाचिनः श्वेतशब्दात् वर्णादनुदात्तादिति (पा० ४।१।३९) ङीप् तस्य नश्च। नीलति नील वर्णे इति धातुः। आचारक्विबन्तान्नीलशब्दाद्वा सिद्धम् ॥ ३१ ॥

सरसिजवनान्युद्यत्पत्रार्यमाणि हसन्तु न
हततरुचिसुहृच्चन्द्रं तन्द्रामुपैतु न कैरवं ।
हिमगिरिदृषद्दायादश्रि प्रतीतमदः स्मितं
कुमुदविपिनस्याथो पाथोरुहैर्निजनिद्रया ॥ ३२ ॥

सरसिजेति। सरसिजवनानि न हसन्तु अपि तु विकसन्त्येव। यस्मादुद्यन्नुदितरः पत्रःसहायभूतः अर्यमा सूर्यो येषां विकसनगणेत्यर्थः। अथ च यदीयमित्रस्योदयो भवति स सर्व्वोऽपि हर्षवशाद्विकसत्येव। तथा कैरवं कुमुदं तन्द्रां सङ्कोचं नैयेतु अपि तु प्राप्नोत्येव। यतः हततरुचिः गतप्रकाशः सुहृच्चन्द्रो यस्य तादृशं। चन्द्रोदये विकसतः कुमुदस्य चन्द्रक्षये सङ्कोचो युक्तएवेत्यर्थः। अन्योऽपि सुहृत्क्षये मूर्च्छावशान्निमीलति। अथो अथवा पाथोरुहैर्विकसितकमलैः रात्रिसम्बन्धिन्या निजनिद्रया कृत्वा कुमुदवनस्यादः प्रत्यक्षदृश्यं स्मितं विकसितं प्रतीतं विनिमयेन गृहीतं हिमगिरेर्हिमाचलस्य दृषदां शिलानां दायादांशभागिनो सदृशी श्रीःशोभा यस्य शुभ्रत रमित्यर्थः। कमलानां रात्रौ निद्रा कुमुदानाञ्च विकाशः प्रातस्तु कमलानां विकाशः कुमुदानाञ्च सङ्कोचो दृश्यते ततः स्वीयां निद्रां कुमुदेभ्यो दत्वा कमलैस्तद्विकाशः परिवृत्त्य गृहीत इति सम्भाव्यत इत्यर्थः। सूर्य्ये उदितः कमलानि विकसितानि कुमुदानि च सङ्कुचितानीति भावः। प्रतीतं प्रतिपूर्व्वादिणो निष्ठा। प्रतीष्टमिति च पाठः अर्थः पूर्व्वोक्त एव॥ ३२॥

धयतु नलिने माध्वीकं वा न वाऽभिनवागतः
कुमुदमकरन्दौघैः कुक्षिम्भरिर्भ्रमरोत्करः।
इह तु लिहते रात्रीतर्षं रथाङ्गविहङ्गमा-
मध निजवधूवक्त्राम्भोजेऽधुनाऽधरनामकं॥ २३॥

धयत्विति। अभिनवो नूतनः प्रभाते आगतः भ्रमरोत्करः नलिनेर्वर्त्तमानं माध्वीकं मकरन्दं धयतु पिबतु वा न वा। यतः रात्रौ कुमुदमकरन्दौघैः कुक्षिम्भरिः आकण्ठतृप्तः परिपूर्णोदरः रात्रौ कुमुदमकरन्दवृन्दैः पूरितोदरत्वात् प्रातर्मधु पिबतु वा मा पिबतु वा न तत्रास्माकमाग्रह इत्यर्थः। अन्योऽप्याकण्ठतृप्तोऽतिथिर्भुङ्क्ते न वा न तत्रादरः। रथाङ्गविहङ्गमास्तु रात्रीतर्षं सकलां रात्रिं तर्षित्वा वियुक्तत्वात् कुमुदमकरन्दं परित्यज्य पिपासयैव स्थित्वा इह प्रत्यक्षदृश्ये निजवधूवक्त्राम्भोजे वर्त्तमानमधरनामकमोष्ठसंज्ञं मधु अधुना प्रातःसमये लिहते आस्वादयन्ति, एतद्युक्तं। तावतैव चाम्भोजस्यापि कृतार्थत्वं जातमित्यर्थः। अन्यत्रापि क्षुधार्थे इच्छया उपोषितस्य भोजनं युक्ततरं भवति। भ्रमरा मकरन्दमास्वादयन्ति चक्रवाकाश्च प्रातर्वियोगापगमात् कमलमकरन्दमनादृत्य निजसहचरीचुम्बन्तीति भावः। फलेग्रहिरात्मम्भरिश्चेति (पा० ३।२।२६) चात्कुक्षिम्भरिः। रात्रीतर्षं अस्वातिकर्षणारीति (पा० ३।४।५७) णमुल्। एगोषा प्रभृतीति (पा० २।२।२१) समासः॥ २३॥

जगति मिथुने चक्राविवं स्मरागमपारगौ
नवमिव मिथः सम्भुञ्जाते वियुज्य वियुज्य यौ।
सततमम्रतादेवाहाराद्यदापदरोचकं
तदम्रतभुजां भर्त्ता शम्भुर्विषं बुभुजे विभुः ॥ ३४ ॥

जगतीति। जगति त्रैलोक्यमध्ये चक्राविव मिथुने स्त्रीपुंसौ स्मरागमपारगौ कामशास्त्रपारगामिनौ तावेवास्य वेदिनौ मान्यौ। यद्वा स्मरागमपारगौ चक्रवाकाविव जगति मिथुने मान्ये एतादृशे चतुरे मिथुने स्तं इत्यर्थः। कुत एतज्ज्ञातमित्यत आह। यौ चक्रवाकस्त्रीपुंसौ वियुज्य वियुज्य पुनरन्योन्येन सह रात्रौ वियोगं प्राप्य मिथोऽन्योन्यं नवमिव अतिपरिचयजन्याव-ज्ञाशून्यं सातिस्पृहमिव सम्भुञ्जाते सुरतसुखमनुभवतः। अजस्र-कामसेवनाद्विरागो भवेदिति वियुज्य सम्भोगः प्रत्ययसम्भोगव-दृशातिशयचमत्कारकारी भवतीति कामशास्त्ररहस्यं ज्ञात्वैव तावेवं कुरुत इत्यर्थः। अत्र दृष्टान्तः। यद्यस्मात् अम्रतभुजां केवलपीयूषाहाराणां सुराणां भर्त्ता स्वामी सुलभतराम्रत इति यावत्। विभुर्व्यापकः समर्थो विषभक्षणेऽप्यसम्भावितोपद्रव इति यावत्। स शम्भुः नीरोगकरणद्वारा सर्व्वेषामारोग्यसुख-कारी असम्भावितरोगोऽपीश्वरः सततमम्रतलक्षणादेवाहाराद्ध-स्यादरोचकं अम्रताशनानभिलाषरूपं रोगमापत् प्राप। तत् तस्मात्परिहारार्थे विषं बुभुजे। सततमधुरतरास्वादजन्यारुचि-परिहारार्थमेव स कालकूटं भक्षितवान्, अनन्तरञ्च पुनर-

विशति युवतित्यागे रात्रीमुचं सिद्धिकारुचं
दिनमणिमणिं तापे चित्तान्निजाच्च यियासति।
विरहतरलज्जिह्वा बह्वाह्वयन्त्यतिविह्वला-
मिह सहचरीं नामग्राहं रथाङ्गविहङ्गमाः ॥ ३५ ॥

म्रतभक्षणे प्रत्ययैव रुचिरस्य यथा जायते तथा वियोग एव सम्भोगे नितरां रुचिमुत्पादयतीति बुद्ध्वा चक्रवाकाभ्यां क्रियत इति तावेव कामशास्त्ररहस्यज्ञाविति भावः। पारगौ अन्तात्यन्तेति (पा॰३।२।४८) डः। भमुञ्जाते भुजोऽनवन इति (पा॰१।३।६६) तङ्। अनेन सम्भोगस्य वियोगादेव नूतनत्वं भवतीति सूच्यते ॥ ३४ ॥

विशतीति। युवतित्यागे चक्रवाकनिष्ठस्त्रीवियोगे सिद्धिकारुचं शीतांशुं विशति सति रात्रीमुचं रात्रिलक्षणमियात्यागिनं तथा वियोगजन्ये तापे परितापे औष्ण्ये च निजाच्चित्तात् चक्रवाकहृदयात् सकाशात् दिनमणिमणिं सूर्यकान्तं यियासति जिगमिषति सति विरहेण तरलन्तो तरलेवाचरन्तो विह्वलीभवन्तो स्खलन्तो जिह्वा येषां ते रथाङ्गविहङ्गमा विरहेणातिविह्वलां सहचरीं चक्रवाकीं नामग्राहं स्वसङ्केतेन नाम गृहीत्वा इह प्रभाते कोऽहमस्मि वा बहुवारं आह्वयन्ति आकारयन्ति। अन्योऽप्यतिविह्वलो बहु वारं आकार्यते अमिति न वेति सन्देहात्। प्रतिचक्रवाकानां संयोगः परितापत्यागः परस्पराह्लानं चन्द्रधूसरत्वं सूर्यकान्तमणापद्य। प्रालेयं सिद्धि-

स्वमुकुलमयैर्नेत्रैरन्धभ्रमविप्लुतया जनः
किमु कुमुदिनीं दुर्व्याचष्टे रवेरनवेक्षिकाम्।

क्षेत्यमरः। रात्रीमुचं क्विप्। स्वगिति सम्पदादित्वात्। निक्षिका स्वस्येति समासः। तरलजिह्वा तरलेवाचरतीति आचार क्विबन्ताच्छतरि पुम्वत्। आक्रयन्ति सद्भावाभावात्तङ्भावः ॥ २५ ॥

स्वेति। जनो लोकः स्वमुकुलमयैः आत्मीयकलिकानेत्ररूपैः कृत्वा अन्धभ्रमविप्लुतया अनन्धायां अप्यन्धत्वाङ्गीकाराद्धेतोः रवेः अनवेक्षिकां अनवलोकिकां कुमुदिनीं किमु किमर्थं दुर्व्याचष्टे दुष्टं कथयति। अवश्यदर्शनीयपवित्रसूर्यादर्शननियमादियं मित्रोदयं न सहत इति लोकः किमिति निन्दति, अपि त्वयुक्तोयं निन्देत्याक्षेपः। उ अहो किं निन्दतीति वा। अन्धभ्रमविप्लुतयाऽविचारतया रहस्यमजानन्नेव किमिति निन्दतीति जनविशेषणं वा। कथमयुक्तमित्यत आह। हे श्रोतारः यूयं शृणुत शृणुत तस्याः सूर्यादर्शने हेतुमाकर्णयत। ये राज्ञो नृपस्य दाराः कवीनां पाणिन्यादीनां प्रतिभासमुत्पन्नेषु व्याकरणादिग्रन्थेषु विषये लिखितास्तच्छिष्यैः पठिताश्चातः अवश्यदर्शनीयं सूर्यमपि न पश्यन्तीत्यसूर्यम्पश्या राजदारा इत्येव लिखितास्तच्छिष्यैश्च तथैव पठिताः। ननु प्रकृते किमित्याशङ्क्याह सा कुमुदिनी किल प्रसिद्धं न भाविनी भविष्यति अर्थाद्राज्ञो दाराः, अपि तु राजयन्द्रस्य अथच नृपस्य दारा भवन्त्येव।

लिखितपठिता राज्ञो दाराः कविप्रतिभासु ये
प्रशुणत प्रशुणनादर्यम्पश्या न सा किल भाविनी ॥३६॥
चुलुकिततमःसिन्धोर्भृङ्गैः करादिव शुभ्यते
नभसि विसिनीबन्धोरन्ध्रच्युतैरुदविन्दुभिः।

राजमहिष्यो हि अतिसुरक्षितत्वादसूर्य्यम्पश्याः, इयमपि तथा, तस्मादेतस्या अपि असूर्य्यम्पश्यता युक्तेति रहस्यानभिज्ञो जनो हृद्येवैतां निन्दतीत्यर्थः। किलशब्दः किमर्थो वा। अत्र य इति कुमुदिनीपरामर्शेऽपि दारैः सामानाधिकरण्याद्बहुवचनं। येति पाठः समीचीनः। लिखितपठिता एकवचनं बहुवचनं वा। सूर्य्योदयवशात् कुमुदिनी सङ्कुचितेति भावः। अन्धम्भविष्णुतया कर्त्तरि भुवः खिष्णुजिति (पा॰ ३।२।५७) अन्धशब्द उपपदे भुवः खिष्णुचः खित्यात् अरुर्द्विषदिति (पा॰ ६।३।६७) मुम्। अवे-चिका खलि प्रत्ययस्थादिति (पा॰ ७।३।४४) कात्पूर्व्वस्येत्वं। लिखितपठिताः कर्म्मधारयो द्वन्द्वो वा। असूर्य्यम्पश्या. असूर्य्यल-लाटयोरिति (पा॰ ३।२।३६) खश् खित्वान्मुम्। अत एव ज्ञाप-कात् क्रियायोगिनोऽपि नञः समासः॥ ३६ ॥

चुलुकितेति। गगने गच्छद्भिर्भृङ्गैः उदविन्दुभिरिव नभसि शुभ्यते दीप्यते। किम्भूतैरुदविन्दुभिः चुलुकः कृतश्चुलुके धृत्वा पीतः तमःसिन्धुस्तिमिरसमुद्रो येन तस्य विसिनीबन्धोः पद्मि-नीमित्रस्य सूर्य्यस्य करात् किरणादेव हस्तात् रन्ध्रेभ्योऽङ्गुल्य-न्तरालविवरेभ्यश्च्युतैर्गलितैः, चुलुकेन पीततमःसिन्धोरुपरिव-

शतदलमधुस्रोतःकच्छद्वयीपरिरम्भणा-
दनुपदमदःपङ्काशङ्काममी मम तन्वते ॥ ३७ ॥
घुसृणसुमनःश्रेणिश्रीणामनादरिभिः सरः-
परिसरचरैर्भासां भर्त्तुः कुमारतरैः करैः।

र्शमानस्य रवेः कराङ्गुलीविवरेभ्योऽधोगलिताः छायाजलबिन्दव इव भृङ्गा गगने शोभन्त इत्यर्थः। पुलकितेति करविशेषणं वा। अनुपदं गगनात् सकाशात् कमलानि प्रति पातानन्तरं शतदलाख्यान्यतिस्थूलानि कमलानि तेषां मधुस्रोतसः मकरन्दप्रवाहस्य कच्छद्वयी मकरन्दार्द्रभागद्वयं यत्तटद्वयं तस्याः परिरम्भणात् संश्लेषादुभयतश्च लगनाद्धेतोरमी भृङ्गा अदःपङ्काशङ्कां अमुष्य पीतस्य तमःसिन्धोरधःस्थितावशिष्टकर्दमसम्भावनां वैतालिकस्य मम तन्वते विस्तारयन्ति। सकलेऽपि तमोजले पीतेऽवशिष्टतया पङ्क इव भृङ्गाः शोभन्त इत्यर्थः। अमुष्या मकरन्दप्रवाहकच्छद्वय्याः पङ्क इति वा। प्रवाहतटद्वये पङ्को युक्तः। भृङ्गाश्च मकरन्दस्योपरि नोपविशन्ति किन्तु अभित इति तेषां जातिः। प्रातःकालो जातोऽन्धकारः साकल्येन विनष्टः भ्रमरास्तन्नीडेभ्यो निर्गत्य गगन उड्डीय मधुपानार्थं कमलान्युद्दिश्य यान्तीति भावः। पुलकित इति तत्करोतीति (पा० ३।१।२६।वा० १) एतस्मात् श्रूयते शुष्कद्रोणी भावे यक् ॥ ३७ ॥

घुसृणेति। घुसृणसुमनसः कुङ्कुमकुसुमानि तासां श्रेणिस्तस्याः श्रीणां कान्तीनां अनादरिभिः अनादरणशीलैः ताभ्योऽपि

अजनि जलजामोदानन्दोत्पतिष्णुमधुव्रता-
वलिशबलनाद्गुञ्जापुञ्जश्रियं ग्रहयालुभिः ॥ ३८ ॥
रचयति रुचिः शोणीमेतां कुमारितमा रवे-
र्यदलिपटली नीलीकर्त्तुं व्यवस्यति पातुका।
अजनि सरसी कल्माषी तद्ध्रुवं धवलस्फुट-
त्कमलकलिकाखण्डैः पाण्डूकृतोदरमण्डला ॥३९॥

रक्ततरैः सरःपरिसरचरैस्तीरसञ्चरणशीलैः कुमारतरैरतिबालैर्भासां भर्त्तुः करैः सूर्य्यकिरणैः जलजामोदः गगनावगाहिकमलवङ्कलपरिमलस्तद्विषय आनन्दस्तेनोत्पतिष्णुरुत्पतनशीला मधुव्रतावलिस्तया शवलनात् मिश्रणाद्धेतोः गुञ्जापुञ्जश्रियं अर्द्धरक्तैकपार्श्वगुञ्जाराजिशोभां ग्रहयालुभिर्ग्रहणशीलैः अजनि तत्तद्रूपैर्जातमित्यर्थः। बाला अपि सुमनसां धीराणामप्यनादरिणो भवन्ति। बाला अपि रक्तकराभवन्तीति केचित्। अजनि भावे चिण्। उत्पतिष्णुः अलङ्कृञि (पा० ३।२।१३६) तीष्णुच्। शवलनं तत्करोतीति (पा० ३।१।२६।वा० १) ण्यन्तान्नपुंसके भावे ल्युट्॥ ३८॥

रचयतीति। यद्यस्मात् रवेः कुमारितमा अतिबाला रुचिः सरसीं शोणीं रक्तवर्णां रचयति। यस्माच्च कमले मकरन्दास्वादार्थे पातुका अलिपटली भृङ्गश्रेणी सम्मन्धादेतां नीलीकर्त्तुं व्यवस्यति। यतश्चेयं धवलानां स्फुटन्तीनां कमलकलिकानां खण्डैः समूहैः पाण्डूकृतं उदरमण्डलमध्यदेशो यस्याः

कमलकुशलाधाने भानोरहो पुरुषव्रतं
यदुपकुरुते नेत्राणि श्रीगृहत्वविवक्षुभिः ।
कविभिरुपमादानादम्भोजतां गमितान्यसा-
वपि यदतथाभावान्मुञ्चन्त्युलूकविलोचने ॥ ४० ॥

नैतादृशी तस्मात् ध्रुवं निश्चितं इयं सरसी कल्माषी कर्बुरैवाजनि जाता । रक्तकृष्णश्वेतवर्णमिश्रणात् कर्बुरत्वोत्प्रेक्षा । ध्रुवमुत्प्रेक्षायां वा । बालातपो जातः भ्रमराः परितो भ्रमन्ति कमलानि विकसितानीति भावः । चित्रं किर्मीरकल्माषेत्यमरः । शोणां शोणात्प्राचामिति (पा० ४।१।४३) ङीप् । कुमारितमा घरूपेति (पा० ६।३।४३) ह्रस्वः ।पटलकल्माषौ गौरादौ ॥३८॥

कमलेति । कमलमात्रस्य कुशलाधाने आनुकूल्याचरणे भानोः अहो अत्याश्चर्यरूपं पुरुषसम्बन्धि व्रतं नियमः, अङ्गीकृतपरिपालनशीलत्वमिति यावत्, यं दृष्ट्वाऽहो आश्चर्यरूपः पुरुष इति सर्वे वदन्ति । कुतो ज्ञातमत आह । यद्यस्मात्तात्त्विकानि कमलानि विकासयतीति किं वाच्यं किन्तु श्रियोः कान्तिलक्ष्म्योः गृहत्वं स्थानतां विवक्षुभिः वक्तुमिच्छुभिः व्यासवाल्मीकिकालिदासादिभिः कविभिः उपमादानात् किञ्चिच्छ्रीगृहत्वादिगुणसादृश्यादपि अम्भोजतां कमलत्वं गमितानि प्रापितान्यारोपितकमलत्वान्यपि नेत्रकमलानीति निर्दिष्टानि लोकनेत्राण्यसौ रविः उपकुरुते उन्मीलयति । उदित्वरे हि सूर्ये लोकनेत्राण्युन्मीलन्ति । अथच घटाद्यर्थग्रहणसमर्थानि

यदतिमहतो भक्तिर्भानो तदेनमुदित्वर-
न्त्वरितमुपतिष्ठस्वाध्वन्य त्वमध्वरपद्धतेः।

करोति। यत आलोकसहकृतमेव चक्षुः पदार्थग्रहणसमर्थं। यदपि अतथाभावात् औष्ट्यलाभावात् कविभिः कमललेनानुरक्तत्वादुलूकविलोचने मुद्यति मीलयति। न च पदार्थानापादयति। यचोलूकस्य दृष्टिसचालच्छोरिति लोकप्रसिद्धिस्तच्चयोः औष्ट्यलं दूरनिरस्तं। सूर्येण कमलानि कमलतुल्यानि च लोकनेत्राणि विकास्य उलूकनेत्राणि कमलगुणयोगाभावादविकास्यान्वयव्यतिरेकाभ्यां स्वप्रतिज्ञा सत्या कृता। एवंविधः सत्यप्रतिज्ञः कोऽपि नास्तीत्यर्थः। कमलानि विकसितानि सर्व्वोऽपि लोकः प्रबुद्धः कौशिकनेत्रे च निमीलिते प्रातःकालो जात इति भावः। औष्ट्यस्वविवत्तुभिः द्वितीयेति योगविभागात् समासः। उपमितिरुपमानं नपुंसके भावे ल्युट्। उपमीयतेऽनेनेति उपमानं सादृश्यमिति भावः॥ ४०॥

यदिति। यद्यपि त्व भानौ अतिमहती भक्तिर्यस्तैवम्भूता वर्त्तसे तत्तर्हि हे अध्वरपद्धतेर्यज्ञमार्गस्याध्वन्य महायाज्ञिक त्वम उदित्वरमुदयशीलमेनं सूर्यं त्वरितमुपतिष्ठस्व पूजय। शीघ्रमुपस्थाने हेतुमाह। हि यस्मात् इह समये प्रभाते किल प्रसिद्धं रविमभिलक्षीकृत्य उपस्थानमन्त्रेणोर्द्ध्वं क्षिप्ता जलाञ्जलयो मन्देहाख्येषु राक्षसेषु उदवज्रतां शतकृपाशनिभावं व्रजन्ति वज्रीभूय तान् भस्मीकुर्व्वन्तीति श्रुतावुक्तमित्यर्थः। तिग्मः कोऽपि-

इह हि समये मन्देहेषु व्रजन्त्युदवज्रता-
मभिरविमुपस्थानोत्क्षिप्ता जलाञ्जलयः किल ॥ ४१ ॥
उदयशिखरिप्रस्थावस्थायिनी खनिरश्मया
शिशुतरमहोमाणिक्यानामहर्मणिमण्डली।

र्द्धकोटौ च मन्देहा नाम राक्षसाः इति पुराणञ्च। तस्मादुदयात् पूर्व्वं शीघ्रमुत्तिष्ठस्वेत्यर्थः। अध्वन्यमिति पाठे अध्वरपङ्क्तेरध्वानमलं गामिनं। भक्तिशब्दस्य प्रियादित्वात् पुंवद्भावाभावः। अध्वन्य अलङ्गाम्यर्थे अध्वनो यत् खाविति (पा॰ ५।२।१६) यत्। उदवज्रतां मन्थौदनेत्यादिना (पा॰ ६।३।६०) उदकस्योदादेशः। अभिरभागे (पा॰ १।४।९१) इत्यभेः कर्म्मप्रवचनीयत्वाद्द्वितीया ॥ ४१ ॥

उदयेति। इयं अहर्मणेः सूर्य्यस्य मण्डली उदयशिखरिणः उदयाचलस्य प्रस्थे सानुनि अवस्थायिनी वर्त्तमानाऽश्मया भूयसी शिशुतराणि रक्ततराणि महांसि तेजांसि यान्येव माणिक्यानि तेषां खनिरुत्पत्तिभूमिः ध्वान्तेन तिमिरेण ध्वान्तवच्च श्यामां पिधायिकां आकरद्वारा आच्छादिकां रजनिरूपां दृषदं शिलां विधूयापनीय कतमेन केन जनेन विमुद्रिता उद्घाटितेति न खलु नैव जाने रात्रिविगमे यतो दृश्यत इत्यर्थः। वाक्यार्थः कर्म्म। न जाने अर्थात्तं जनमित्यर्थ इति वा। अन्यापि माणिक्यादिखनिः पर्व्वतप्रस्थावस्थायिनी स्थपतरशिलापिहिताऽपि केनापि भाग्यवतोद्घाट्यते। अतिशयितः कः कतमो महाऽनेन

रजनिदृषदं ध्वान्तश्यामां विधूय पिधायिकां
न खलु कतमेनेयं जाने जनेन विमुद्रिता ॥ ४२ ॥
सुरपरिवृढः कर्णात् प्रत्यग्रहीत् किल कुण्डल-
द्वयमथ खलु प्राच्यै प्रादान्मुदा स हि तत्पतिः।
विधुरुदयभागेकं तत्र व्यलोकि विलोक्यते
नवतरकरस्वर्णस्रावि द्वितीयमहर्मणिः ॥ ४३ ॥

विमुद्रितेत्यहं न जाने, अपि तेनैव जानामि। कालपरिवर्त्तकारिणा ब्रह्मणैवोद्घाटितेत्यर्थ इति काकुर्वा। खनिः खलु खनिरिवेत्युत्प्रेक्षा वा। कतमः डतमच्। अतिशये स्वार्थे वा तम एव ॥ ४२ ॥

सुरेति। सुरपरिवृढः शक्रः कर्णात् कुण्डलद्वयं कर्णभूषणयुगं ब्राह्मणवेषं धृत्वा प्रतिग्रहरूपेणाग्रहीत्। किलेति पुराणादौ प्रसिद्धं। अथ प्रतिग्रहानन्तरं मुदा तत्कुण्डलद्वय खलु निश्चितं प्राच्यै दिशे प्रादात्। हि यस्मात् स शक्रस्तस्याः प्राच्याः पतिः धवः रक्षिता च प्रियान् प्रियार्थे प्राच्या प्रीत्या निजकर्णादिभूषणं प्रयच्छति। तस्यै दत्तमिति कुतो ज्ञातमत आह। तत्र प्राच्यां तयोर्द्वयोर्मध्ये वा विधुः प्रायं उदयभाक् उदित्वर आरक्तकिरणरूपमेकं कुण्डलं व्यलोकि दृष्टं। प्रातः, अहर्मणिः, नवतरात्प्राक्कालान्निर्गताः करा रक्ततरकिरणाः तद्रूपस्वर्णस्रावि सुवर्णस्रवणशीलं तादृशमेव द्वितीयं कुण्डलं विलोक्यते। तस्मात् तस्यै तद्द्वयं तेन प्रत्तमित्यहं शङ्के इत्यर्थः। सूर्य्यस्य कुण्डलत्व-

दहनमविशद्दीप्तिर्यास्तङ्गते गतवासर-
प्रथमसमयप्राप्ते पत्यौ विवस्वति रागिणी।
अधरभुवनात् सोद्धृत्यैषा हठात्तरणेः कृता-
मरपतिपुरप्राप्तिर्धत्ते सतीव्रतमूर्त्तिताम्॥ ४४॥

मर्थनार्थं सशङ्काश्चन्द्रस्य कुण्डलमनुक्तं। सालतरकिरणः सूर्य्यः उत्तमसुवर्णस्याविकर्णकुण्डलमिव शोभत इति भावः। कर्णेनेन्द्राय कुण्डलद्वयं दत्तमित्यारण्यके पर्व्वणि कथा॥ ४३॥

दहनमिति। या दीप्तिः रागिणी रक्ता सती विवस्वति सूर्य्यलक्षणे पत्यौ गतवासरप्रथमे पूर्व्वदिनावसाने सायङ्कालसमयनसमयकालं प्राप्तेऽतएवास्तं विनाशं अस्ताचलं वा प्राप्य गते सति, अग्निर्ज्योतिरित्याद्यग्निहोत्रमन्त्रादिशास्त्रात् दहनमविशत्। सैषा दीप्तिः अधरभुवनात् पातालात् सकाशात् हठात् बलात्कारेणार्थात्तरणिमेवोद्धृत्योदयं प्रापय्य तरणेरग्रे कृतामरपतिपुरस्य स्वर्गस्य प्राप्त्या वा प्राप्तिर्यया एवम्भूता सती तीव्रतया तीक्ष्णतया सह वर्त्तमाना मूर्त्तिर्यस्यास्तत्तां धत्ते। क्रमेण सूर्य्ये ऊर्ध्वदेशे प्राप्ते दीप्तिः खरतरा जातेति भावः। या नारी भर्त्तरि विनाशसमयप्राप्ते विनष्टे सति तस्मिन्ननुरागिणी सती जन्मान्तरेऽपि तत्प्राप्त्यर्थमग्निप्रवेशं कुरुते, सा दुष्कृतैः पातालप्राप्तमपि निरयपतितं, व्यालग्राही यथा व्यालमित्यादिवचनप्रामाण्यान्निरयादलादुद्धृत्य तस्य कृतस्वर्गप्राप्तिः सतीनां पतिव्रतानां व्रतमेव मूर्त्तिः शरीरं यस्याः, सती गौरी

बुधजनकथा तथ्यैवेयं तनौ तनुजन्मनः
पितृशितिचरित्वर्णाद्याहारजः किल कालिमा।
शमनयमुनाक्रोडैः कालैरितस्तमसां पिता-
दपि यदमलच्छायात् कायादभूयत भास्वतः॥४५॥

तस्या वा मतयुक्ता मूर्त्तिर्यस्यास्तत्तां धत्ते। गौरीवदियमपीत्यर्थः। समयप्राप्ते प्राप्तापन्ने इति (पा॰२।२।४) समासः॥४४॥

बुधेति। तनुजन्मनोऽपत्यस्य तनौ वर्त्तमानः कालिमा श्यामत्वं किल प्रसिद्धं निश्चितं वा, पितुः मित्रोर्वा शितिचरित्वर्णादीनां कृष्णनीलवर्णपत्रफलशाकादीनां च आहारो तत्तद्वर्णं शितिचरिद्वर्णं यदाद्यमदनीयं पत्रशाकादि वा तस्माज्जातः सश्यामो मैत्रातनयत्वादित्यादि बुधानामुदयनाचार्य्यादीनां इयं कथा गोष्ठी तथ्यैव सत्यैव। यद्यस्माद्धेतोः भास्वतः इतः सत्यचतुर्भ्यादमलच्छायादुज्वलकान्तेः शुक्लभास्वरादपि तमसां पितात् तमिस्रैकहारात् कायात् शमनयमुनाक्रोडैः यमयमुनाशनैश्चरैः कालैः श्यामैरभूयनोत्पन्नं। सूर्य्यकायस्योज्ज्वलत्वेऽपि श्यामतमिस्राहारपरिणतिवशात् यमादिभिरपत्यैः श्यामैर्जातं तस्मादियं पण्डितकथा सत्यैवेत्यर्थः। सर्व्वमपि तमः सूर्य्येण नाशितमिति भावः। आद्यं अदेः प्रादुर्भावार्थादिति (पा॰३।१।१२४) ण्यत्। कालीव कालो वेति पुमान् स्त्रियेत्येकशेषः (पा॰१।२।६७)। तमसां कर्म्मणि षष्ठी। अभूततद्भावे तङ्। क्रोडः कालोचितः पङ्गुर्मन्दः छायासुतः शनिरित्यमरशेषः॥४५॥

अभजत चिराभ्यासं देवः प्रतिक्षणदात्ययं
दिनमयमयं कालं भूयः प्रहृत्य तथा रविः ।
न खलु शकिता शीलं कालप्रसूतिरसौ पुरा
यमयमुनयोर्जन्माधानेऽप्यनेन यथोज्झितुं ॥ ४६ ॥

अभजतेति। अयं रविर्देवः क्षणदा रात्रिस्तस्या अत्ययं प्रत्यूषं प्रतिरात्र्यवसाने इत्यर्थः । दिनमयं दिनरूपं कालं वृत्त्यादिलक्षणमयं अथच तद्रूपं श्यामं वपुः भूयो बहुतरं यथा तथा पौनःपुन्येन वा प्रहृत्य उत्पाद्य चिरकालमभ्यासं तथा तेन प्रकारेण अभजत अशिश्रयत्। यथा येन प्रकारेण पुरा पूर्व्वं काल प्रसूतिर्यस्याय च काली श्यामा प्रसूतिर्यसौवक्ष्यतोऽसौ सूर्य्यः यमयमुनयोरपि सवविष्यतोर्जन्माधाने जन्मार्थं बीजक्षेपसमयेऽपि, अनेन चिराभ्यासेन हेतुना शीलं कालोत्पादनस्य स्वभावमुज्झितुं खलु निश्चितं न शकिता समर्थो भविता। कालप्रसूतिस्वभावः सूर्यः स्वभावस्य दुरतिक्रमत्वात् तावपि कालावुदपादयदित्यर्थः । उदयमानेन सूर्येण दिवसः कृत इति भावः । प्रातःकाले क्रियमाणोऽभ्यासः पटुतरो भवति । चिराभ्यासं मयूरव्यंसकादित्वात् समासः। यद्वाऽकारान्तस्य चिरशब्दस्य अत्यन्तसंयोगे चेति (पा॰ २।१।२८) समासः । प्रतिक्षणदात्यये वीप्सायामव्ययीभावे नाव्ययीभावादिति (पा॰ २।४।८३) सुपोऽलुक्। तृतीया सप्तम्योर्बहुलमिति (पा॰ २।४।८४) त्वम् अत्ययमिति निपातः कालप्रसूतिः पक्षे पुंवत् ॥ ४६ ॥

रुचिरचरणः स्फीतोरुश्रीसनाथरथः शनिं
शमनमपि स त्रातुं लोकानसूत सुताविति ।
रथपदकृपासिन्धुर्बन्धुर्दृशामपि दुर्जनै-
र्यदुपहसितो भास्वान्नास्मान् हसिष्यति कः खलः ॥४७॥

रुचिरेति । सुजनैरेवम्भूतो यो भास्वानिति संस्तुतः दुर्जनैर्यस्मादेवं उपहसितः तस्मादतितुच्छान्परवर्णनोपजीविनः कोनाम खलो नोपहसिष्यति, अपि तु सर्वोऽप्युपहसिष्यत्येव । यथा उदिते सूर्ये सद्भिः सूर्यस्यार्हणा क्रियते तथा खलैर्न, एवं तुच्छा एते स्वोदरभरणार्थं यत्किञ्चिद्वदन्तीत्यस्माकं खलैर्निन्दायां कृतायां भवादृशै राजशिरोमणिभिरस्माकमर्हणा क्रियत एवेति खलानां प्रयासो वृथा एवेत्यर्थः । एवं कथं स्तुतः कथमुपहसित इत्यत आह । सूर्यः रुचिराश्चरणाः उचितलक्षणया किरणा यस्य तथा सूतस्यारुणस्य उर्व्या महत्या श्रिया सुता सूर्येणैव प्रसूता उर्वी श्रीस्तया सनाथोऽलङ्कृतो रथो यस्य सः । तथा शनिं शमनं शनैश्चरदण्डधरौ सुतौ लोकान् त्रातुं असूत । शनिर्हिंस्रत्यादि सिद्धिमार्गहेतुलोकपालतया लोकान् रक्षति । यमोऽपि दुष्टादुष्टयोर्निग्रहानुग्रहौ कुर्वन् धर्माधर्माचरणप्रवृत्तिजननद्वारा रक्षति । एतादृशौ परोपकारपरौ पुत्रौ असूत । तथा रथपदानामनाथानां चक्रवाकानां कृपासिन्धुर्दयासमुद्रः रथस्य पदेन व्यवसायेन गत्या जगतो दयासमुद्रो वा । तथा सकलपदार्थग्रहणसहकार्यालोकसम्पादनद्वारा दृशां सर्वजनशेषाणां बन्धुः मित्रं

शिशिरजरुजां धर्मं शर्मोदयाय तनूभृता-
मथ खरकराश्मानांस्थानां प्रयच्छति यः पयः।

एवम्भूतः सुन्दरः परोपकारकरणैकस्वभावोऽपि इति स्तुतिपक्षः। रुचिस्तेजोरूपस्तापकर इति यावत्। तथा अचरणश्चरण-रहितः यद्वा विपरीतलक्षणया रुचिरौ चरणौ यस्य। पुराणादौ चरणाङ्गुल्यादिध्याने कुष्ठादिदुष्टफलश्रवणात् ध्यानेऽप्यचरणएव सूर्यः। विश्वकर्मणा कुन्दे आरोपितस्य सूर्यस्य तेजसां दुःसहत्वाचरणाकारो न निर्मित इति वा। अन्धं प्रति सुनेत्र-वचनवद्चरणस्यापि रुचिरचरणत्वोक्त्योपहासः। तथा खतस्य अनूरोः सारथेरुरुशोभया सनाथो रथो यस्य स इत्यपि विरुद्ध-लक्षणा। तथा शनेः क्रूरग्रहत्वाच्चिरकालभोग्यदुःखदत्वाधमस्यापि जगत्प्राणहरणशीलत्वात् परपीडाकरणैकस्वभावौ शनियमनौ पुत्रौ लोकान् त्रातुमस्येत्यपि विरुद्धलक्षणा। तथा तिर्यग्योनिपक्षिविशेषचक्रवाकाणामेव दयाविन्धुर्नान्येषां तापकरत्वात् तादृशानामेव बन्धुर्नान्येषां। यद्वा तेजोभरेण दृष्टि-प्रतिघातकारित्वादबन्धुरपि दृशां बन्धुरित्यपि विरुद्धलक्षणेति उपहासपक्षः। एवम्भूतः सूर्यः समुदेतीति भावः॥ ४७॥

शिशिरेति। स भानुरुदयति उदेति। स कः, यः शिशिरर्त्तौ शिशिरं हिमं तस्माज्जाता रुक् पीडा येषां तेषां तनूभृतां जनानां शर्मणः सुखस्योदयाय प्राप्तये वसन्तनिदाघसम्बन्धिनं घर्ममुष्णं क्रमेण प्रयच्छति। अथानन्तरं वसन्तनिदाघसम्बन्धिनः खरास्तीक्ष्णतरा कराः सूर्यकिरणास्तैः आम्लानं शुष्कं स्थानं आस्यं

जलभयजुषां तापं तापस्पृशां हिममित्यय-
म्परहितमिलत्कृत्यावृत्तिः स भानुरुदञ्चति ॥ ४८ ॥
इह न कतरश्चित्रं धत्ते तमिस्रततीर्दिशा-
मपि चलदृशामुत्सङ्गेषु स्थिता धयतां क्षणात्।

सुखं येषां तेषां देहिनां सुखाय पयः वर्षासम्बन्ध्युदकं प्रयच्छति दत्ते। ततो जलभयजुषां जलभीतानां तापं दत्ते। ततस्तापस्पृशां शारदतापवतां देहिनां हेमन्ते हिमं दत्ते एवम्प्रकारेण परेभ्यो यद्धितं तस्मिन् विषये मिलतां पौनःपुन्येन घटमानानां कृतेः शीततापजलदानरूपपुरुषव्यापारस्यावृत्तिरावर्त्तना यस्य। यद्वा कृत्यानां शीतादिदानरूपाणां कार्याणां आवृत्तिर्यस्यैवम्भूतः परोपकारपरः सूर्य उदेतीत्यर्थः। स्पृशेति द्रवमूर्त्तिस्पर्शयोर्विवक्षाभावात् सम्प्रसारणाभावः। निष्ठान्तं। परहितेति चतुर्थी-तदर्थार्थेति (पा० २।१।३६) समासः। कृत्या कृञः शचेति (पा० ३।३।१००) योगविभागात् क्यपि कृतिः। चकारात् क्यपि तुकिचकृत्या। पचे अर्थार्थे विभाषाकृवृषोरिति (पा० ३।१।१२०) क्यपि तुक् ॥ ४८ ॥

इहेति। पूर्व्वादीनां चलदृशामपि दिशां उत्सङ्गेषु प्रान्तदेशेषु स्थिता वर्त्तमानास्तमिस्रततीस्तिमिरपरम्पराः क्षणाद्धयतां विनाशयतामपि अर्यम्णः सूर्यस्य रोचिषां तेजसां, रविः शरणं यस्य तद्भावं इषततपवासिलादेत्य प्राप्य निवसदन्धकारं छायारूपं तमः शमयितुं विनाशयितुं असामर्थ्यमसामर्थ्य-

तनुशरणतामेत्य च्छायामयं निवसत्तमः
शमयितुमभूदानैश्वर्यं यदर्यमरोचिषां ॥ ४९ ॥
जगति तिमिरं मूर्च्छामब्जजेऽपि चिकित्सतः
पितुरिव निजादस्मादस्त्रावधीत्य भिषज्यतः।

मभूदिति यत् इदाश्चर्यविषये कतमः को नाम जनश्चित्ते विस्मयं न धत्ते, अपि तु सर्वोऽप्याश्चर्यं प्राप्नोत्येव। दिगन्तगताया अपि तिमिरपरम्परायाः संहारे येषां शक्तिः तेषां रवितेजसां तरुतलमाश्रित्य स्थितं छायारूपं समीपवर्त्त्यपि तमः शमयितुं शक्तिर्नाभूदित्याश्चर्यमित्यर्थः। तनु इति पाठे तनु अल्पं शरीरं वा शरणं यस्य तद्भावं प्राप्य निवसदित्यर्थः। महदाश्रयेण स्थितमपि यो विनाशयितुं शक्नोति सोऽन्याश्रयेण वर्त्तमानं शमयितुमपि न शक्नोतीत्याश्चर्यमेव। तरुच्छायामयं देहच्छायामयं वा तमो विहाय सर्वमपि तमः सूर्येण विनाशितमिति भावः। आनैश्वर्यं अनीश्वरस्य भाव इत्यर्थे न नञ् पूर्वादिति (पा०५।१।१२१) भावप्रत्ययनिषेधेऽपि ब्राह्मणादिष्वनीश्वरशब्दस्य पाठात् ष्यञि नञः शुचीश्वरेति (पा०७।३।३०) पक्षे उभयपदवृद्धिः॥ ४८ ॥

जगतीति। इमौ नासत्यौ निजात् स्वीयात् अस्मात्पितुः सूर्यादधीत्यैवायुर्वेदं पठित्वैव भिषज्यतः। स्वर्लोके चिकित्सां कुरुतः। किम्भूतात् पितुः, जगति वर्त्तमानं तिमिरं अथच वस्तुदर्शनासामर्थ्यजनकं नेत्ररोगविशेषं चिकित्सतो नाशयतः। आयुर्वेदोक्तप्रतीकारेण शमयतः। तथाऽब्जजे कमलखण्डे वर्त्तमानां

अपि च शमनस्यासौ तातस्ततः किमनौचिती
यदयमदयः कह्लाराणामुदेत्यपमृत्यवे ॥ ५० ॥
उडुपरिवृढः पत्या मुक्तामयं यदपीडय-
द्यदपि विसिनीं भानोर्जायां जहास कुमुद्वती ।

मूर्च्छा सङ्कोचमपि नाशयतः, अयथाप एव संसर्गादाविति वचनादपां मूलभूतत्वादअम्रजे लोकसमूहे वर्त्तमानां मूर्च्छां वैचित्त्यध्वस्तचैतन्यभावरूपं मोहमपाकुर्वतः। उपचारचतुरात् कल्याणपार्श्वैद्यादधीत्यैव हि राजवैद्यो भवति, तस्माद्वैद्यात्स्वपितुरेव वैद्यकमधीत्य ताभ्यामिन्द्रवैद्यत्वं प्राप्तमित्यर्थः। अपि च किञ्च सर्व्वभूतानि शमयति नाशयतीति शमनो यमस्तस्यासौ सूर्य्यो तातः पिता ततस्तस्मात् कह्लाराणां कुमुदानामपमृत्यवे सङ्कोचायायथाकालमरणायोदेति। यत् यतोऽयं सूर्योऽदयो निष्कृपः साऽस्य सूर्यस्य किमनौचिती अपि लेपाऽस्यौचित्येव कारणगुणप्रक्रमेणैव कार्य्ये गुणारम्भाददयताऽपमृत्युदायिता च धर्मोऽप्यस्मात् स्वपितुरेव सकाशात् पठितेत्यर्थः। उदयता सूर्य्येण तमो नाशितं, कमलान्युन्मीलितानि, कुमुदानि मुकुलितानीति भावः। पितुः आख्यातोपयोग (पा० १।४।२९) इत्यपादानत्वं। भिषज्यतः। कंह्लादिः॥ ५० ॥

उड्विति। अयमिदानीमस्तं जिगमिषुः उडुपरिवृढश्चन्द्रः मायं उदितः सन् पत्या गतेन पत्या सूर्य्येण मुक्तां त्यक्तां वियोगिनीं भार्यां पद्मिनीं यद्यस्मादन्तरायो अपीडयत् सङ्कोचितवान्

तदुभयमतः शङ्के सङ्कोचितं निजशङ्कया
प्रसरति नवार्के कर्कन्धूकणारुणरोचिषि ॥ ५१ ॥
श्रुतिमयतनोर्भानोर्जानेऽवनेरधराध्वना
विहरणकृतः शाखाः साक्षात्कृतानि दशत्विषां ।

अथच करैर्दूषितवान् । यदपि चन्द्रे पद्मिनीं पीडयति सति कुमुद्वती कुमुदविकासव्याजेन रात्रौ जहास, अतएव हेतोः तदुभयं चन्द्रकुमुदिन्यौ कर्कन्धूफलवत् पक्वबदरवत् कणारुण-रोचिषि ईषद्रक्तकिरणे नवार्के तरुणादित्ये प्रसरति प्रकर्षेण गच्छत्युदयति सति निजशङ्कया स्वकृतानाचारनिमित्तभयेनेव प्रयोजकेन सङ्कोचितं सङ्कोचं प्रापितं निःप्रभीकृतमित्यर्थः । इत्यहं शङ्के मन्ये । सूर्य उदितः पद्मिनी च विकसिता चन्द्रो निःप्रभोऽस्तमेति कुमुदिनी सङ्कुचितेति भावः। अन्यचाप्युक्तं प्रमेयं बोद्धव्यं। कर्कन्धूर्बदरी कोलीत्यमरः। सङ्कोचितमिति एयन्तात् कर्मणि निष्ठा, अन्यथा व्याख्याने सङ्कुचितमित्येव स्यात्। तदुभयं निजशङ्कया करणभूतया स्वयमेव सङ्कुचितं कृतारम्भमिति वा व्याख्येयं। कर्कन्धुकुणेति पाठश्चिन्त्यः। ग्रन्थविस्तारभयात् साधकबाधकादिर्नोक्तः सुबुद्धिभिर्विविच्य बोद्धव्यं ॥ ५१ ॥

श्रुतीति। पद्धिपतिः श्रेयः ज्योतिःशास्त्रानुसारेण अवनेर्भूमे-रधराध्वना अधस्तनेन मार्गेण पातालमार्गेण रात्रौ विहरण-कृतः परिभ्रमतः।तथा श्रुतिमयी वेदरूपा तनुर्देहो यस्य तस्माच्च भानोस्त्विषां दशशतानि एकसहस्रमेव दशशतानि कठकण्व-

निशि निशि सहस्राभ्यां दृग्भिः शृणोति सहस्वराः
पृथगहिपतिः पश्यत्यस्य क्रमेण च भास्वराः ॥५२॥
वहु न खरता येषामग्रे खलु प्रतिभासते
कमलसुहृदस्तेऽमी भानोः प्रवालरुचः कराः।

दिशाखाः निशि निशि रात्रौ रात्रौ सहस्रफणत्वात् प्रतिफणञ्च नेत्रद्वयसद्भावाद्धाभ्यां सहस्राभ्यां दृग्भ्यां सहस्रद्वयपरिमिताभिर्दृष्टिभिरनुक्रमेण युगपत् पृथक् च चक्षुःश्रवस्त्वात् साक्षात् शृणोति पश्यति चेत्यहं जाने। क्रियाद्वये क्रमेण हेतुद्वयं। यतः सहस्वराः स्वरूपेणोदात्तादिस्वरैः सह वर्त्तमानाः स्वराणां शब्दरूपत्वाच्छृणोति। तथा भास्वराः शुक्लभास्वररूपाःशाखाः ततः साक्षात् पश्यति च। रात्रौ पातालगामित्वात्तत्र च शेषस्य वर्त्तनाद्वेदमयशरीरस्य किरणसहस्ररूपं शाखासहस्रं शेषो नेत्रसहस्रद्वयस्य सत्त्वाद्युगपत् पृथगेकेन नेत्रसहस्रेण शृणोति द्वितीयेन च पश्यतीति युगपत् पृथक्श्रवणदर्शनाभ्यामेव शेषनेत्रसहस्रद्वयस्य साफल्यमभूदित्यर्थः। श्रुतिमयतरोरिति पाठे वेदरूपस्य वृक्षस्य शाखा युक्ताः। अध्वगा वसिसद्मनेति पाठे वसिमस्तरमातलमित्यभिधानात् स एवार्थः। दशशतानीति काकाक्षिवदुभयत्रापि सम्बध्यते। सहस्वराः वोपसर्जनस्येति (पा० ६।३।८२) पाक्षिकत्वात् सभावाभावः॥ ५२॥

वह्विति। येषां कराणां खरता तीक्ष्णताऽग्रे पूर्वाह्णसमये बहु अतितरां न प्रतिभासते स्फुरति, सर्व्वथा नोपलभ्यत

उचितमुचितं जालेष्वन्तःप्रवेशिभिरायतैः
कियदवयवैरेषामालिङ्गिताङ्गुलिलिङ्गिमा ॥ ५३ ॥

इत्यर्थः । यद्वा नञ्समासेन नखरताऽतीक्ष्णता । पूर्व्वोक्ते येषां अतितरां तीक्ष्णत्वाभाव उपलभ्यते खलु निश्चितं । अथच येषामुपरिभागे बहवो नखरा नखाः येषां तत्ता उपलभ्यते तेऽमी प्रत्यक्षदृश्या विकासहेतुत्वात् कमलानां सुहृदो बन्धोर्भानोः कमलबन्धोर्वा कराः किरणा एव पाणयः प्रवालरुचः विद्रुमवद्रक्तकान्तयः, अथ च प्रकृष्टबालकान्तयः अतिबाला अथच बालपल्लववद्रक्तकान्तयो दृश्यन्त इति शेषः । तथा जालेष्वन्तप्रवेशिभिः गवाक्षादिविवरमध्यप्रविष्टैः अतएवायतैः नदशाद्दण्डवद्दीर्घीभूतैः कियदवयवैः किरणैः एषां किरणानां पाणीनाञ्च य आलिङ्गितः सम्बद्धः अङ्गुलिलिङ्गिमा अङ्गुलिवल्लिङ्गिमा रुचिमाऽथवाऽङ्गुलिभिर्लिङ्गिमा तत् उचितमुचितमियमतितरा मौचिती । गवाक्षविवरप्रविष्टैः किरणावयवैः किरणानामङ्गुलीतुल्यत्वादाश्रिताङ्गुलिवच्चारुता युक्तैव, पाणीनामपि दीर्घैः कतिपयैरवयवैरङ्गुलिरूढता चारुता भवतीत्यपि युक्तमेवेत्यर्थः । अङ्गुलिचारुतेत्यपिपाठः । नखोऽस्त्री नखर इत्यमरः । उचितं वीप्सायां द्विरुक्तिः । प्रवेशिभिस्ताच्छिल्ये आवश्यके वा णिनिः । आलिङ्गिता लिगिधातोः पक्षे कर्म्मणि नट्, पक्षे निष्ठा । लिङ्गति रमणीयतया चित्तं प्राप्नोतीति गत्यर्थात् धातोः पचाद्यचि पृथ्वादेराकृतिगणत्वादिमनिच् समर्थनीयः ॥ ५३ ॥

नय नयनयोर्द्राक् पेयत्वं प्रविष्टवतीरमू-
र्भवनवलभीजालान्नाला इवार्ककराङ्गुलीः।
भ्रमदणुगणक्रान्ता भान्ति भ्रमन्य इवाशु याः
पुनरपि धृताः कुन्दे किं वा न वर्द्धकिना दिवः ॥ ५४ ॥

नयेति। भो राजन् त्वं भवनस्य गृहस्योपरि वर्त्तमानानां वलभीनां गृहविशेषाणां जालाज्जाला सविवराद्धेतोर्वलभीमेवार्थात् प्रविष्टवतीरमूरर्ककररूपा अङ्गुलीर्जालप्रवेशादङ्गुलीतुल्यान् सूर्यकरान् अथच करेष्वङ्गुलीनां युक्तत्वादर्ककराणामङ्गुलीर्नाला इव कमलदण्डवद्दृशीर्नयनयोर्द्राक् शीघ्रं पेयत्वं गोचरत्वं नय प्रापय सादरं पश्य, तन्नेत्रयोः कमलत्वाज्जालमार्गप्रविष्टास्त्वया विलोक्यमाना एताः स्वनेत्रकमलनाला इव जनैर्दृश्यन्त इत्यर्थः। जालानां कमलतुल्यत्वात्तन्नाला इव त्वं पश्येति वा। अमूः काः? याः भ्रमतां जालप्रविष्टकिरणमध्ये परिभ्रमतां अणूनां त्रसरेण्वादिरूपरजःकणानां गणेन समूहेन आक्रान्ता व्याप्ता अत एव दिवो वर्द्धकिना स्वर्लोकतक्ष्णा त्वष्ट्रा विश्वकर्म्मणा पुनरपि कुन्दे शाणचक्रे धृता आरोपिताः सत्यः आशु भ्रमन्य इव किंवा न भान्ति अपि तु तथैव शोभन्ते। यद्वा भ्रमन्तः शाणघर्षणवशात् परितः पतन्तः येऽणवः शाणतेजसः कणास्तेषां गणैराक्रान्तत्वं युक्तं। विश्वकर्म्मणा सूर्यः शाणमारोपित इति पुराणं। नयनयोराधेयत्वमिति पाठे स एवार्थः। गुणेति पाठे गुणेन रश्मिनेत्यर्थः। जामात् जालादेकवचनं ॥ ५४ ॥

दिनमिव दिवाकीर्त्तिस्तीक्ष्णैः क्षुरैः सवितुः करै-
स्तिमिरकबरीलूनां कृत्वा निशां निरदीधरत्।
स्फुरति परितः केशस्तोमैस्ततः पतयालुभिः
ध्रुवमधवलं तत्तच्छायच्छलादवनीतलं ॥५५॥

दिनमिति। दिवाकीर्त्तिरिव नापित इव दिवसः तीक्ष्णैः सवितुः करैरेव क्षुरैर्निशां तिमिरकबरीलूनां तमोरूपां वेणीं छिन्नमूलां कृत्वा निरदीधरत् निर्द्धारितवान्। मुण्डयित्वा क्वापि कश्चित् केशोऽवशिष्टः स्यादिति गवेषितवानित्यर्थः। अथवा बहिर्निष्कासयामास। नापितोऽपि व्यभिचारादिदुष्टां स्वीयां परकीयां वा स्त्रियं क्षुरैर्मुण्डयित्वा देशाद्बहिर्निष्कासयति। ततोऽनन्तरं तस्मात् मुण्डनाद्वा परितस्तत्र पतयालुभिरधःपतनशीलैः केशस्तोमैः कृत्वा अवनीतलं तेषां वृक्षादिपदार्थानां छाया प्रतिबिम्बं तस्य छलाद्व्याजेन ध्रुवं निश्चितं अधवलं श्यामं स्फुरति शोभते। वृक्षाद्यधोभागे कृष्णत्वं मुण्डितकबरीपतयालु-केशवृन्दसम्बन्धकृतं न तु प्रतिबिम्बकृतं इत्यर्थः। छायाव्यतिरिक्तं सर्व्वमपि तमो दिवसे सूर्यकरैर्नाशितमिति भावः। दिवाकीर्त्तिस्तु नापित इत्यमरः। कबरी जानपदेति (पा० ४।१।४२) ङीप् लूनां ल्वादिभ्य (पा० ८।२।४४) निष्ठानत्वं। निरदीधरत् धारेर्ण्यन्ताण्णिचि णौ चङी (पा० ७।४।१) उपधाह्रस्वत्वे अभ्यासस्य सन्वद्भावात् दीर्घो लघोरिति (पा० ७।४।९४) दीर्घः। तत्तच्छायेति विभाषासेनेति (पा० २।४।२५) वा नपुंसकत्वं ॥ ५५ ॥

भ्रमः शङ्ख्यं तव नल यशः श्रेयसे स्पष्टशब्दं
यत्सोदर्यः स दिवि लिखितः स्पष्टमस्ति द्विजेन्द्रः।
श्रद्धा श्रद्धाकरमिह करच्छेदमप्यस्य पश्य
ग्लानिस्थानं तदपि नितरां हारिणो यः कलङ्कः॥५६॥

इदानीं शाङ्खिकानां शब्दं श्रुत्वा तद्व्याजेन नलयशोवर्णनं कुर्व्वन्ति। भ्रम इति॥ हे नल वयं श्रेयसे मङ्गलाय स्पष्टः स्फुटः शब्दो यस्य तं शङ्ख्यं तव यश एव भ्रमः, त्वत्कीर्त्तिमेव शङ्खरूपतया वर्णयामः। शाङ्खिकैर्यः शङ्खो वाद्यते तत्तयश एव, तदुज्ज्वलतरं तव यश इत्यर्थः। शङ्खस्वनो हि मङ्गलदीपकः। त्वद्यशोऽपि लोकानां शुभाय तव पुण्यश्लोकत्वाद्भवति। यस्य शङ्खस्य यशसश्च समुद्रप्रभवत्वाच्छुभ्रतरत्वाच्च सोदर्यः समानोदर्यो भ्राता स प्रसिद्धो द्विजेन्द्रश्चन्द्रः दिवि स्पष्टं लिखितोऽस्ति निःप्रभत्वाच्चित्रलिखित इव निर्व्यापारः स्फुटोऽत्र दृश्यत इत्यर्थः। त्वमिह गगने प्रत्यूषसमये वाऽस्य चन्द्रस्य श्रद्धा निश्चितं श्रद्धाकरं शङ्खसोदरत्वास्तिक्यबुद्धिजनकं करच्छेदं किरणविनाशमपि पश्य, शङ्खेऽपि किरणा न सन्ति श्रस्यापीदानीं न सन्ति। किंचास्य हरिणसम्बन्धी हारिणो यः कलङ्कस्तद्रूपं नितरां अतिशयितं ग्लानेः श्यामतायाः स्थानमपि पश्य शङ्खस्याप्युदरभागे नितरां श्यामतास्ति सा चन्द्रेऽपि तस्मादपि चन्द्रस्य शङ्खसोदर्यत्वं निश्चितं तथा चन्द्रमपि तव यशो भ्रम इत्यर्थः। उक्तप्रकारेण शङ्खसोदर्य्यत्वं चन्द्रस्य यद्यप्यस्ति तदपि तथाच हरिण-

समन्वी यः कलङ्कस्तदस्य सुतरां ग्लानिस्थानं पश्य। चन्द्रस्य अद्वैयशङ्कभावत्वेऽपि निष्कलङ्कं शङ्खमेव तव यशो ब्रूमः। न तु सकलङ्कं चन्द्रमिति भाव इति वा। अथच हे राजन् तव यशःश्रेयसे यशोविवृद्धये सृष्टचन्द्रं विरचितस्तुतिवाक्यं शङ्ख-नामानं मुनिं ब्रूमः। शङ्खस्तव यशोवृद्धये स्तुतिं चकारेत्यर्थः। यस्य शङ्खमुनेः सोदर्यो भ्राता स लिखितनामा दिजेन्द्रो ब्राह्मणश्रेष्ठो दिवि स्पष्टमस्ति। इह लिखिते अद्वाकरं सत्यविश्वासकारकं अङ्का साक्षाल्लिखितं वा करयोः पाण्योः छेदं कर्त्तनमपि पश्य। तथा हरतीति हारीतस्तस्य शङ्खस्य भ्रातुरुद्यानफलहर्त्तुरस्य लिखितो यः सकलङ्कः पापं तदेव ग्लानिस्थानं पश्य। अथच श्रेयसे लोकानां कल्याणाय पुण्यश्लोको स्पष्टः नल इति शब्दो यस्मिन् एवम्भूतं तव यशः शङ्खनामानमृषिं ब्रूमः समानधर्मत्वात्, न तु तद्भ्रातरं कलङ्कित्वात्, सोऽपि धर्मार्थं स्तुतिवाक्यानि सृष्टवान्। यस्य भ्रातेति पूर्ववत्। लिखितस्य चौर्य्यं हस्तच्छेदश्च भारते ज्ञातव्यः। शाङ्खिकास्तत्प्रबोधार्थं शङ्खं वादयन्ति तस्माच्चौरमुक्तिष्ठेति भावः। लिखितमुनिरेव दिवि ताराशङ्खो जात इति केचित्। समानोदरे शयित इत्यर्थे सोदराद्य इति (पा॰ ४।४।१०८) यः। अस्मादेव निर्देशाद्यत्प्रत्ययविवक्षायामेव विभाषोदरे इति (पा॰ ६।३।८८) यान्तिकः समानस्य सः। हारिणः सम्बन्धेऽण्। पक्षे आवश्यके णिनिः ॥ ५६ ॥

ताराशङ्खविलोपकस्य जलजं तीक्ष्णत्विषो भिन्दतः
सारम्भं चलता करेण निबिडां निष्पीडनां लम्भितः।
छेदार्थोपहृताम्बुकम्बुजरजोजम्बालपाण्डूभव-
च्छंखच्छित्करपत्रतामिव वहत्यस्तंगतार्द्धो विधुः॥५७॥

तारेति। विशाखानक्षत्ररूपस्य शाङ्खमण्डलसम्बन्धस्य शङ्खाकारशङ्खस्य विलोपकः स्वप्रभया नाशकस्तस्य तथा जलजं कमलानि भिन्दतो विकासयतोऽथच शङ्खताराशङ्खविलोपकस्यात एव जलजं शङ्खं खण्डयतःतीक्ष्णत्विषः सूर्यस्येव शाङ्खिकशिल्पिनः सारम्भं सोद्योगं चलता प्रसरता अथच घर्षणवशात् साटोपं गमनागमने कुर्वता करेण रश्मिना पाणिना च निबिडां निष्पीडनां बाधां दृढां यन्त्रणाञ्च लम्भितः प्रापितः अस्तं गतमर्द्धं यस्य एतादृशो विधुश्चन्द्रः शंखच्छेदसौकर्य्यार्थमुपहृतमानीतं यदम्बु जलं तस्य कम्बुरजोजम्बालः छिद्यमानशंखसञ्जातरजश्चयकर्दमः उदकसम्बन्धाद्रजः कर्दमीभवति, तेन पाण्डूभवल्लोहमयत्वादधवलमपि धवलपङ्कवशात् धवलं भवत्, यच्छंखच्छित् शंखच्छेदकारि करपत्रं तद्भावं इव प्रातः समये वहति चन्द्र इत्यर्थः। शांखिकशिल्पिनो हि छेदसौकर्य्यार्थं छिद्यमानशंखादिदेशे जलं क्षिपन्ति। दृढतरग्रन्थिच्छेदादौ च करपत्रं करेण निबिडं पीडयन्ति शंखादिच्छेदकरपत्रस्यार्द्धचन्द्राकारं सञ्जातरजःपङ्कपाण्डुरत्वं भवति। अस्तमितार्द्धचन्द्रस्तादृक्करपत्रतुल्यो दृश्यत इत्यर्थः। सूर्योदयो जातस्तारा लुप्ताः कमलानि

यत्पाथोजविमुद्रणप्रकरणे निर्निद्रयत्यंशुमा-
न्दृष्टीः पूरयति स्म यज्जलरुहामक्ष्णा सहस्रं हरिः ।
साजात्यं सरसीरुहामपि दृशामप्यस्ति तद्वास्तवं
यन्मूलाऽऽद्रियतेतरां कविनृभिः पद्मोपमा चक्षुषः ॥ ५८ ॥

विकसितानि चन्द्रोऽर्द्धेनास्तमित इति भावः । जलजं पद्मे जा-
त्येकवचनं पाण्डुभवदिति चिः ॥ ५७ ॥

यदिति ॥ अंशुमान् पाथोजानां कमलानां विमुद्रणप्रक-
रणे उन्मीलनप्रस्तावे एव यद्यस्मात् दृष्टीर्लोकनेत्राणि निर्नि-
द्रयति विगतनिद्राः करोति उन्मीलयतीत्यर्थः । यस्माच्च हरिः
श्रीविष्णुः शिवपूजासमये एककमलन्यूनं जलरुहां कमलानां
सहस्रं स्वीयेनाक्ष्णा पूरयति स्म । तत्तस्मात् सरसीरुहां दृशामपि
वास्तवं अबाधितं साजात्यं तुल्यजातीयत्वं अस्ति । यत् साजात्यं
मूलमारोपकारणं यस्यास्ताद्दृशी यन्निबन्धना चक्षुषः पद्मेन
सहोपमा सादृश्यं कविनृभिः कालिदासादिभिः कविभिरा-
द्रियतेतरां अत्यादरेणोपनिबध्यते । यदि नेत्राणि कमलसजा-
तीयानि नाभविष्यन् तर्हि रविः कमलोन्मीलनप्रस्तावे तानि
नोदमीलयिष्यत्, श्रीविष्णुश्च कमलसहस्रं नेत्रेण नापूरयिष्यत्,
नह्यन्यप्रस्तावेऽन्यस्य योग्यताऽस्ति, तस्मात् दृशो कमलानाञ्च सा-
जात्यं वास्तवमस्त्येवेत्यर्थः । उदितः सूर्यः कमलानि विकसितानि
सर्व्वोऽपि जनः प्रबुद्धः, तस्मात् त्वमपि प्रबुद्धस्वेति भावः । विष्णुः
स्वचक्षुषा कमलसहस्रं पूरितवानिति लिङ्गपुराणादौ द्रष्टव्यं ।

अवैमि कमलाकरे निखिलयामिनीयामिक-
श्रियं श्रयति यत् पुरा विततपत्त्रनेत्रोदरं।
तदेव कुमुदं पुनर्दिनमवाप्य गर्भभ्रम-
द्विरेफरवघोरणावनमुपैति निद्रामुदं॥५९॥

विमुद्रणेति विगतमुद्रं करोतीत्यर्थे णन्ताद्भावे ल्युट्। निर्निद्रयतीति तत्करोतीति णिच्, पूरयतीत्यत्रापि। समाना जातिः साजात्यमिति विग्रहे चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् समानस्येति योगविभागात् समानस्य सः। वास्तवं आगतार्थे सम्बन्धे वा अण्। तत्पर्य्यायात् वस्तुशब्दात् प्रज्ञादित्वात् स्वार्थे वा। षष्ठो-पमा षष्ठीसमासः॥५८॥

अवैमीति। यत्कुमुदं कमलानामाकरे देवखातसरसि वा अथ च कमलायाः लक्ष्म्याः आकरे गृहे कोषागारे विततं विस्तारितं पत्त्ररूपनेत्राणामुदरं येन विततानि पत्त्राण्येव नेत्रमध्यानि येन तत्। विकस्वरं अथ च प्रसारितपक्ष्मनेत्रोदरं उन्मीलितनेत्रं सत् निखिलयामिन्याः सकलाया रात्र्याः सम्बन्धिनो यामिकस्य रात्रिचतुःप्रहरप्राहरिकस्य सकलरात्रिजागरूकस्य श्रियं शोभां पुरा श्रयति अशिश्रयत्। सायमारभ्य सूर्योदयावधि यद्विकसितमभूत्। अथ च सकलां रात्रिं जजागार, तदेव कैरवं पुनरिदानीं दिनमवाप्य गर्भे भ्रमन्तः सूर्यकिरणसङ्गमजातसंकोचवशान्निर्गन्तुमशक्तेरन्तःसञ्चारिणो द्विरेफास्तेषां निर्यन्धसङ्घातो रवस्तद्रूपा या घोरणा प्रसुप्त-

इह किमुषसि पृच्छाशंसिकिंशब्दरूप-
प्रतिनियमितवाचा वायसेनैष पृष्टः ।
भण फणिभवशास्त्रे तातङःस्थानिनौ का-
विति विहिततुहीवागुत्तरः कोकिलोऽभूत् ॥ ६० ॥

घर्घरा खाण्डवरस्तथा घनं निविडं यथा तथा निद्रामुदं निद्रासम्बन्धिसुखं उपैति, अन्तर्गतभ्रमरं सत् सङ्कुचतीत्यर्थः । अथ च यः कोपागारे सकलां रात्रिं जागर्त्ति स दिवसे घोरणाघनं यथा तथा निद्रातीत्यर्थः । इत्यहमवैमि मन्ये । पुराञ्चतीति पुरिलुङ्चास्मे (पा० ३।२।१२२) इति भूते लट् । घोरणेति घुरेधातोर्णिजन्तात् युच् ॥ ५९ ॥

इहेति । इह प्रभाते पृच्छाशंसिनः प्रश्नवाचिनः किमशब्दस्य प्रथमान्तं रूपं तेनैव प्रतिनियमिता प्रतिवर्णं शब्दान्तरभाषणाद् व्यावर्त्तिता वागेन कौ कौ इति नियतभाषिणा वायसेन काकेन फणिनः शेषाद्भवमुत्पन्नं महाभाष्यलक्षणं शास्त्रं पाणिनीयमिति यावत् । तत्र तातङ्लक्षणस्यादेशस्य स्थानिनौ आदेशिनौ कौ भण कथयेति पृष्टः छतप्रश्न एषः कोकिलः विहिता छता या तुहीति वाक् सैवोत्तरं यस्यैवम्भूतोऽभूत् । किं काकः प्रातः स्वभावत एव कौ काविति वदति कोकिलस्य तुही तुहीति । काकः स्वभावात् कौ काविति प्रथमद्वितीयवचनान्तं प्रश्नशब्दं ब्रूते । कोकिलस्य तुही तुही इति तयोरेषा तुस्थ्य तुही तुह्योस्तातङाशिष्यन्यतरस्यामिति पाणिनिसूत्रम-

दाक्षीपुत्रस्य तन्त्रे ध्रुवमयमभवत् कोऽप्यधीती कपोतः
कण्ठे शब्दौघसिद्धिक्षतबहुकठिनी शेषभूषानुयातः।
सर्वं विस्मृत्य दैवात् स्मृतिमुषसि गतां घोषयन्यो घुसंज्ञां
प्राक्संस्कारेण सम्प्रत्यपि धुवति शिरः पट्टिकापाठनेन॥६१॥

रणशीलः सन् तु हि स्थाने तातङोविधानात्तुहीति तातङः स्थानिनाविल्युत्तरं कोकिलो दत्तवान् किं। प्रभातं जातं काकादयः शब्दायन्त इति भावः। सूत्रवार्त्तिकयोर्महाभाष्येणैव दार्ढ्यापादनात् फणिभवेत्युक्तं। स्थानं प्रसङ्गः सोऽस्यनयोरिति स्थानिनौ अत इनौति इनिप्रत्ययः (पा०५।२।११५)॥ ६०॥

दाक्षीति। अयं श्राकर्ण्यमानः कोपि शब्दः कोपि कश्चित् कपोतः घुकलक्षणः पक्षी दाक्षीपुत्रस्य दक्षगोत्रसञ्जातमातृकस्य पाणिनेस्तन्त्रे पाणिनीयव्याकरणे अधीतं पठनमस्यास्तीति अधीती पठितपाणिनीयव्याकरणोऽभवत्। अनेकेषु पाणिनिशिष्येषु मध्ये कोऽपि कपोतरूपः शिष्योऽभूत् ध्रुवमित्यहमुत्प्रेक्षे। किम्भूतः तदध्ययनवशादेव कण्ठे देवादिशब्दौघानां सिद्धये उदाहरणसाधनाय क्षता घृष्टा बह्वी कठिनी खटिका तस्याः शेषः अङ्गुलीलग्नोऽवशिष्टभागस्तद्रूपया भूषयाऽनुयातः सम्बद्धः खटिकाशेषरेखया कण्ठेऽलिखत् इत्यर्थः।बालादिभिः पट्टिकादौ खटिकया लिखितं पठित्वा सरस्वतीमुद्रा सायं लिपिप्रोञ्छनमाङ्गुलिलग्नखटिकादिरजसा कण्ठे रेखां रचयन्तीति लोकरीतिः। कपोतस्य कण्ठः स्वभावेनैव धूसरो भवति। यः कपोतः सर्वमपि शास्त्रं

पौरस्त्यायां कुङ्कुमसुमनःश्रीजुषो वैजयन्त्याः
स्तोमैश्चित्तं हरति हरिति धौरकण्ठैर्मयूखैः।

विस्मृत्य दैवात् स्मृतिं गतां उपसि प्रातःस्मृतां दाधाघ्वदाविति पाणिनिकृतां घुसंज्ञां पुनर्विस्मरणभिया घोषयन् पुनः पुनः पठन् सन् भूयसि कालेऽतीतेऽपि सम्प्रत्यपि प्राक् काष्ठघटितपट्टिकालिखितसूत्रपाठादिपाठनेन संस्कारेण पटुतराभ्यासाहितवासनया शिरो धुवति, विस्मृतस्य प्रातःस्मृतिर्भवति । कपोतस्य प्रातर्घुघुशब्दं करोति, शिरश्च कम्पयति, तस्मादियमुत्प्रेक्षा । बालाश्च ग्रामाद्य काष्ठघटितपट्टिकासु खटिकादिलिखितं धवलाकारं सूत्रपाठादि आवेशेन घोषयन्तः शिरः कम्पयन्ति । योऽपि विस्मृतं पुनः स्मरति सोऽपि शिरः कम्पयति । दृचस्यापत्यं अत इञ् (पा० ४।१।९५) इतो मनुष्यजातेरिति (पा० ४।१।६५) ङीप् तस्योक्तस्य विषयस्य कर्मणि सप्तमी । अधीतमनेनेत्यधीती इष्टादेराकृतिगणत्वादिनिः । घोषयन् चौरादिकात् घुषेः शता । धुवति तौदादिकात् धूञ्कम्पन इत्यस्माच्कम्यङित्वाद्गुणनिषेधे उवङ् ॥ ६१ ॥

पौरस्त्यायामिति । जाम्बूनदतनुः उत्तमसुवर्णतुल्यस्वरूपो ऽतएव यज्ञसौधस्य वैजयन्त्याख्यस्योपरिवर्त्ती सुवर्णकलशरूपो ऽसौ भानुः पौरस्त्यायां हरिति प्राच्यां दिशि कुङ्कुमेन युक्तायाः कुङ्कुमवदा सुमनसः श्रीः शोभा तां जुषो भजन्त्या वैजयन्त्याः पताकायाः स्तोमैः समूहरूपैः धौरयुक्तकण्ठैर्लक्षणयाऽतिबालैर्म-

भानुर्जाम्बूनदतनुरसौ शक्रसौधस्य कुम्भः
स्थाने पानं तिमिरजलधेर्भाभिरेतद्भवाभिः ॥ ६२ ॥

यूथै. कृत्वा चित्तं हरति। इन्द्रसौधस्योपरिवर्त्तमाना बालतराः सूर्यकिरणास्तदीयरक्तपताकासमूहा इव, सूर्यश्च स्वर्णकलश इव शोभत इत्यर्थः। राजादिप्रासादेषु हि रक्ता भूयस्यः पताकाः सुवर्णकलशाश्च वर्त्तन्ते। यतोऽयं इन्द्रसौधस्य स्वर्णकुम्भरूपोऽत एवैतस्माद्भवाभिरुत्पन्नाभिर्भाभिः कर्त्रीभिः तिमिररूपोऽतिश्यामो जलधिस्तस्य यत्पानं ग्रासेन तिरोधापन तत् स्थाने नितरामुचितं। कुम्भोद्भवो ह्यगस्त्यः पूर्वसमुद्रमधात्, अतः तासामपि भानुरूपकुम्भोद्भवत्वात् समुद्रपानं युक्तमित्यर्थः। सूर्यऊर्ध्वमागतस्तिमिरञ्च सर्वं निरस्तमिति भावः। तोकैरिति पाठे तोकमपत्यं पताकाया अपत्यरूपैस्तत्सदृशैरित्यर्थः। पौरस्त्या पुरोदेशे भवा दक्षिणपश्चात्पुरसस्त्यगिति (पा०४।२।९८) त्यक् किति चेति (पा०७।२।११८) वृद्धिः। कर्तृकर्मणोः कृतीति (पा०२।३।६५) कर्तरि प्राप्तापि षष्ठी उभयप्राप्तौ कर्मणीति (पा०२।३।६६) नियमेन व्यावर्त्तितत्वात् तिमिरजलधेरित्यत्रैव भवति। भाभिरित्यत्र तु कर्त्तरि तृतीयैव ॥ ६२ ॥

द्विन्नैरेव तमस्तमालगहनग्रासे द्रवीभावुकै-
रुस्नैरस्य सहस्रपत्रसदसि व्यश्राणि यस्तोत्सवः।
घर्माणां रयचुम्बिनं वितनुते तत् पिष्टपिष्टीकृत-
क्ष्मादिग्व्योमतमोऽघमोघमधुना मोघं निदाघद्युतिः॥ ६३॥

द्विन्नैरिति। तमस्तमालानां तिमिररूपातिश्यामलतरुविशेषाणां गहनस्य गाम्भीर्यस्यैव ग्रासे विनाशे द्रवीभावुकैर्दवनवक्लिन्नं व्रजद्भिः द्विन्नैरल्पसङ्ख्यैरेव अस्य सूर्यस्योस्रैः किरणैः सहस्रपत्राणां सदसि आकरे यस्तोत्सवः दिनसम्बन्धी हर्षो विकासो यस्माद्व्यश्राणि वितीर्णः तत्तस्मात् कारणान्निदाघद्युतिः सूर्यः घर्माणामुष्णानां किरणानां ओघं समूहं अधुना द्विचैरेव करैस्तमोविनाशे पद्मविकासे च जाते रयचुम्बिनं वेगवन्तं मोघं निष्फलं वितनुते विस्तारयति। किम्भूतं अतएव पिष्टं पिष्टं अतस्तत्कृतं पिष्टपिष्टीकृतं अत्यन्तचूर्णीकृतं क्ष्मादिव्योम्नां भूदिगाकाशानां तम एवाघं मालिन्यात्पातकं येन। तिमिरविनाशस्य कमलविकाशस्य च द्विचैरेव किरणैस्तत्करणे पिष्टपेषणवद्वैयर्थ्यमित्यर्थः। दवदावौ वनारण्यवह्नी किरणोस्रमयूखेत्यादि, घस्रो दिनाहनी इत्यादमरः। द्विचैः द्वौ त्रयो वा द्विचाः सङ्ख्ययाव्ययेति (पा० २।२।२५) बहुव्रीहौ, बहुव्रीहौ सङ्ख्येये डजिति (पा० ५।४।७३) डच्। द्रवीभावुकैः भुवो लषपतपदेति (पा० ३।२।१५४) ताच्छील्यादावुकञ्। व्यश्राणि दानार्थाच्छ्रणतेश्चौरादिकात्कर्मणि चिण्।

दूरारूढस्तिमिरजलधेर्वाडवश्चित्रभानु-
र्भानुस्ताम्यद्वनरुहवनीकेलिवैहासिकोऽयं।
न स्वात्मीयं किमिति दधते भास्वरश्वेतिमानं
द्यामद्यापि द्युमणिकिरणश्रेणयः शोणयन्ति ॥ ६४ ॥

रयचूर्णितं पिष्टपिष्टीकृतमिति च कर्मणि भावे वा निष्ठा ॥ ६३ ॥

दूरेति। अयं भानुः तिमिरजलधेस्तमःसमुद्रस्य शोषकत्वाद्वाडवो वडवानलरूपश्चित्रभानुरग्निस्तथा ताम्यन्त्याः खिद्यन्त्या वनरुहवन्याः कमलवन्या एव कान्तायाः केल्या क्रीडया वैहासिकः परिहासकः क्रीडानर्मकारी, हेलामात्रेण विकासक इत्यर्थः। तथा दूरं गगनमार्गमारूढ ऊर्ध्वमागतः एवम्भूतः सन् स्वात्मीयं स्वीयतेजोरूपत्वात् सहजं भास्वरं श्वेतिमानं स्वपरप्रकाशकं शुक्लभास्वररूपत्वमद्यापि दूरारूढत्वेऽपि किमिति कुतो न दधते धारयति, तथा द्युमणेः सूर्यस्य किरणश्रेणयश्चाद्यापि द्यां गगनं किमिति न शोणयन्ति रक्तीकुर्वन्तीति प्रश्नद्वयं। यद्वा स्वीयं रूपं रविर्न धत्त इति कुतो ज्ञातमित्याशङ्क्य प्रत्ययं प्रमाणयति, यस्मादद्यापि सूर्यकिरणपंक्तयः शोणयन्ति तस्माद्भास्वरश्वेतिमा सूर्येण न धृत इति ज्ञायत इत्यर्थः। एवंविशिष्टः सूर्यो दूरारूढः सञ्जातस्तस्मादद्यापि सूर्यकिरणाः स्वीयं शुक्लभास्वरत्वं किमिति न दधते न धारयन्ति। ऊर्द्ध्वमागतः सूर्यः कमलानि च विकसितानि तस्माच्छीघ्रमुत्तिष्ठेति भावः।

प्रातर्वर्णनयाऽनया निजवपुर्भूषाप्रसादानदा-
द्देवी वः परितोषितेति निहितामान्तःपुरीभिः पुरः।
स्नाता मण्डनमण्डलीं परिदधुर्माणिक्यरोचिर्मय-
क्रोधावेगसरागलोचनरुचा दारिद्र्यविद्राविणीम्॥ ६५ ॥

चित्रभानुर्विभावसुरित्यमरः। दूरारूढः गम्यादिदर्शनात्समासः। वैहासिक इति विहासे नियुक्तः सप्रयोजनं शिल्पमस्येति। तत्र नियुक्त (पा० ४।४।६९) इति वा शिल्पमिति (पा० ४।४।५५) ठक्। प्रयोजनमिति (पा०५।१।१०९) ठञ्। स्वात्मीयं वृद्धाच्छः (पा० ४।२।११४)। दधते दधधारण इत्यस्यैकवचनान्तं धात्वस्य बहुवचनान्तस्येति। श्वेतिमा पृथ्व्यादिः। शोणं कुर्वन्तीति तत्करोतीति णिजन्ताणाविष्टवद्भावः पुंवद्भावः टिलोपो वा॥ ६४॥

प्रातरिति। स्नाता मण्डनमण्डलीं भूषणश्रेणीं परिदधुः तत्तदस्वर्णाद्यवयवेषु धारयामासुः। किम्भूतां आन्तःपुरीभिरवरोधसञ्चारिणीभिः सखीभिरित्युक्ता पुरो मागधानामग्रे निहितां स्थापितां। इति किं। हे मागधाः अनया प्रातर्वर्णनया प्रयोजिकया परितोषिता नितरां सन्तोषं प्रापिता देवी कृताभिषेका राज्ञी भैमी निजवपुर्भूषाः स्वीयशरीरालङ्कारभूतानेकविधसुवर्णमणिप्रभृतीनि भूषणान्येव प्रसादान् पारितोषिकाणि वो युष्मभ्यं अदादिति। पुनः किम्भूतां माणिक्यरोचिर्मयया पद्मरागप्रभारूपया क्रोधस्य आवेगः आडम्बरस्तेन

आगच्छन्भणतामुषः क्षणमथातिथ्यं दृशोरानशे
स्वर्गङ्गाम्बुनि वन्दिनां कृतदिनारम्भाप्लुतिर्भूपतिः।
आनन्दादतिपुष्पकं रथमधिष्ठाय प्रियायौतुक-
प्राप्तं नैरवरागतैरविदितप्रासादतो निर्गमः॥ ६६॥

सरागलोचनरुचा अरुणनेत्ररुचा कृत्वा दारिद्र्यस्य विद्राविणीं पलायनकारिणीं मयि स्थितायामप्यत्र त्वं कथं नाम स्थातुमिच्छसि इति क्रुद्धयाऽनया माणिक्यप्रभारूपनेत्रारुणकान्त्या कृत्वा दारिद्र्यं दूरादपसारितं। एवं प्रभातवर्णने क्रियमाणे भैम्या निजशरीरभूषणैस्ते सम्मानिता इत्यर्थः। अन्योऽपि रोषारुणलोचनरुचा किञ्चिद्विद्रावयति। आन्तःपुरीभिरिति बहुत्वेन माणिक्येत्यादिना भूषणानां भूयस्त्वममूल्यत्वञ्च सूचितं। देवी अदादित्यनेन च नलः स्नानार्थं गतः प्रासादे नास्तीति सूचितं। प्रातर्लुप्तपदीकमव्ययं। परितोषिता प्रसन्नाञ्चिता। आन्तःपुरीभिः समन्ध्येऽन्। अन्तःपुरिकेति पाठे अन्तःपुरशब्दात् अन्तःपूर्वपदाट्ठञिति (पा॰ ४।३।६०) भवार्थे ठञ्। रोचिर्मयेति स्त्रियाः पुंवदिति (पा॰ ४।३।२४) पुंवत्॥ ६५॥

आगच्छन्निति। भूपतिर्नलः वन्दिनां दृशोरातिथ्यं प्रेक्षणविशेषद्योतितप्रेमभक्तिबाहुल्येन गोचरत्वं आनशे लेभे। किम्भूतानां क्षणमात्रमुषः प्रभातसमयं भणतां वर्णयतां। किम्भूतः स्वर्गङ्गाम्बुनि मन्दाकिनीजले कृतदिनारम्भाप्लुतिः कृतप्रातःस्नानः, तथा अवरागतैर्नलवदिर्गमनानन्तरमागतैर्मागधै-

रविदितोऽज्ञातः प्रासादतो निर्गमः राजगृहाद्बहिर्निर्गमो यस्य। तथा प्रियायैतुके भैमीपाणिग्रहणसमये कन्यादानप्रतिष्ठाङ्गतया दीयमाने वस्तुनि मध्ये प्राप्तं अतिपुष्पकं अतिक्रान्तपुष्पकाख्यकुवेरविमानं अतिरमणीयवेगवन्तं सर्व्वत्राप्रतिहतगमनञ्च रथमधिष्ठायारूढ़्यानन्दाज्जवातिशयसञ्जातहर्षादागच्छन्। मागधागमनात् पूर्व्वं न तु वर्णनानन्तरं प्रबुद्धः प्रासादान्निर्गच्छन्नित्यर्थः। अतएव भैम्यैवेति समानिता इति पूर्व्वश्लोके उक्तं। तस्याः परमधार्म्मिकत्वं सूचितं। क्षतदिनारम्भानुतिरागच्छन्नित्यनेन वक्ष्यमाणभैमीप्रत्युद्गमनं उत्तरसर्गङ्गतिश्च सूचिता। नलस्य पुण्यश्लोकत्वात् सर्व्वत्राप्रतिहतत्वात् तस्य च रथस्य पूर्व्वमेव सुमलङ्घ्याद्रिसमुद्रकापथमित्यादिना सर्व्वत्राप्रतिहतगतित्वोक्तेश्च। अतिपुष्पकत्वोक्तेः स्वर्गगमनोक्तिर्युक्तैव। आनशे अश्नोतेर्यति (पा०७।४।७२) नुट्। अतिपुष्पकं अत्यादयः क्रान्ताद्यर्थे इति (पा०२।२।१८।वा०५) समासः। रथं अधिशीङ्स्थासाधारस्य (पा०१।४।४६) कर्मत्वं। यौतकप्राप्तमिति पाठे कर्त्तृकरणेति (पा०२।१।२३) समासः। अवरागतैः काला इति (पा०२।१।२८) द्वितीया समासः। प्रासादतो निर्गमः पञ्चमीतियोगविभागात् समासः पश्चाद्बहुव्रीहिः ॥ ६६ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
एकां न त्यजतो नवार्थघटनामेकान्नविंशे महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गोज्ज्वलः॥ ६७॥

श्रीहर्षमिति। पूर्वार्धः पूर्ववत्॥ मुख्यां नवार्थघटनां नवार्थनिर्मितिमत्यजतोऽमुञ्चतः नूतनमेव प्रमेयं सर्वत्र वदतः श्रीहर्षस्य। एकान्नविंशः विंशतेः पूरण इत्यर्थे डटि विंशतेर्डितीति (पा॰ । । ) लोपे च विंशः। तत एको नविंश इति, तृतीयेति योगविभागात् समासे एकादिसैकस्य चाऽदुगिति (पा॰६।३।७६) नञः प्रकृतिभावः एकशब्दस्यादुगागमश्च॥ ६७॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे एकान्नविंशः सर्गः॥

अद्वाराद्धगुरुस्त्रयीष्टतदृढग्रन्थिः समासादय-
त्वेतत्काव्यरसोर्म्मिमज्जनसुखव्यासज्जनं सज्जनः ॥ १५४ ॥
ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वराद्
यः साक्षात् कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवं।

गुरुणा पूर्व्वमन्नया अपि ग्रथाः कृता व्याख्यया सुबोधाः कृता दृढाः स्वरूपतो दुर्बोधा ग्रन्थयोऽस्मिं स गुरुसम्प्रदायावगतार्थोऽत एव दर्पराद्वित्यात् सज्जनः साधुरेतत्काव्यस्य रसोर्म्मिरन्तलहरी तस्यां मज्जनं तज्जनितसुखेषु विशेषेण आसमन्ताद्भावेन च सज्जनमवस्थानं समासादयतु प्राप्नोतु, गुरुपरम्परयाऽपि विना एकस्यापि पद्यस्यार्थो बोद्धुं न शक्यते तस्माद् गुरुपरम्परया एवाध्येयमिदं काव्यमित्यर्थः। यश्चेदं गुरुपरम्परया अधीते स सततं सुखी भवति इति महाकविस्तस्याशिषं ददाति। अस्मिन् पठितोत्यस्य च विषयश्चेति कर्म्मणि सप्तमी। आराद्धेति राधेरनुदात्तत्वादिडभावः॥ १५४॥

इदानीं पण्डितानन्दजननद्वारा स्वकृतेरभ्युदयमाशास्ते। ताम्बूलेति। यः कान्यकुब्जेश्वरात् सकाशात् सकलपण्डिताधिक्यव्यञ्जनं ताम्बूलद्वयं विद्वद्योग्यमासनञ्च लभते। न केवलं राजपूज्य एव किन्तु यः समाधिषु अष्टाङ्गयोगेषु ध्यानेषु वा विषये प्रमोदार्णवं परमानन्दस्वरूपं परं वागाद्यगोचरं ब्रह्म साक्षात्कुरुते। न परं पूर्व्वोक्तगुणविशिष्टो ब्रह्म विदेव किन्तु यदीयं काव्यं मधुवर्षि, अतिसरसत्वादमृतवर्षि। न परं पूर्व्वोक्तगुणविशि-

यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियं ॥ १५५ ॥

श्रीऽतिसरसो महाकविरेव, किन्तु तर्कशास्त्रेष्वपि यस्योक्तयः धर्षिताः पराभूताः परे प्रतिवादिनो याभिस्तादृश्यः। तस्य विद्वच्चक्रचूडामणेः श्रीहर्षकवेरियं काव्यरचनारूपा कृतिः सुकृतिनां सुधियां मुदे आनन्दायाभ्युदीयात्, कृतिनामानन्दं कुर्व्वती सती आकल्पमतिवृद्धिं प्राप्नुयादित्याशीः। सर्व्वत्र यच्छब्दनिर्व्वाहो गुण एव। अभ्युदीयादिति इण् गतावित्यस्य रूपं ॥ १५५ ॥

सन्तः सन्तु परप्रयोजनकृतः कल्पद्रुमन्तः सदा
यस्मिन्नेव पथि प्रवर्त्तनपराः सत्कीर्त्तयस्तापरे।
अन्ये निःस्पृहणाश्रितश्रुतिपथा दीव्यन्तु भव्याशयाः
काकन्तः कलहप्रियाः खलजना नश्यन्तु जीवन्तु वा ॥
वासनामस्य रामस्य किङ्करस्य जगत्पतेः।
न चेत्पूरय कल्पेश कल्पते तव किङ्करः ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते उत्तरनैषधीयप्रकाशे द्वाविंशतितमः सर्गः ॥ २२ ॥

समाप्तोऽयं ग्रन्थः ॥